राजकीयैरचिन्त्येष तपस्व्येति यदा यदा । तदा तदा भवत्यस्मत्स्वामिनोऽशिवमेव हि ॥ ४१ ॥
ते चारक्षानथादिक्षंस्तपस्वी मंत्रिसूरपि । प्रविशन्नप्यसौ सर्प इव निर्वास्यतामहो ॥ ४२ ॥
कृते तथैवारक्षैश्च निदानं तापसोऽकरोत् । भूयासमहमेतस्य वधाय नृपतेरिति ॥ ४३ ॥
मृत्वा च तापसो जज्ञे सोऽल्पर्द्धिर्व्यानमन्तरः । राजापि तापसो भूत्वा तामेव गतिमाप सः ॥ ४४ ॥
च्युत्वा सुमंगलः सोऽथ प्रसेनजिदिलापतेः । सुतोऽभूच्छ्रेणिको नाम धारिणीकुक्षिसंभवः ॥ ४५ ॥
इतश्च तत्रैव पुरे रथिको नाग इत्यभूत् । प्रसेनजिन्महीपालचरणांभोजषट्पदः ॥ ४६ ॥
दयादानार्हतो दाता परनारीसहोदरः । वीरो धीरोऽधीतकलः स सर्वगुणभूरभूत् ॥ ४७ ॥
नामधेयेन सुलसाऽ[1]नलसा पुण्यकर्मणि । बभूव गेहिनी तस्य पुण्यश्रीरिव देहिनी ॥ ४८ ॥
पतिव्रतात्वसम्यक्त्वार्जवप्रभृतयो गुणाः । तस्यां युगपदावात्सुः सपांशुक्रीडका इव ॥ ४९ ॥
एकदा नागरथिकोऽपुत्रोऽचिन्तयदुच्चकैः । स [2]नालनलिनाकारकरतल्पशयाननः ॥ ५० ॥
पुत्रमुल्लापयिष्यामि लालयिष्यामि चेति मे । अपुत्र[3]स्यावकेशीव निष्फलोऽभून्मनोरथः ॥ ५१ ॥
न बाल्याद्ब्रह्म विदधे पुत्रवक्त्रं च नैक्षि यैः । धिक् तेषां कामवैवश्यं लोकद्वितयवंचकम् ॥ ५२ ॥
इति चिं[4]ताविवर्णास्यं पंकमग्नमिव द्विपम् । पतिं प्रोवाच सुलसा विनयाञ्चिताञ्जलिः ॥ ५३ ॥
हस्तशय्या मुखस्येयं चिन्तामाख्याति नाथ ते । किं चिन्तयस्यादिश मे मां चिन्ताभागिनीं कुरु ॥५४॥

---

१ आलस्यरहिता । २ पद्मनालस्य नलिन तदाकारो यः करस्तदेव तल्प तस्मिन् शेते इति शयमेतादृशमाननं यस्य सः । ३ वन्ध्य इव । ४ चिन्तया मलिनमास्य यस्य तम् ।

# अथ त्रिषष्टिशलाकापुरुषचरित्रम्

## दशमं पर्व

# श्रीमहावीरस्वाम्यादीनां चरित्राणि.

स उवाच ममाख्यातं वैद्येन त्वगृहेऽस्ति यत् । लक्षपाकं महातैलं ग्लानार्थं तत्प्रदीयताम् ॥ ६८ ॥
सफलस्तैलपाकोऽयं साधावुपकरिष्यते । इत्युदीर्य मुदा तैलकुंभमभ्यानिनाय सा ॥ ६९ ॥
स तैलकुंभो देवेन स्वशक्त्या पातितः करात् । झाक्तु झडिति पुस्फोट कुलायगलितांडवत्[1] ॥ ७० ॥
तैलकुंभो द्वितीयोऽपि तया पुनरढौक्यत । तथैव सोऽपि स्फुटितो न पुनार्विषसाद सा ॥ ७१ ॥
तैलकुंभस्तृतीयोऽपि तया नीतस्तथास्फुटत् । सा दध्यौ चाल्पपुण्यास्मि मोघयाञ्चेन[2] साधुना ॥ ७२ ॥
देवस्ततो निजं रूपं धृत्वेति निजगाद ताम् । भद्रे तव श्राविकात्वं प्रशशंस दिवस्पतिः[3] ॥ ७३ ॥
शक्रप्रशंसया चैव विस्मितः स्वर्गवास्यहम्[4] । त्वत्परीक्षार्थमायातस्तुष्टोऽस्मि च वरं वृणु ॥ ७४ ॥
सुलसा श्राविकाप्यूचे यदि तुष्टोऽसि तन्मम । देहि पुत्रमपुत्राया नान्यदिष्टमतः परम् ॥ ७५ ॥
द्वात्रिंशतं स गुटिका दत्वा देवोऽब्रवीदिदम् । क्रमेण भक्षयेरेतास्तावन्तः स्युः सुतास्तव ॥ ७६ ॥
पुनः प्रयोजनवशात् स्मर्तव्योऽहं त्वयानघे । एष्यामि भूय इत्युक्त्वा त्रिदशः स तिरोदधे ॥ ७७ ॥
अचिन्तयच्च सुलसा क्रमेण गुटिकादनात् । बहूनां बालरूपाणां मैर्दिष्यति[5] हि कोऽशुचिम् ॥ ७८ ॥
तस्मात्प्राश्नाम्यहं सर्वा युगपद्गुटिका इमाः । यथैकोऽपि भवेत् पुत्रो द्वात्रिंशल्लक्षणान्वितः ॥ ७९ ॥
इत्थं विमृश्य स्वधिया सा प्राश्नाद्गुटिकाः समाः । तथा बुद्धिरियं जज्ञे नान्यथा भवितव्यता ॥ ८० ॥
उत्पेदिरे तदुदरे गर्भा द्वात्रिंशदप्यथ । तैर्गर्भैरसहा साभूद्वल्लीव बहुभिः फलैः ॥ ८१ ॥
सा गर्भान् धर्तुमसहा वज्रसारान् कृशोदरी । कायोत्सर्गस्थिता देवं सस्मार पुनरेव तम् ॥ ८२ ॥

१ नीडपतिताण्डवत् । २ निष्फला याञ्चा यस्य तेन । ३ इन्द्रः । ४ स्वर्गे वसतीति तथा देव इति यावत् । ५ क्षालयिष्यति ।

येन केनाप्युपायेन परान्[1] एष निरोत्स्यति । जेष्यते च स्वयं पृथ्वीं राजा तेनेति रञ्जितः ॥ ९८ ॥
राजा पुनः परीक्षार्थं सुतानामन्यदा ददौ । मोदकानां करण्डांश्च पयस्कुम्भांश्च मुद्रितान् ॥ ९९ ॥
इमां मुद्रामभंजंतो भुञ्जीध्वं मोदकानमून् । पयः पिबत मा कृद्वं छिद्रमित्यादिशन्नृपः ॥ १०० ॥
विना श्रेणिकमेतेषां कोऽपि नाभुक्त नापिबत् । बुद्धिसाध्येषु कार्येषु कुर्युरूर्जस्विनो[2]ऽपि किम् ॥ १०१ ॥
वलयित्वा वलयित्वा श्रेणिकस्तु करंडकम् । बुभुजे मोदकक्षोदं[3] शलाकाविवरच्युतम्[4] ॥ १०२ ॥
रूप्यशुक्त्या घटस्याधो गलद्वार्बिन्दुपूर्णया[5] । स पयोऽपि पपौ किं हि दुःसाध्यं सुधियां धियः ॥ १०३ ॥
एवं परीक्षानिर्व्यूढं[6] श्रेणिकं बुद्धिसंपदा । अमंस्त राज्यार्हतया कुशाग्रनगरेश्वरः ॥ १०४ ॥
कुशाग्रे चाभवद्दीर्घं[7] शीघ्रमग्नेरुपद्रवः । ततश्चाघोषणां राजा प्रसेनजिदकारयत् ॥ १०५ ॥
उत्थास्यति पुरे वह्निर्यस्य यस्य गृहादिह । स स निर्वासनीयोऽस्मात् पुरान्मय इवामयी ॥ १०६ ॥
सूपकारप्रमादेन राज्ञ एवान्यदा गृहात् । उदस्थादग्निरग्निर्हि न स्वः[10] कस्यापि विप्रवत् ॥ १०७ ॥
तस्मिन् प्रदीपने वृद्धिमुपेयुषि महीपतिः । यो यं गृह्णाति मद्गेहात्तत्तस्येत्यादिशत् सुतान् ॥ १०८ ॥
सर्वे कुमारा हस्त्यादि समादाय यथारुचि । निर्ययुः श्रेणिकस्त्वेकां भंभामादाय निर्ययौ ॥ १०९ ॥
किमेतत्कृष्टमित्युक्तो नृपेण श्रेणिकोऽवदत् । जयस्य चिह्नं भंभेयं प्रथमं पृथिवीभुजाम् ॥ ११० ॥
अस्याः शब्देन भूपानां दिग्यात्रामंगलं महत् । रक्षणीया क्षमापालैः स्वामिंस्तदियमेव हि ॥ १११ ॥

---

१ शत्रून् । २ बलिनोऽपि । ३ मोदकचूर्णम् । ४ शलाकाना विवराण्यन्तराणि तेभ्यश्च्युतम् । ५ गलन्तो ये जलबिन्दवस्तैः पूर्णया । ६ परीक्षया सुसपन्नम् । ७ वारंवारम् । ८ उग्रः । ९ रोगी । १० स्वकीयः ।

कलिकालसर्वज्ञ श्रीहेमचंद्राचार्यविरचित

# श्रीत्रिषष्टिशलाकापुरुषचरित्र.

## पर्व १० मुं.

श्रीमहावीरस्वामी विगेरेनां चरित्र.

मुर्शिदाबादनिवासी बाबुसाहेब राय बुधसिंहजी बहादूर

तथा

मुंबइनिवासी शेठ वीरचंदभाइ दीपचंद सी. आइ. इ. नी

मददथी

छपावी प्रसिद्ध करनार

श्रीजैनधर्मप्रसारकसभा.

भावनगर.

वीर संवत् २४३५. विक्रम संवत् १९६५.

मुंबई-निर्णयसागर प्रेसमां बाळकृष्ण रामचंद्र घाणेकरे जैनधर्मप्रसारक सभासाटे छाप्युं.

मंत्रिपञ्चशतीं पूर्णां कर्तुं नरपतिस्ततः । लोके गवेषयामास कंचिदुत्कृष्टपूरुषम् ॥ १५६ ॥
ततश्च तत्परीक्षार्थं शुष्ककूपे निजोर्मिकाम् । प्रचिक्षेप क्षितिपतिर्लोकानित्यादिदेश च ॥ १५७ ॥
आदास्यते करेणैतामूर्मिकां यस्तटस्थितः । तस्य धीकौशलक्रीती[1] मदीया मंत्रिधुर्यता ॥ १५८ ॥
तेऽप्यूचुर्यदशक्यानुष्ठानमस्मादृशामिदम् । ताराः करेण यः कर्षेत्स इमामूर्मिकामपि ॥ १५९ ॥
ततोऽभयकुमारोऽपि संप्राप्तस्तत्र सस्मितम् । ऊचे किं गृह्यते नैषा किमेतदपि दुष्करम् ॥ १६० ॥
तं दृष्ट्वा च जना दध्युः कोऽप्यसावतिशायिधीः । समये मुखरागो हि नृणामाख्याति पौरुषम् ॥ १६१ ॥
ऊचुस्ते तं गृहाणेमामूर्मिकां तत्पणीकृताम् । अर्धराज्यश्रियं पुत्रीं धुर्यतां चैषु मंत्रिषु ॥ १६२ ॥
ततोऽभयकुमारोऽपि मुद्रिकां कूपमध्यगाम् । आर्द्रगोमयपिंडेन निजघानोपरि स्थितः ॥ १६३ ॥
प्रक्षिप्योपरि तत्कालं ज्वलन्तं तृणपूलकम् । सद्यः संशोषयामास गोमयं तन्महामतिः ॥ १६४ ॥
नन्दाया नन्दनः शीघ्रं कारयित्वाथ सारणिम् । वारिणापूरयत् कूपं विस्मयेन च तं जनम् ॥ १६५ ॥
तेजोमयं श्रेणिकसूः करेण तरदाददे । धीमद्भिः सुप्रयुक्तस्य किमुपायस्य दुष्करम् ॥ १६६ ॥
तस्मिन् स्वरूपे चारनैर्विज्ञप्ते जातविस्मयः । नृपोऽभयकुमारं द्रागाजुहावात्मसन्निधौ ॥ १६७ ॥
अभयं श्रेणिकः पुत्रप्रतिपत्त्याथ सस्वजे । बन्धुरज्ञायमानोऽपि दृष्टो मोदयते मनः ॥ १६८ ॥
कुतस्त्वमागतोऽसीति पृष्टः श्रेणिकभूभुजा । आगतोऽस्मि पुराद्वेणातटादित्यभयोऽवदत् ॥ १६९ ॥
राजापृच्छद्भद्रमुख सुभद्र इति विश्रुतः । श्रेष्ठी तत्रास्ति तस्यापि नन्दानाम्नी च नन्दना ॥ १७० ॥

---

[1] बुद्धिकुशलतया क्रीता ।

पृथग्राज्ञीभवास्तस्य बभूवुः सप्त कन्यकाः । सप्तानामपि तद्राज्यांगानां सप्तेव देवताः ॥ १८६ ॥
प्रभावती पद्मावती मृगावती शिवापि च । ज्येष्ठा तथैव सुज्येष्ठा चिल्लणा चेति ताः क्रमात् ॥ १८७ ॥
चेटकस्तु श्रावकोऽन्यविवाहनियमं वहन् । ददौ कन्या न कस्मैचिदुदासीन इव स्थितः ॥ १८८ ॥
तन्मातर उदासीनमपि ह्यापृच्छ्य चेटकम् । वराणामनुरूपाणां प्रददुः पंच कन्यकाः ॥ १८९ ॥
प्रभावती वीतभयेश्वरोदयनभूपतेः । पद्मावती तु चंपेशदधिवाहनभूभुजः ॥ १९० ॥
कौशाम्बीशशतानीकनृपस्य तु मृगावती । शिवा तूज्जयिनीशस्य प्रद्योतपृथिवीपतेः ॥ १९१ ॥
कुंडग्रामाधिनाथस्य नन्दिवर्धनभूभुजः । श्रीवीरनाथज्येष्ठस्य ज्येष्ठा दत्ता यथारुचि ॥ १९२ ॥
सुज्येष्ठा चिल्लणा चापि कुमार्यावेव तस्थतुः । रूपश्रियोपमाभूते ते द्वे एव परस्परम् ॥ १९३ ॥
ते दिव्याकारधारिण्यौ दिव्यवस्त्रविभूषणैः । अवियुक्ते सदाभूतां तारे इव पुनर्वसू ॥ १९४ ॥
कलाकलापकुशले श्रुतार्थोपनिषद्विदौ[1] । मूर्ती इव सरस्वत्या रेमाते ते परस्परम् ॥ १९५ ॥
सममानर्चतुर्देवं धर्मं शुश्रुवतुः समम् । चक्रतुः सममन्यच्च ते द्वे एकात्मिके इव ॥ १९६ ॥
अपरेद्युश्च सुज्येष्ठाचिल्लणाभ्यामलंकृतम् । कन्यान्तःपुरमभ्यागादेका स्थविरतापसी ॥ १९७ ॥
सा च व्याख्यच्छौचमूलं धर्मं पापविनाशकम् । उत्फुल्लगल्लमज्ञानपर्षदीव[2] तयोः पुरः ॥ १९८ ॥
सुज्येष्ठावोचदाः शौचमशुभाश्रवरूपकम् । अशुभश्चाश्रवः पापहेतुः पापच्छिदे कथम् ॥ १९९ ॥

१ शास्त्राणामर्थमुपनिषद च ब्रह्मविद्या वित्त इति तथा । २ उत्फुल्लौ प्रफुल्लौ गल्लौ यस्या क्रियायामिति क्रियाविशेषणम् ।

# प्रस्तावना.

श्रीमदिदं त्रिषष्टिशलाकापुरुषचरितस्य चरमं (दशमं) पर्व त्रयोदशसर्गात्मकं, सर्वपर्वभ्यो बृहत्तरं, विस्तृतश्रीमहावीरचरितात्मकं, द्वादशवर्षात्मकछाद्मस्थविहारवर्णनेन गरिष्ठं, गणधरवादामृतरसास्वादं, प्रासंगिकपुरुषरत्नानां चरितेन मनोहरं च वरिवर्ति ॥

अस्मिन् पर्वणि श्रेणिककोणिकसुलसाभयकुमारचेटकराजहल्लविहल्लमेघकुमारनन्दिषेणचेलणादुर्गन्धार्द्रकुमारऋषभदत्तदेवानन्दाजमालिशतानीकचण्डप्रद्योतमृगावतीयासासासाऽऽनन्दादिश्राद्धदशकगोशालकहालिकप्रसन्नचन्द्रदर्दुरांकदेवगौतमस्वामिपुण्डरीककण्डरीकाम्बडदशार्णभद्रधनाशालिभद्ररौहिणेयोदायन(शतानीकपुत्र)चरमराजर्ष्युदायनप्रभावतीकपिलकेवलिकुमारनन्दिसुवर्णकारोदायि(कोणिकपुत्र)कुलवालुककुमारपालादीनां चरितानि सुबोधकराणि वर्णितानि । तत्रापि श्रेणिककोणिकाभयकुमारार्द्रकुमारदर्दुरांकदेवचरमराजर्ष्युदायनगोशालादीनां तु ईदृशाः वृत्तांताः सविस्तरतरा वर्णिताः, येऽन्यग्रन्थेष्वलभ्यप्राया वर्तन्ते । तथा चात्र पंचमषष्ठारकयोरुत्सर्पिणीकालस्य च भाविवृत्तमपि प्राचुर्येण प्रपञ्चितमित्याद्यनेकवर्णनपरिपूर्णमिदं चरितं (पर्व) प्रसंगप्राप्तैरनुपमैरुपदेशैर्देशनाभिः शक्रकृताभिस्तर्कशास्त्रानुसारिणीभिर्जिनस्तवनाभिश्च सहृदयानां हृदयान्यानन्दवैराग्यधर्मश्रद्धामयानि चर्कर्ति । किं बहुना ? पर्वेदं साद्यन्तं, सूक्ष्मधियावलोकनीयं विद्वद्भिर्वाचकवृन्दैरित्येतावदेवाशास्महे इति ॥

अपृच्छच्च महाभागे किमियं स्त्रीमतल्लिका । आलेखि स्वप्रतिभया रूपदर्शनतोऽथवा ॥ २१३ ॥
तापस्यूचे यथाशक्ति दृष्टं रूपमलेख्यदः । यादृक्तु वर्तते राजंस्तादृक् स्यादर्पणे यदि ॥ २१४ ॥
चित्रस्थामपि तां राजा प्रपश्यन् प्रेममोहितः । आलिलिंगिषुरिवाभूच्चुचुंबिषुरिवाथवा ॥ २१५ ॥
ऊचे च मुक्तावलिवद्वंशे कस्मिन्नभूदियम् । दिवं मृगांकलेखेव कां चालंकुरुते पुरीम् ॥ २१६ ॥
धन्यस्य कस्य वा पुत्री लक्ष्मीः क्षीरोदधेरिव । यान्त्यस्याः कानि वा पुण्यान्यक्षराण्यभिधानताम् २१७
सरस्वत्याऽनुजगृहे कलयेयं कया कया । अस्याः पुंस्पाणिना पाणिश्चुंबितो यदि वा न वा ॥ २१८ ॥
तापसी कथयामास वैशाल्यधिपतेः सुता । हैहयान्वयजातस्य चेटकस्य कुमार्यसौ ॥ २१९ ॥
निधिः कलानां सर्वासां सुज्येष्ठा नामधेयतः । गुणरूपानुरूपेण तत्तामुद्वोढुमर्हसि ॥ २२० ॥
त्वयि सत्यपि चेदस्याः पतिरन्यो भविष्यति । तृतीयपुरुषार्थेन तर्हि त्वमसि वंचितः ॥ २२१ ॥
विसृज्य तापसीं तस्थौ कथंचिदथ पार्थिवः । पक्षौ विधाय वैशाल्यां यियासुरिव तां स्मरन् ॥ २२२ ॥
सुज्येष्ठाप्रार्थने दत्वा शिक्षां राजगृहेश्वरः । अन्येद्युः प्रेषयामास दूतं चेटकभूपतेः ॥ २२३ ॥
दूतोऽपि सद्यो वैशाल्यां गत्वा नत्वा च चेटकम् । उवाच वाचिकपटुर्न यच्चैटु न वा कटु ॥ २२४ ॥
सुज्येष्ठां याचते त्वत्तो मत्स्वामी मगधाधिपः । न कन्याप्रार्थनं जातु लज्जायै महतामपि ॥ २२५ ॥
चेटकोऽप्यब्रवीदेवमनात्मज्ञस्तव प्रभुः । वाहीककुलजो वाञ्छन् कन्यां हैहयवंशजाम् ॥ २२६ ॥
समानकुलयोरेव विवाहो हन्त नान्ययोः । तत्कन्यां न हि दास्यामि श्रेणिकाय प्रयाहि भोः ॥ २२७ ॥

१ प्रशस्ता स्त्री । २ स्वबुद्ध्या । ३ मधुर वचः ।

कलिकालसर्वज्ञानां श्रीमतां हेमचन्द्रसूरिवराणां पूर्णामिमां कृतिं परमात्मनोऽनुग्रहलवेन श्रीमन्मुर्शीदाबादनिवासिनो बाबुश्रीरायबुधसिंहबहादुरेत्यभिधानं दधतः श्राद्धशिरोमणेर्मोहमयीपुरीनिवासिनश्च जे. पी. सी. आइ. इ. इति विरुदालंकृतस्य स्वर्गतस्य श्रीमद्दीपचन्द्रात्मजश्रीवीरचन्द्रनाम्नः श्राद्धरत्नस्य साहाय्येन श्रीजैनवर्गस्य हितार्थं मुद्रापयित्वा प्रसिद्धिं गमयितुं वयं भाग्यवन्तो जाताः स्मः ॥

उच्चजातीयसत्पत्रेषु सदक्षरविन्यासेन निर्णयसागराख्ययन्त्रालये षड्विभागैर्विभक्तो मुद्रापितोऽयं समग्रो दशपर्वात्मको ग्रन्थः पूर्वोक्तसद्गृहस्थद्वयस्येच्छानुसारेण संस्कृतभाषाध्ययनरतानां मुनिवराणां साध्वीनां ग्रन्थभाण्डागाराणां प्रसिद्धजैनपुस्तकालयानां चोपदीकर्तुं निश्चितोऽस्ति ॥

श्रुतिपरंपरया लोका लिखितग्रंथानुसारेण बृहद्वृत्तवद्भिः श्लोकैः श्लोकांकैश्च सह गणनयास्य समग्रस्य ग्रन्थस्यानुष्टुभां श्लोकानां संख्यां चतुस्त्रिंशत्सहस्रादारभ्य षट्त्रिंशत्सहस्रं यावत्कथयंति। परंतु मुद्रापितस्यास्य ग्रन्थस्यानुसारेण श्लोकानां संख्या द्व्यशीत्युत्तरशताधिकैकत्रिंशत्सहस्रमिता भवति। तथाहि—

| पर्व | सर्गः | श्लोकसंख्या | पर्व | सर्गः | श्लोकसंख्या. |
|---|---|---|---|---|---|
| १ | ६ | ५०४३ | ६ | ८ | १४३३ |
| २ | ६ | ३०८० | ७ | १३ | ३८९१ |
| ३ | ८ | १५८२ | ८ | १२ | ४६९८ |
| ४ | ७ | २६४९ | ९ | ४ | १५९७ |
| ५ | ५ | २०४३ | १० | १३ | ५१६६ |

तं प्रसादय मत्कार्यधुर्ये तद्वाचिकं च मे । तूर्णमागत्य कथयेः स्वस्ति तुभ्यं यशस्विनि ॥ २४२ ॥
गत्वा दास्या तयात्यन्तमभयोऽभ्यर्थितोऽवदत् । पूरयिष्यामि न चिरात्त्वत्स्वामिन्या मनोरथम् ॥२४३॥
सुरंगां खानयिष्यामि तमानेष्ये सुरंगया । तत्कालमेवाधिष्ठेयस्त्वत्स्वामिन्यापि तद्रथः ॥ २४४ ॥
त्वत्स्वामिनी च तत्कालं दृष्ट्वा श्रेणिकमागतम् । आलेख्यदृष्टतद्रूपसंवादान्मुदमेष्यति ॥ २४५ ॥
स्थानेऽमुष्मिन् दिनेऽमुष्मिन् क्षणेऽमुष्मिन् सुरंगया । राजैष्यतीति संकेतं तन्मुखेनाभयो ददौ ॥२४६॥
दासी तस्यै तदाख्यायागत्य चाभयमब्रवीत् । प्रमाणं त्वद्वच इति पुनश्चान्तःपुरं ययौ ॥ २४७ ॥
अभयोऽपि हि संकेतकथाख्यापनपूर्वकम् । पितृप्रयोजनप्रह्व[1] आख्यत् पितरमाश्वपि ॥ २४८ ॥
सुज्येष्ठा तत्प्रभृत्येव स्मरन्ती श्रेणिकं नृपम् । प्रभूतां प्रापदरतिं रतिनाथवशंवदा[2] ॥ २४९ ॥
अन्यदा त्वह्नि निर्णीते श्रेणिकः सुलसासुतैः । द्वात्रिंशता सार्धमागात् सुरंगाद्वारसीमनि ॥ २५० ॥
रथस्थैः सुलसापुत्रैरन्वितोऽथ रथस्थितः । चक्रीव वैताढ्यगुहां सुरंगां श्रेणिकोऽविशत् ॥ २५१ ॥
सुरंगानिर्गतं प्रेक्ष्य सुज्येष्ठा मगधेश्वरम् । चित्रदृष्टानुसाराच्चोपलक्ष्य मुमुदेतराम् ॥ २५२ ॥
साख्याय सर्वं वृत्तान्तमापप्रच्छे च चिल्लणाम् । प्रत्यज्ञासीच्चिल्लणापि स्थास्यामि त्वदृते न हि ॥ २५३ ॥
रथमारोपयदथ सुज्येष्ठादौ हि चिल्लणाम् । स्वयं त्वगात् समानेतुं द्रुतं रत्नकरंडिकाम् ॥ २५४ ॥
ऊचुश्च सुलसापुत्रास्तदा श्रेणिकपार्थिवम् । स्वामिन्न युज्यते स्थातुं सुचिरं वैरिवेश्मनि ॥ २५५ ॥
आदाय चिल्लणां राजा प्रेरितः सुलसासुतैः । सुरंगयैव व्याघुट्य[3] यथायातस्तथा गतः ॥ २५६ ॥

---

१ प्रह्वो नम्रः । २ कामदेववशवदा । ३ निवृत्य ।

अस्य ग्रंथस्य संशोधनविषये कठिनस्थले च पर्यायसमासाद्याविष्करणविषये च यथाशक्ति प्रयासो द्रव्यव्ययश्च कृतोऽस्ति, तथाप्यत्र ग्रन्थे यत्र क्वापि दृष्टिदोषादिनाऽशुद्धं चेन्मिथ्यादुष्कृतपूर्वकं क्षमां याचेमहि, तथा च तादृशान्यशुद्धानि स्थानान्यस्माकं लेखद्वारादिना ज्ञापनीयानीति विदुषां प्रार्थयामहे ॥

समग्रस्यास्य ग्रन्थस्य गुर्जरभाषायां भाषान्तरमप्यस्माभिर्जैनसंघसेवार्थं प्रकटीकृतमस्ति ।

एतद्ग्रन्थकर्तृभिरेव पूज्यपादैरेतद्ग्रन्थानन्तरं निर्मितं परिशिष्टपर्व (स्थविरावलिचरितं) अपि प्रसिद्धिं प्रापयितुमिच्छामः ॥

ग्रन्थस्यास्य साद्यन्तपाठकोऽनुयोगचतुष्टयस्य ज्ञानं सौकर्येण लप्स्यतेऽतोऽयं ग्रन्थः सर्वैरपि संस्कृतभाषाध्ययनकारिभिः सावधानतयाऽवश्यमेव पठनीय इति सूचयित्वेयं लघ्वी प्रस्तावना समाप्यते॥इति शम्।

श्रावण.<br>संवत् १९६९.

श्रीजैनधर्मप्रसारकसभा,<br>भावनगर.

गान्धर्वेण विवाहेन परिणीयाथ चिल्लणाम् । राजा नागसुलसयोर्गत्वाख्यत्तत्सुतान्मृतान् ॥ २७२ ॥
तौ दंपती नृपाच्छ्रुत्वा सुतोदन्तममंगलम् । मुक्तकंठं रुरुदतुर्विलापं चेति चक्रतुः ॥ २७३ ॥
रे कृतान्त कृतान्तोऽसि पुत्राणां युगपत्कथम् । किमेकशृंखलत्वेन तवाभूवन् कदाप्यमी ॥ २७४ ॥
पक्षिणामप्यपत्यानि भूयांस्यपि भवन्ति हि । क्रमेण तु विपद्यन्ते न ह्येवं युगपत्क्वचित् ॥ २७५ ॥
स्नेहादेकतया किं नु मृताः स्थ युगपत्सुताः । ज्ञातौ किमावां निःस्नेहौ वञ्चितौ सह मृत्युना ॥ २७६ ॥
इति तारं रुदन्तौ तावाचार्य इव तत्त्ववित् । अभयो बोधयामास श्रेणिकेन सहागतः ॥ २७७ ॥
जन्मिनां प्रकृतिर्मृत्युर्विकृतिर्जीवितं पुनः । ततः स्वभावसिद्धेऽर्थे को विषादो [3]विवेकिनौ ॥ २७८ ॥
अभयेनेति दंपत्योस्तयोर्बोधितयोः सतोः । कृत्वा संभाषमुचितं श्रेणिकः सदनं ययौ ॥ २७९ ॥
ततश्च चिल्लणादेव्या समं मगधभूपतिः । निर्विघ्नं बुभुजे भोगान् पौलोम्येव पुरन्दरः ॥ २८० ॥
अतिवाह्य व्यन्तरायुरुष्ट्रिकाक्षपकोऽपि हि । पुत्रत्वेन चिल्लणायाः कुक्षाववततार सः ॥ २८१ ॥
तस्य गर्भस्य दोषेण पतिमांसादनेऽभवत् । दुर्दोहदश्चिल्लणाया राक्षस्या अपि यो न हि ॥ २८२ ॥
पतिभक्ता चिल्लणा तं नाख्यत्कस्यापि दोहदम् । अपूर्णदोहदत्वाच्च क्षीयते स्म [6]दिवेन्दुवत् ॥ २८३ ॥
स गर्भश्चिल्लणादेव्या दुर्दोहदविरक्तया । पापमप्युररीकृत्य पात्यमानोऽपि नापतत् ॥ २८४ ॥
शुष्यदंगीं च तां दृष्ट्वा वल्लीमसलिलामिव । पप्रच्छ कारणं राजा प्रेमबन्धुरया गिरा ॥ २८५ ॥

---

१ कृतोऽन्तो नाशो येन सः । २ एका शृंखला येषां ते तेषां भावस्तेन । ३ हे विवेकिनौ । ४ इन्द्राण्या सह पुरन्दर इन्द्र इव । ५ उष्ट्रिकाव्रतधारी तापसः । ६ दिवा दिने ।

# अनुक्रमणिका.

आगत्य चेलणां चोचे कुलोत्पन्ने विवेकिनि । किमकार्षीरकर्मेदमकृत्यं [1]श्वपचैरपि ॥ ३०० ॥
अपि दुश्चारिणी या स्याधर्मज्ञातिकर्कशा । पुत्रं [2]कुंडं [3]गोलकं वा सापि न ह्येवमुज्झति ॥ ३०१ ॥
चेल्लणा स्माह ते नाथ पुत्ररूपेण वैर्यसौ । यस्मिन् गर्भस्थितेऽप्यासीद्दोहदो नरकावहः ॥ ३०२ ॥
जातोऽप्यत्याजि तेनायं कुलजानां हि योषिताम् । पत्युः क्षेमाकांक्षिणीनां किं पुत्रेणापरेण वा ॥३०३॥
श्रेणिकोऽथान्वशाद्राज्ञीं ज्येष्ठं त्यक्ष्यसि चेत्सुतम् । तदा तवान्ये पुत्राः स्युर्न स्थिरा बुद्बुदा इव ॥३०४॥
एवं पत्युर्निदेशेनानिच्छन्त्यपि हि चेलणा । स्तन्यदानादहिमिव तं बालकमपालयत् ॥ ३०५ ॥
कान्त्या चन्द्र इवाशोकवनिकायामदर्श्यसौ । अशोकचन्द्र इत्याख्यामिति तस्याकरोन्नृपः ॥ ३०६ ॥
तदा वनान्तस्त्यक्तस्यांगुलिस्तस्य कनिष्ठिका । [4]अकाणि कुकुटीपिच्छेनाशोकदलकोमला ॥ ३०७ ॥
तदर्त्या रुदतस्तस्यांगुलीं [6]पूतिमतीमपि । स्नेहान्मुखेऽक्षिपद्राजा स व्यरंसीच्च रोदनात् ॥ ३०८ ॥
रूढव्रणापि सा तस्य [7]कूणिताऽभवदंगुलिः । ततः सपांशुरमणैः सोऽभ्यधीयत कूणिकः ॥ ३०९ ॥
क्रमेण चेलणादेव्या हृदयांभोजभास्करौ । सुतौ हल्लविहल्लाख्यावभूतामपरावपि ॥ ३१० ॥
ते त्रयश्चेलणापुत्रा नित्यं राज्ञोऽनुगा बभुः । प्रभुत्वमंत्रोत्साहानां प्रत्यक्षा इव मूर्तयः ॥ ३११ ॥
पितृद्विषे कूणिकायाम्बा प्रैषीद्गुडमोदकान् । [8]मत्स्यंडीमोदकान् हल्लविहल्लाभ्यां पुनः सदा ॥ ३१२ ॥
श्रेणिकः कारयत्येवमिति प्राक्कर्मदूषितः । कूणिको विमृशन्नित्यं प्रपेदे मध्यमं वयः ॥ ३१३ ॥

---

१ चाडालैः । २ मृते भर्तरि जारजः कुंडः । ३ जीवति भर्तरि जारजः गोलकः । ४ अविध्यत । ५ तत्पीडया । ६ दुर्गन्धवतीमपि । ७ संकुचिता भाषाया "बुठी" । ८ शर्करामोदकान् ।

## ॥ षष्ठः सर्गः ॥

इतश्चात्रैव भरते कुशाग्रपुरपत्तने । कुशाग्रीय[1]मतिरभूत् प्रसेनजिदिलापति[2]ः ॥ १ ॥
अलंकृताशेषदिक्कस्तस्यापारो यशोऽर्णवः । जग्रसे विद्विषां कीर्तिनिर्झरिणीः समन्ततः ॥ २ ॥
तस्याभूत् केवलं राज्यशोभायै सैन्यसंग्रहः । यत्प्रतापानलेनैव वैरिव्याघ्राननाशयत् ॥ ३ ॥
स्खल्योऽब्धिणा वायुरपि दंभोलि[3]रपि वार्द्धिना[4] । आज्ञा तस्य पुनः पृथ्व्यामस्खल्यत न केनचित् ॥ ४ ॥
स प्रसारितपाणिभ्यो याचकेभ्यो ददद्वसु । तेषामिव स्पर्धया स्वं न पाणिं समकोचयत् ॥ ५ ॥
हित्वा स्वस्वपतीन् जातेऽन्धकारे रणरेणुभिः । तमालिलिंगुः सर्वांगं जयलक्ष्म्योऽभिसारिका[5]ः ॥ ६ ॥
शुद्धे मनसि तस्याभूत्सदाचारशिरोमणेः । जिनधर्मः स्थिरः सान्द्रे[6] केशपाशेऽधिवासवत् ॥ ७ ॥
श्रीमत्पार्श्वजिनाधीशशासनांभोजषट्पद[7]ः । सम्यग्दर्शनपुण्यात्मा सोऽणुव्रतधरोऽभवत् ॥ ८ ॥
राज्ञां कन्याभिरूढाभिस्तस्योर्वीशशिरोमणेः । अवरोधोऽभवद्भूयान् दिवीव दिविषत्पते[8]ः ॥ ९ ॥
पाकशासनतुल्यस्य शासतस्तस्य मेदिनीम् । सूनवो बहवोऽभूवंस्तन्मूर्तय इवापराः ॥ १० ॥
इतश्चात्रैव भरते वसन्तपुरपत्तने । यथार्थनामा समभूज्जितशत्रुर्महीपतिः ॥ ११ ॥
अमरीव भुवं प्राप्ता तस्य चामरसुन्दरी । बभूव पट्टमहिषी गुणरत्नमहाखनिः ॥ १२ ॥

१ तीक्ष्णबुद्धिः । २ पृथ्वीपतिः । ३ दम्भोलिर्वज्रम् । ४ समुद्रेण । ५ इष्टनायक सन्मुखगामिन्यो नायिकाः । ६ गाढे । ७ षट्पदो भ्रमरः । ८ दिविषदां देवानां पतेरिन्द्रस्य ।

श्रेणिकोऽपि तमानेतुं हयारूढैः सुतैरगात् । मृगयाप्राप्तमृगवत् परिवेष्टयति स्म च ॥ ३५५ ॥

प्रलोभनां तर्जनां वा सादिनां स मतंगजः । बलवद्भ्रान्तरग्रस्त इव मेने न किंचन ॥ ३५६ ॥

नन्दिषेणस्य तु वचो निशम्य तमुदीक्ष्य च । स शान्तोऽभूदवधिना जानन् प्राग्जन्म तत्तथा ॥ ३५७ ॥

नन्दिषेणोऽपि सपदि कक्षा[1]मालम्ब्य तं गजम् । अपरायां[2] दत्तपादोऽध्यारोहन्मुष्टिभिस्त्रिभिः ॥ ३५८ ॥

नन्दिषेणस्य वचसा दन्तघातादिकाः क्रियाः । स कुर्वन् शिक्षित इवालानगोचरतां ययौ ॥ ३५९ ॥

पट्टं विश्राणयामास[3] श्रेणिकस्तस्य हस्तिनः । प्रसादपात्रीचक्रे च युवराजमिवाथ तम् ॥ ३६० ॥

अपरेऽपि हि कालाद्याः पुत्राः प्रथितविक्रमाः । अभूवन् कुलपत्नीषु श्रेणिकस्य महीपतेः ॥ ३६१ ॥

इतश्च विहरन् भव्यावबोधाय जगद्गुरुः । सुरासुरपरीवारो ययौ राजगृहं पुरम् ॥ ३६२ ॥

तस्मिन् गुणशले चैत्ये चैत्यवृक्षोपशोभितम् । सुरप्रक्लृप्तं समवसरणं शिश्रिये प्रभुः ॥ ३६३ ॥

श्रुत्वा च समवसृतं श्रीवीरं श्रेणिको नृपः । ऋध्ध्या महत्या ससुतो वन्दितुं समुपाययौ ॥ ३६४ ॥

प्रभुं प्रदक्षिणीकृत्य नत्वा च श्रेणिको नृपः । निषद्य च यथास्थानमिति तुष्टाव भक्तिमान् ॥ ३६५ ॥

जगज्जैत्रा गुणास्त्रा[4]तरन्ये तावत्तवासताम् । उदात्तशान्तया जिग्ये मुद्रयैव जगत्त्रयम् ॥ ३६६ ॥

एवं च मेरुस्तृणतां नीतोऽब्धिर्गोष्पदीकृतः । गरिष्ठेभ्यो गरिष्ठो यैः पाप्मभिस्त्वमपो[5]हितः ॥ ३६७ ॥

च्युतश्चिन्तामणिः पाणेस्तेषां लब्धा सुधा मुधा[6] । यैस्ते शासनसर्वस्वमज्ञानैर्नात्मसात्कृतम् ॥ ३६८ ॥

---

१ बन्धनरज्जुम् । २ अपराया कक्षाया । ३ ददौ पट्टगजं चक्रे इत्यर्थः । ४ हे त्रातः जगज्जयनशीला अन्ये गुणाः । ५ त्याजितः स्वार्थे णिच् त्यक्त इत्यर्थः । ६ मुधा कृता ।

तयोः सुमंगलो नाम मंगलानां निवासभूः । सुतोऽभूद्रूपकन्दर्पः कलानां निधिरिन्दुवत् ॥ १३ ॥
सेनको नाम सवयास्तस्याभून्मंत्रिपुत्रकः । अलक्षणानां सर्वेषामुदाहरणमादिमम् ॥ १४ ॥
स पिंगकेशो दावाग्निदीप्तशृंग इवाचलः । घूकवच्चिपिटघ्राणो मार्जार इव पिंगदृक् ॥ १५ ॥
उष्ट्रवल्लंबकंठौष्ठ आखुवल्लघुकर्णकः । मुखकन्दांकुराकारबहिर्भूतरदावलिः[1] ॥ १६ ॥
जलोदरीवोदरिलो[2] ह्रस्वोरुर्ग्रामकोलवत्[3] । मंडलस्थानकेनेव[4] वक्रजंघोऽतिशूर्पपात् ॥ १७ ॥
॥ त्रिभिर्विशेषकम् ॥

संचचार दुराकारो वराको यत्र यत्र सः । जगाम तत्र तत्रापि हास्यमेकातपत्रताम् ॥ १८ ॥
दूरतोऽपि तमायान्तं राजपुत्रः सुमंगलः । जहास विकृताकारं विलोक्येव विदूषकम् ॥ १९ ॥
एवं च राजपुत्रेण हस्यमानो दिवानिशम् । वैराग्यं सेनको भेजेऽपमानद्रुमहाफलम् ॥ २० ॥
अथ संजातवैराग्यो मन्दभाग्यस्ततः पुरात् । निरगाच्छून्यहृदय उन्मत्त इव सेनकः ॥ २१ ॥
सुमंगलकुमारोऽपि मंत्रिपुत्रे निरीयुषि[5] । कालेन कियताप्यात्मराज्ये पित्रा न्यवेश्यत ॥ २२ ॥
सेनकोऽपि भ्रमन्नेकं दृष्ट्वा कुलपतिं वने । तत्पार्श्वे तापसो भूत्वा गृह्णाति स्मोष्ट्रिकाव्रतम् ॥ २३ ॥
तीव्रेण तपसा नित्यं स्वमत्यन्तं कदर्थयन् । वसन्तपुरमेवागादपरेद्युः सतापसः[6] ॥ २४ ॥
मंत्रिसूस्तापसश्चेति तमानर्च जनोऽखिलः । वैराग्यकारणं पृष्टः कथयामास चेति सः ॥ २५ ॥

---

१ रदावलिर्दन्तपङ्क्तिः । २ जलोदरव्याधिमानिव बृहदुदरवान् । ३ ग्राम वराहवत् । ४ मडलस्थानकमासनविशेषः । ५ निर्गते सति । ६ गुरुसहितः ।

पित्रोरप्यंकतो मृत्युराच्छिनत्ति सुतादिकम् । स्वामिपादानुसरणात्तन्मृत्युं छलयाम्यहम् ॥ ३८४ ॥
अथ तं श्रेणिकोऽवोचद्भवोद्विग्नोऽसि यद्यपि । तथाप्यादत्स्व मे राज्यं निर्वापय दृशौ मम ॥ ३८५ ॥
एवमस्त्वित्युक्तवन्तं मेघं राज्ये न्यधान्नृपः । भूयस्ते किं करोमीति हर्षावेशादुवाच च ॥ ३८६ ॥
मेघोऽप्यधात्तर्हि तातानीयतां कुत्रिकापणात् । रजोहरणपात्रादि मह्यं दीक्षां जिघृक्षवे[1] ॥ ३८७ ॥
राजापि स्ववचोबद्धस्तच्चक्रे विमना अपि । मेघोऽपि स्वामिपादान्ते गत्वा दीक्षामुपाददे ॥ ३८८ ॥
नक्तं मेघकुमारोऽथानुज्येष्ठं न्यस्तसंस्तरे । प्रसुप्तो गच्छदागच्छन्मुनिपादैर्व्यघट्यत ॥ ३८९ ॥
सोऽथ दध्यौ निर्विभवं पादैर्मां घट्टयन्त्यमी । सर्वत्र विभवाः पूज्याः प्रातस्त्यक्ष्यामि तद्व्रतम् ॥ ३९० ॥
एवं विचिन्तयन् रात्रिं कथंचन निनाय सः । त्यक्तुकामो व्रतं प्रातर्जगाम स्वामिसन्निधौ ॥ ३९१ ॥
तद्भावं केवलाज्ज्ञात्वा सर्वज्ञोऽभिदधेऽथ तम् । भग्नः संयमभारात् किं स्मरसि प्राग्भवान्न किम् ॥३९२॥
इतो भवे तृतीये त्वं हस्ती वैताढ्यभुव्यभूः । मेरुप्रभाख्यो दावार्तः[2] पयः पातुं सरस्यगाः ॥ ३९३ ॥
तत्पंकमग्नो निःस्थामा प्रतीभेन[3] हतस्ततः । सप्ताहान्ते मृतो विन्ध्ये गजोऽभूराख्यया तया ॥ ३९४ ॥
दृष्ट्वा दवानलं जातिं स्मृत्वोन्मूल्य द्रुमादिकम् । नद्यां स्वयूथरक्षार्थमकार्षीः स्थंडिलत्रयम् ॥ ३९५ ॥
अन्येद्युर्ज्वलिते दावे धावंस्त्वं स्थंडिलान्यभि । तत्र द्वे स्थंडिले पूर्णे पूर्वायातैर्मृगादिभिः ॥ ३९६ ॥
ते व्यतीत्य तृतीयेयाः स्थंडिले तत्र च स्थितः । गात्रकंडूयनकृते चरणं समुदक्षिपः ॥ ३९७ ॥
अन्योऽन्यसत्वसंमर्दपर्यस्तस्तावकस्य तु । समुत्क्षिप्तस्य तस्यांघ्रेरधस्ताच्छशकोऽपतत् ॥ ३९८ ॥

१ गृहीतुमिच्छवे । २ दावानलेन पीडितः । ३ प्रतिगजेन ।

सुमंगलकुमारेण रूपमेतदहासि मे । वैराग्यं तेन मे जातं सत्यंकारस्तपःश्रियः ॥ २६ ॥
तच्छ्रुत्वा तं नमस्कर्तुं सुमंगलनृपोऽभ्यगात् । क्षमयित्वा पारणाय न्यमंत्रयत चादरात् ॥ २७ ॥
सोऽपि राज्ञे प्रदत्ताशीरनुमेने तदर्थनाम् । कृतकृत्य इवागाच्च राजापि निजवेश्मनि ॥ २८ ॥
पूर्णेऽथ मासक्षपणे नृपतेः प्रार्थनां स्मरन् । शान्तात्मा राजभवनद्वारमाप स तापसः ॥ २९ ॥
शरीरासौष्ठवमभूत्तदा च पृथिवीपतेः । द्वारं च पिदधे द्वास्थः कस्तदा भिक्षुमीक्षते ॥ ३० ॥
स्खलितो द्वारदानेन सेतुनेव जलप्लवः । पथा यथागतेनैव तपस्वी [1]व्याजुघोट सः ॥ ३१ ॥
निश्चित्य मासक्षपणं ययौ च पुनरुष्ट्रिकाम् । न चाकुप्यत्तपोवृद्धौ हृप्यन्ति हि महर्षयः ॥ ३२ ॥
स्वस्थीभूतो द्वितीयेऽह्नि भक्तो राजा तपस्विषु । गत्वा नत्वा क्षमयित्वा पुनरेवमुवाच तम् ॥ ३३ ॥
निमंत्रितोऽसि पुण्याय मया[2]घं पुनरार्जितम् । प्रायः पापनिवासानां पापमेवातिथीयते ॥ ३४ ॥
तवान्यत्रापि भगवन्निषिद्धं पारणं मया । अदातुर्हि प्रियालापोऽन्यत्र लाभान्तरायकृत् ॥ ३५ ॥
तत्प्रसीद द्वितीयेऽपि मासक्षपणपारणे । मत्प्रांगणमलंकुर्याः कल्प[3]शाखीव नन्दनम् ॥ ३६ ॥
तथेति प्रतिपेदाने तापसेऽगान्नृपो गृहम् । गणयन्नङ्गुलीस्तस्थौ तत्पारणदिनाय च ॥ ३७ ॥
पूर्णे च मासक्षपणे स तपस्वी नृपौकसि । ययौ दैवाद्भूभुजः प्राग[4]वपुरपाटवम् ॥ ३८ ॥
तथैव पिहिते द्वारे व्याघुट्यागात्स उष्ट्रिकाम् । स्वस्थीभूतोऽथ तं राजा न्यमंत्रयत पूर्ववत् ॥ ३९ ॥
पूर्णेऽथ मासक्षपणे तृतीयेऽपि स तापसः । तथैवागात्तथैवाभूद्भूभुजः पुनरपाटवम् ॥ ४० ॥

१ न्यवर्तत । २ पापम् । ३ कल्पवृक्षः । ४ वपुषोऽपाटवमस्वास्थ्यम् ।

## ॥ सप्तमः सर्गः ॥

अथाक्रीडजलक्रीडादिभिश्चेलणया सह । श्रेणिकः प्रेमसूत्रेण मिथः स्यूतमना इव ॥ १ ॥
श्रेणिकश्चेलणादेव्या रहसि प्रतिवासरम् । स्वौ करौ कंकतीकृत्य केशपाशममार्जयत् ॥ २ ॥
स्वहस्तग्रथितैः सद्योऽनवद्यैः पुष्पदामभिः । तस्या ववन्ध धम्मिल्लं वालबन्ध इव स्वयम् ॥ ३ ॥
स्वयं घृष्टमृगमदद्रव्यैस्तस्याः कपोलयोः । लिलेख चित्रकृदिव विचित्राः पत्रवल्लरीः ॥ ४ ॥
आसने शयने याने भोजनेऽन्यत्र वा नृपः । तत्पार्श्वं नात्यजज्जातु सौविदल्ल इव स्वयम् ॥ ५ ॥
एकदा च प्रववृते शिशिरर्तुर्भयंकरः । हिमवैवधिकोदीच्यपवनो वनदाहकः ॥ ६ ॥
सन्निधिस्थहसन्तीकाः कश्मीरजविलेपनाः । श्रीमन्तो गर्भगेहस्थाः कालातिक्रमणं व्यधुः ॥ ७ ॥
गजदन्तीकृतकरा वेपमाना भयादिव । रोरार्भका गृहद्वारे दन्तवीणामवादयन् ॥ ८ ॥
पाणिपद्मं स्वभावोष्णप्रियावक्षसिजान्निशि । संलावुवीणादंभाभं युवानो नापसारयन् ॥ ९ ॥
तदा च समवासार्षीत्तत्र श्रीज्ञातनन्दनः । सर्वातिशयसंपन्नः सेव्यमानः सुरासुरैः ॥ १० ॥
देव्या चेल्लणया सार्धमपराह्णेऽन्यदा नृपः । वीरं समवसरणस्थितं वन्दितुमभ्यगात् ॥ ११ ॥

---

१ ककपत्रीकृत्य । २ केशबन्धकः सेवक इति यावत् । ३ अन्तःपुररक्षक । ४ हिमवर्धकोत्तरदिग्वायुः । ५ हसन्ती अग्निपात्र-विशेषः भाषाया 'सघडी' इति ख्यातम् । ६ हस्तिदतसदृशकरा । ७ दीनपुत्राः । ८ दन्ता एव वीणा ताम् । ९ प्रियास्तनात् । १० अलाबु तुंबिकाफल तत्सहितो यो वीणादण्डस्तत्सदृशम् । ११ ज्ञातः सिद्धार्थस्यापराभिधा ।

आराधयामि तपसा तदेतस्याधिदेवताम् । यथामुं छिन्दतो न स्याद्विघ्नः सस्वामिनो मम ॥ ५६ ॥
ततश्चोपोषितो भूत्वा वर्धकिस्तं महातरुम् । भक्त्याध्यवासयद्गन्धधूपमाल्यादिवस्तुभिः ॥ ५७ ॥
तदाभयकुमाराय व्यन्तरस्तद्द्रुमाश्रयः । आख्यत्तदर्थसिद्ध्यर्थं रक्षार्थं स्वाश्रयस्य च ॥ ५८ ॥
ममाश्रयद्रुमच्छेद्यस्तं निवारय वर्धकिम् । प्रासादमेकस्तंभं हि करिष्याम्यहमेव भोः ॥ ५९ ॥
सर्वर्तुमंडितं सर्ववनस्पतिसमाकुलम् । उद्यानं नन्दनमिव करिष्ये च तदाश्रितम् ॥ ६० ॥
भणितो व्यन्तरेणैवमभयो वर्धकिं वनात् । आह्वास्त सद्यः सिद्धं नः समीहितमिति ब्रुवन् ॥ ६१ ॥
प्रतिपन्नं व्यधात् सौधं व्यन्तरोऽपि तथैव तम् । अधिकाः किंकरेभ्योऽपि वाग्बद्धा देवयोनयः ॥ ६२ ॥
प्रासादमेकस्तंभं तं सर्वर्तुवनमंकितम् । अभयोऽदर्शयद्राज्ञे राजा प्रीतोऽब्रवीददः ॥ ६३ ॥
इच्छतां[1] केवलं सौधं सर्वर्तुवनमप्यभूत् । उपक्रान्ते क्षीरपाणे[2] शर्करापतनं ह्यदः ॥ ६४ ॥
मुमोच चेलणां तत्र प्रासादे मगधाधिपः । सो[3]ऽलंचक्रे तयात्यंतं पद्महृद इव श्रिया ॥ ६५ ॥
राज्ञी तु चेलणा तत्र सर्वर्तूद्यानसंभवैः । पुष्पैरानर्च सर्वज्ञमुच्चितग्रथितैः[4] स्वयम् ॥ ६६ ॥
सद्योऽवचित्य ग्रथितैः पुष्पैस्तैरेव चेलणा । सैरंध्रीव[5] स्वयं पत्युः केशपाशमपूरयत् ॥ ६७ ॥
एवं श्रीवीतरागार्थं पत्यर्थं चापि चिन्वती । धर्मकामफलीचक्रे तद्वनप्रसवानि[6] सा ॥ ६८ ॥
चेलणोपवने तत्र सदापुष्पे सदाफले । श्रेणिकं रमयामास मूर्तेव वनदेवता ॥ ६९ ॥

---

१ सर्वैर्ऋतुभि. शोभितम् । २ दुग्धपाने । ३ स प्रासादः । ४ आदावुच्चितानि पश्चाद्ग्रथितानि तैः । ५ दासीव । ६ तद्वनपुष्पाणि ।

नागोऽप्याख्यदपुत्रोऽस्मि पुत्रकौतूहलं च मे । न किंचिदस्त्यौपयिकं पुत्रीयं[1] पुत्रकाम्यतः ॥ ५५ ॥
सुलसोवाच कन्यास्त्वं वह्वीः परिणयापराः । पुत्रप्रसविनी तासु किमेकापि न भाविनी ॥ ५६ ॥
नागोऽप्यूचे त्वयैवाहं जायावानिह जन्मनि । जायाभिः कृतमन्याभिस्तत्पुत्राणां तु का कथा ॥ ५७ ॥
त्वदंगसंभवं पुत्रमिच्छामि प्रियदर्शने । स आवयोः प्रीतिवल्लेः फलायेत चिरादपि ॥ ५८ ॥
त्वं प्राणास्त्वं प्रतिवपुस्त्वं मंत्री त्वं च मे सखा । तद्यतस्व सुतार्थेऽस्मिन्नुपयाचितकादिभिः ॥ ५९ ॥
सुलसोचे करिष्येऽहमर्हदाराधनां प्रिय । अर्हदाराधनैवैका सर्वकार्येषु कामधुक् ॥ ६० ॥
आचामाम्लादिभिरथ तपोभिरतिदुस्तपैः । आजन्मापि पवित्रं स्वं[2] पावयन्ती विशेषतः ॥ ६१ ॥
मितमौक्तिकालंकारा नवोत्फुल्लेव मल्लिका । कौसुंभवसना संध्येवारुणाभ्रा प्रगेतनी[3] ॥ ६२ ॥
वीतरागार्चनपरा ब्रह्मचर्यपरायणा । समाहितमनाः सास्थात्पतिदुःखार्द्रमानसा ॥ ६३ ॥
॥ त्रिभिर्विशेषकम् ॥
इतश्च शक्रः सदसि प्रशंसामिति निर्ममे । श्राविका भुप सुलसां[4] सांप्रतं भरतावनौ ॥ ६४ ॥
एको देवस्तदाकर्ण्य विस्मयोत्कर्णिताननः[5] । सुलसायाः श्राविकात्वं परीक्षितुमुपाययौ ॥ ६५ ॥
देवार्चनप्रसक्तायाः सुलसायाः स वेश्मनि । प्राविशत् साधुरूपेण विरचय्य निषेधिकाम् ॥ ६६ ॥
सुलसापि हि तं दृष्ट्वानभ्रवृष्टिवदागतम् । भक्त्या ववन्देऽपृच्छच्च तदागमनकारणम् ॥ ६७ ॥

---

१ पुत्रसंबन्धि । २ आत्मानम् । ३ प्रातःकालिकी रक्ताभ्रवती सन्ध्येव । ४ अन्याः श्राविकाः सुलसाया उपहीनाः । ५ विस्मयेनोत्कर्णितमूर्ध्वकर्णवदाननं यस्य सः ।

पुष्पचौरं धरिष्येऽहमद्येत्युद्यानपालकः । एकदान्तर्हितो भूत्वा तस्थौ व्याध इव स्थिरः ॥ ८५ ॥
प्राग्वदागत्य विश्रब्धात्तां पुष्पाणि विचिन्वतीम् । दृष्ट्वा रूपवतीं क्षोभमियायारामिकः स तु ॥ ८६ ॥
तां धृत्वा बाहुनोद्यानपालको जातवेपथुः । सद्यो विस्मृतपुष्पापहारकोपो जजल्प च ॥ ८७ ॥
रमयस्व रिरंसुं मामागतं वेरवर्णिनि । अन्यथा त्वां न मोक्ष्यामि पुष्पक्रीता मया ह्यसि ॥ ८८ ॥
तमूचे पुष्पलावी सा मा मा मां स्पृश पाणिना । कुमार्यस्मि न पुंस्पर्शमद्याप्यर्हामि मालिक ॥ ८९ ॥
आरामिकोऽपि तामूचे त्वया तर्ह्यूढमात्रया । प्रथमं मम संभोगपात्रीकार्यमिदं वपुः ॥ ९० ॥
तथेति तां प्रपेदानां बालामुद्यानपालकः । मुमोचाक्षतकौमारा सापि स्वसदनं ययौ ॥ ९१ ॥
अन्येद्युः परिणीता च सा वरेण वरीयसा । उवाच च पतिं रात्रौ वासागारमुपेयुषी ॥ ९२ ॥
आर्यपुत्र मया मालाकारस्यास्ति प्रतिश्रुतः । उदूढमात्रया तस्याभिगमः प्रथमं खलु ॥ ९३ ॥
तस्मान्मामनुमन्यस्व वाग्बद्धा तं व्रजाम्यहम् । त्वत्सादपि भविष्यामि सकृत्तमभिजग्मुषी ॥ ९४ ॥
अहो शुभाशया सत्यसंधेयमिति विस्मयात् । सा पत्यानुमता सद्यो निर्ययौ वासवेश्मतः ॥ ९५ ॥
विचित्ररत्नाभरणा सा यान्ती पथि तथ्यवाक् । अरुध्यत धनार्थिभिः पाप्मभिः पारिपंथिकैः ॥ ९६ ॥
सा तथा मालिककथामाख्यायोवाच तस्करान् । हे भ्रातरो व्याघुटंत्या गृह्णीताभरणानि मे ॥ ९७ ॥

१ विस्मृत' पुष्पहरणाज्जातः कोपो येन सः । २ हे उत्तमस्त्रि । ३ पुष्पाणि लुनाति सा पुष्पलावी । ४ अतिशयेन वरः श्रेष्ठस्तेन । ५ त्वदधीना । ६ सत्या प्रतिज्ञा यस्याः सा । ७ सत्यवाक् । ८ धनमिच्छद्भिः । ९ मार्गे स्थित्वा ये लुटन्ति ते पारिपंथिकास्तैश्चौरै- रित्यर्थः । १० निवर्तमानाया' ।

ऊचे क्षुधातुरै रात्रिंचरो दुष्करकारकः । येनातिक्षुधितेनापि प्राप्ता सा न हि भक्षिता ॥ ११२ ॥
जारैरभिदधे मालाकारो दुष्करकारकः । न सा येनोपबुभुजे स्वयमेवागता निशि ॥ ११३ ॥
चूतचौरेण च प्रोचे चौरा दुष्करकारकाः । अलुंटितसुवर्णैव नवोढा यैरमोचि सा ॥ ११४ ॥
अभयोऽपि परिज्ञाय तस्करं तमधारयत् । पप्रच्छ च कथं चूतापहारो विदधे त्वया ॥ ११५ ॥
चौरोऽप्यकथयद्विद्याबलेनेति ततोऽभयः । राज्ञे तत्सर्वमाचख्यौ तं च चौरं समार्पयत् ॥ ११६ ॥
श्रेणिकोऽप्यवदत्प्राप्तश्चौरो नान्योऽप्युपेक्ष्यते । शक्तिमान् किं पुनरयं तन्निग्राह्यो ह्यसंशयम् ॥ ११७ ॥
अभयोऽप्यर्थ्छलं प्रार्थ्य महीनाथं व्यजिज्ञपत् । विद्यास्माद्गृह्यतां देव पश्चाद्युक्तं करिष्यते ॥ ११८ ॥
ततश्च मातंगपतिमुपवेश्यात्मनः पुरः । विद्यां पठितुमारेभे तन्मुखान्मगधाधिपः ॥ ११९ ॥
राज्ञः सिंहासनस्थस्य सा विद्या पठतोऽपि हि । हृदि नावस्थितिं चक्रे वारि च्युतमिवोन्नते[2] ॥ १२० ॥
ततश्च तर्जयामास चौरं राजगृहेश्वरः । कूटं किमपि ते विद्या न संक्रामति यन्मयि ॥ १२१ ॥
अभयोऽप्यन्यधाद्देव विद्यागुरुरयं हि वः । गुरौ विनयभाजां हि विद्या स्फुरति नान्यथा ॥ १२२ ॥
आस्यतामेष मातंगो देव सिंहासने निजे । अस्याग्रे त्वञ्जलिं बद्ध्वा स्वयं क्षुव्युपविश्यताम् ॥ १२३ ॥
तस्याथ प्रतिपत्तिं तां विद्यार्थी नृपतिर्व्यधात् । नीचादप्युत्तमां विद्यां गृह्णीयात्प्रथितं ह्यदः ॥ १२४ ॥
उन्नामन्यवनामन्यौ विद्ये तद्वदनाच्छ्रुते । राज्ञो हृद्यवतस्थाते दर्पणे प्रतिबिंबवत् ॥ १२५ ॥
अभयोऽपि महीपालं प्रसाद्य रचिताञ्जलिः । विद्यागुरुत्वमापन्नं तं चौरं पर्यमोचयत् ॥ १२६ ॥

---

१ निष्कपट यथा तथा । २ उन्नतप्रदेशे च्युत भ्रष्ट वारि नावतस्थे ।

स्मृतमात्रोपस्थितेन सद्यस्तेनामरेण सा । किं स्मृतोऽस्मीति पृष्टाख्यत्तां तथा गुटिकाकथाम् ॥ ८३ ॥
देवोऽवदत् किं गुटिका युगपद्भक्षितास्त्वया । अमोघाः खल्विमास्तेन गर्भास्तावन्त एव ते ॥ ८४ ॥
न साधु विदधे भद्रे त्वयेदमृजुचेतसा । पुत्रास्तुल्यायुषो ह्येवं द्वात्रिंशदपि भाविनः ॥ ८५ ॥
मा विषीद महाभागे बलिष्ठा भवितव्यता । गर्भपीडापहारं तु करिष्ये सुस्थिता भव ॥ ८६ ॥
सुलसाया गर्भपीडामपहृत्य स नाकसद्[1] । जगाम साभूत्स्वस्था च गूढगर्भा च भूरिव ॥ ८७ ॥
पूर्णे काले च सुलसा शुभेऽहनि शुभे क्षणे । द्वात्रिंशल्लक्षणान् पुत्रान् द्वात्रिंशतमजीजनत् ॥ ८८ ॥
धात्रीभिर्लाल्यमानास्ते क्रमाद्ववृधिरे सुताः । कलभा इव विन्ध्याद्रावखंडितसमीहिताः ॥ ८९ ॥
प्रांगणे ते रुरुचिरे रममाणाः कुमारकाः । गृहलक्ष्मीविहंगम्याः[2] क्रीडाक्षितिरुहा इव ॥ ९० ॥
उत्संगे नागरथिको ग्राहं[3] ग्राहं कुमारकान् । स्नेहादस्नपयदिभानन्दजैर्बाष्पवारिभिः ॥ ९१ ॥
पादक्रोडोरु[4]शिरोदेशे लगमानैः कुमारकैः । विरेजे नागरथिकः सिंहपोतैरिवाचलः ॥ ९२ ॥
सर्वेऽपि नागरथिनः सूनवो वयसा समाः । ते श्रेणिककुमारस्य बभूवुरनुयायिनः ॥ ९३ ॥
अन्यदा च स्वपुत्राणां राज्यार्हत्वं परीक्षितुम् । एकत्र पायसस्थालान्यशनाय नृपोऽर्पयत् ॥ ९४ ॥
ततो भोक्तुं प्रवृत्तानां कुमाराणाममोचयत् । व्याघ्रानिव व्यात्तवक्त्रान् सारमेयान् स सारधीः ॥ ९५ ॥
कुमारा द्रुतमुत्तस्थुरापतत्सु ततः श्वसु[5] । एकस्तु श्रेणिकस्तस्थौ धियां धाम तथैव हि ॥ ९६ ॥
सोऽन्यस्थालात्पायसान्नं स्तोकं स्तोकं शुनां ददौ । यावल्लिलिहिरे श्वानस्तावच्च बुभुजे स्वयम् ॥ ९७ ॥

---

१ देवः । २ गृहलक्ष्म्य एव विहंगमा, पक्षिणस्तत्सवन्धिनः । ३ गृहीत्वा गृहीत्वा । ४ क्रोड वक्षः । ५ सारमेयेषु ।

प्रतिलाभय साधूनित्यादिदेश च तां पिता । सा सद्वृत्ता प्रवृत्ता च प्रतिलाभयितुं क्षणात् ॥ १४० ॥
महामुनीनां तेषां च स्वेदक्लिन्नांगवाससाम् । मलगन्धस्तया जघ्रे प्रतिलंभयमानया ॥ १४१ ॥
सुगन्धं चोक्ष[1]वसना नानालंकारधारिणी । अंगरागविलिप्ता सा दध्यौ शृंगारमोहिता ॥ १४२ ॥
अर्हद्भिर्भाषितो धर्मोऽनवद्यः सकलोऽपि हि । स्नायेत प्रासुकाम्भोभिश्चेद्दोषः स्यात्तदा हि कः ॥१४३॥
मुनीनां मलदुर्गन्धजुगुप्सनसमुद्भवम् । दुःकर्म तदनालोच्याप्रतिक्रम्य च सा मृता ॥ १४४ ॥
मृत्वा राजगृहे राजञ्जगाम गणिकोदरे । अभून्मातुश्च सा गर्भस्थिताप्यरतिदायिनी ॥ १४५ ॥
वेश्यायाः प्रत्यहं पीतैर्गर्भपातौषधैरपि । स गर्भो नापतत् कर्म बलीयः कीदृगौषधम् ॥ १४६ ॥
साऽसूतेमां सुतां वेश्या दुर्गन्धां तेन कर्मणा । विष्टामिव च तत्याजोदरान्नि[2]पतितामपि ॥ १४७ ॥
पप्रच्छ पुनरप्येवं श्रेणिकः परमेश्वरम् । सुखदुःखानुभवभाक् कथमेषा भविष्यति ॥ १४८ ॥
स्वाम्याख्यदनया सर्वमपि दुःखमभुज्यत । यथा तु सुखभागेषा भविष्यति तथा शृणु ॥ १४९ ॥
अष्टौ वर्षाण्यसावग्रमहिषी ते भविष्यति । अभिज्ञानमिदं चात्र तत्परिज्ञानकारणम् ॥ १५० ॥
शुद्धान्ते रममाणस्य तव पृष्ठे करिष्यति । या हंसलीलां जानीथास्तामिमां मगधाधिप ॥ १५१ ॥
अहो आश्चर्यमेषा मे कथं पत्नी भविष्यति । चिन्तयन्निति राजागाद्गृहे नत्वा जिनेश्वरम् ॥ १५२ ॥
दुर्गन्धायाश्च गन्धोऽथ कर्मनिर्जरया ययौ । आभीर्या चैकया दृष्टोपाददे साऽन[3]पत्यया ॥ १५३ ॥
आभीर्योदरजातेव पाल्यमाना क्रमेण सा । बभूव यौवनप्राप्ता रूपलावण्यशालिनी ॥ १५४ ॥

१ चोक्ष निर्मलम् । २ निर्गतामपि । ३ अपत्यरहिता ।

अभयोऽभिदधे देव सेयं चोरी यया प्रभोः । अचोरि चित्तं पर्याप्तमूर्मिकाकथया तया ॥ १६८ ॥
स्मितं कृत्वा नृपोऽप्यूचे परिणेष्याम्यमूमपि । किं नाश्रौषीरुपादेयं स्त्रीरत्नं दुष्कुलादपि ॥ १६९ ॥
इति सद्योऽनवद्यांगीं राजा परिणिनाय ताम् । चकार चाग्रमहिषीमनुरागेण भूयसा ॥ १७० ॥
रेमेऽन्यदाक्षै राज्ञीभिर्नृपस्तत्रेत्यभूत् पणः । जितस्य पृष्ठेऽश्वस्येवाध्यारोहति जयी हि यः ॥ १७१ ॥
राज्ञ्यः सर्वाः कुलोत्पन्ना व्यजयन्त यदा नृपम् । तदा न्यधुर्वस्त्रमात्रं तत्पृष्ठे जयसूचकम् ॥ १७२ ॥
वेश्यासुता तु सा राज्ञी जिगाय नृपमन्यदा । आरुरोह च निःशंका तत्पृष्ठं कठिनाशया ॥ १७३ ॥
जहास च नृपोऽकस्मात्तत्स्मृत्वा भगवद्वचः । साप्युत्तीर्य तमप्राक्षीद्धासकारणमादरात् ॥ १७४ ॥
राजापि स्वामिनाख्यातं तस्याः पूर्वभवादिकम् । पृष्ठारोहणपर्यन्तं वृत्तान्तं तमचीकथत् ॥ १७५ ॥
तच्छ्रुत्वा द्राग्विरक्ता सानुज्ञाप्य पतिमादरात् । श्रीमहावीरपादान्ते परिव्रज्यामुपादते ॥ १७६ ॥
इतश्च मध्येऽम्भोराशि[1] पाताळभवनोपमः । आर्द्रको नाम देशोऽस्ति पुरं तत्रार्द्रकाभिधम् ॥ १७७ ॥
राजमानः श्रिया राजा राजेवानन्दको[2] दृशाम् । तत्राभूदार्द्रक इति महिषी तस्य चार्द्रका ॥ १७८ ॥
तयोरार्द्रककुमारोऽभवदार्द्रमनाः सुतः । स प्राप्तयौवनो भोगान् भुञ्जानोऽस्थाद्यथारुचि ॥ १७९ ॥
तस्य चार्द्रकराजस्य बभूव श्रेणिकस्य च । पारंपर्यागता प्रीतिस्तन्मनोनिगमोपमा ॥ १८० ॥
अन्यदा श्रेणिकः प्रैषीन्निजामात्यमुपार्द्रकम् । समर्प्य प्राभृतं प्राज्यं दोहदं स्नेहवीरुधः ॥ १८१ ॥
स मंत्री गतमात्रोऽपि तेनार्द्रकमहीभुजा । मूर्तिमच्छ्रेणिकाजर्य[3]मिवादृश्यत गौरवात् ॥ १८२ ॥

---

१ समुद्रस्य मध्ये । २ चन्द्र इव । ३ अजर्यं सख्यम् ।

तस्या दोहद इत्यासीद्गजारूढा शरीरिणाम् । महाभूत्योपकुर्वाणा भवाम्यभयदा यदि ॥ १४१ ॥
विज्ञपय्याथ राजानं तत्पित्रापूरि दोहदः । पूर्णे काले च सासूत प्राची रविमिवार्भकम् ॥ १४२ ॥
दोहदार्थानुसारेण तस्याथ दिवसे शुभे । चकाराभयकुमार इति मातामहोऽभिधाम् ॥ १४३ ॥
स क्रमाद्ववृधे विद्या निरवद्याः पपाठ च । अष्टवर्षोऽभवद्दक्षो द्वासप्तत्यां कलासु च ॥ १४४ ॥
सवयाः कलहे कोऽपि तं कोपादित्यतर्जयत् । किं त्वं जल्पसि यस्याहो पितापि ज्ञायते न हि ॥१४५॥
ऊचेऽभयकुमारस्तं ननु भद्रः पिता मम । पिता भद्रो भवन्मातुः प्रत्युवाचेति सोऽभयम् ॥ १४६ ॥
नन्दां प्रत्यभयोऽप्यूचे मातः को मे पितेत्यथ । अयं तव पिता भद्रश्रेष्ठी नन्देत्यचीकथत् ॥ १४७ ॥
भद्रस्तव पिता शंस मदीयं पितरं ननु । पुत्रेणेत्युदिता नन्दा निरानन्देदमब्रवीत् ॥ १४८ ॥
देशान्तरादागतेन परिणीतास्मि केनचित् । मम च त्वयि गर्भस्थे तमापुः केचिदौष्ट्रिकाः ॥ १४९ ॥
रहः स किंचिदुक्त्वा तैः सहैव क्वचिदप्यगात् । अद्यापि तं न जानामि कुतस्त्यः कश्चिदप्यहम् ॥१५०॥
स यान् किंचिज्जजल्प त्वामिति पृष्टाभयेन सा । अक्षराण्यर्पितान्येतानीति पत्रमदर्शयत् ॥ १५१ ॥
तद्विभाव्याभयः प्रीतोऽब्रवीन्मम पिता नृपः । पुरे राजगृहे तत्र गच्छामो ननु संप्रति ॥ १५२ ॥
आपृच्छ्य श्रेष्ठिनं भद्रं सामग्रीसंयुतस्ततः । नान्देयो[1] नन्दया सार्धं ययौ राजगृहं पुरम् ॥ १५३ ॥
मातरं बहिरुद्याने विमुच्य सपरिच्छदाम् । तत्र स्वल्पपरीवारः प्रविवेशाभयः पुरे ॥ १५४ ॥
इतश्च सेलितान्यासंस्तदा श्रेणिकभूभुजा । शतानि पंचैकोनानि मंत्रिणां मंत्रसत्रिणाम्[2] ॥ १५५ ॥

---

१ नन्दापुत्रः । २ मंत्रेपु दक्षाणाम् ।

आवाप्य पितुरादेशं स्वमनोरथसन्निभम् । जनान्तिकेन[1] सचिवं तमुवाचार्द्रकः सुतः ॥ १९६ ॥
मा यासीर्मामनापृच्छ्य श्रोतव्यं गच्छता त्वया । अभयं प्रति मे स्नेहद्रुमबीजनिभं वचः[2] ॥ १९७ ॥
मंत्र्यप्येवमिति प्रोचे कुमारं सुकुमारगीः । राज्ञा विसृष्टश्च ययौ वेत्रिदर्शितमाश्रयम् ॥ १९८ ॥
अन्येद्युर्मौक्तिकादीनि प्राभृतान्यार्द्रकेश्वरः । अर्पयित्वा स्वपुरुषं व्यसाक्षीन्मंत्रिणं च तम् ॥ १९९ ॥
अथार्द्रककुमारोऽपि हस्ते तस्यैव मंत्रिणः । प्रैषीद्विद्रुममुक्तादिवस्तून्यभयहेतवे ॥ २०० ॥
स पुमान्मंत्रिणा सार्धं गत्वा राजगृहे पुरे । प्राभृतान्यार्पयामास श्रेणिकायाभयाय च ॥ २०१ ॥
अभयस्य समाचख्यौ वाचिकं चेति मंत्रिराट् । स आर्द्रककुमारस्ते सख्यं सौभ्रात्रमिच्छति ॥ २०२ ॥
अचिन्तयच्चेत्यभयः कुशलो जिनशासने । विराधितश्रामण्यत्वाज्जातोऽनार्येषु स ध्रुवम् ॥ २०३ ॥
नूनमासन्नभव्यः स महात्मा राजपुत्रकः । अभव्यदूरभव्यानां न मया सख्यकामना[2] ॥ २०४ ॥
समानपुण्यपापानां प्रीतिः प्रायेण देहिनाम् । तेषां ह्येकः स्वभावः स्यान्मैत्री चैकस्वभावजा ॥ २०५ ॥
तदुपायेन केनापि कृत्वा तं जिनधर्मिणम् । आप्तो भवामि स ह्याप्तो योऽग्रेगूर्[3] धर्मवर्त्मनि ॥ २०६ ॥
तस्यार्द्रककुमारस्य तीर्थकृद्बिम्बदर्शनात् । उत्पद्यते यदि पुनर्जातिस्मरणमुत्तमम् ॥ २०७ ॥
तत्प्राभृतच्छलेनार्हत्प्रतिमामहमुत्तमाम् । प्रेषयामि रत्नमयीं महाचार्यप्रतिष्ठिताम् ॥ २०८ ॥
इत्यादिनाथदेवस्यांप्रतिमां[4] प्रतिमां न्यधात् । पेटामध्ये समुद्गस्थां[5] श्रेयस्कामगवीं[6] स्वयम् ॥ २०९ ॥
ततश्च धूपदहनघंटिकादीनि तत्पुरः । मुमोच देवपूजोपकरणान्यखिलान्यपि ॥ २१० ॥

१ अन्योऽन्यामत्रण जनान्तिकम् । २ मैत्रीमनोरथ. । ३ अग्रगामी । ४ अनुपमाम् । ५ करडस्थाम् । ६ कल्याणकामधेनुम् ।

चक्रे च प्रत्यहमपि तदाद्यपि तथैव सा । दिदृक्षमाणा तल्लक्ष्मांघ्रीन्मुनीनामवन्दत ॥ २८६ ॥
द्वादशाब्दे च दिङ्मूढः स महामुनिरन्यदा । तया तत्रागत उपालक्षि तल्लक्ष्मवीक्षणात् ॥ २८७ ॥
तमूपिं श्रीमती स्माह तत्र देवकुले तदा । मया वृतोऽसि त्वं नाथ त्वमेव हि वरो मम ॥ २८८ ॥
तदा गतोऽसि मां मुग्धां निर्धूय[1] स्वेदबिन्दुवत् । क्व यास्यस्यद्य तु प्राप्तस्त्वमृणं धारयन्निव ॥ २८९ ॥
दृष्टनष्टो यदाभूस्त्वं तदाद्यपि हि नाथ मे । परासोरिव[2] कालोऽगात्तत्प्रसीद भजस्व माम् ॥ २९० ॥
एवं स्थितेऽपि नैष्ठुर्याद्यदि मामवमन्यसे । भूत्वा तदग्निसाद्दास्ये स्त्रीहत्यापातकं तव ॥ २९१ ॥
राज्ञा महाजनेनान्यैरप्युद्वाहाय सोऽर्थितः । सस्मार तां गिरं दिव्यां व्रतारम्भनिषेधिकाम् ॥ २९२ ॥
तां स्मरन्दैवतीं वाचं निर्बन्धेनोदितश्च तैः । महात्मा पर्यणैषीत्तां श्रीमतीं भावि नान्यथा ॥ २९३ ॥
भुञ्जानस्य चिरं भोगान् श्रीमत्या सह तस्य तु । उत्पेदे क्रमयोगेण पुत्रो गार्हस्थ्यकीर्तनम्[3] ॥ २९४ ॥
क्रमेणासादयन् वृद्धिं विमुञ्चन् क्षीरकंठताम् । स वक्तुमुल्लसज्जिह्वो राजकीर[4] इवाभवत् ॥ २९५ ॥
पुत्रे तावति स प्रोचे श्रीमतीं मतिमद्वरः । अतः परं सहायस्ते पुत्रोऽस्तु प्रव्रजाम्यहम् ॥ २९६ ॥
श्रीमती धीमती तत्रान्तरे ज्ञापयितुं सुतम् । सतूलपूणिकं तर्कुम्[5]आदायासन्य्[6]उपाविशत् ॥ २९७ ॥
सा तर्कुकर्म प्रारेभे पप्रच्छ च स बालकः । किमेतदम्ब प्रारब्धं कर्मेतरजनोचितम् ॥ २९८ ॥
सावोचज्जात ते तातः प्रव्रज्यार्थं गमिष्यति । गतेऽस्मिन् पतिहीनायाः शरणं तर्कुरेव मे ॥ २९९ ॥

---

१ त्यक्त्वा । २ मृतायाः । ३ गृहस्थावासस्य कीर्तनरूपः । ४ राजशुकः । ५ तर्कुः सूत्रयन्त्रविशेषः भाषाया 'त्राक' इति ख्यातम् । ६ आसने ।

ततश्चैवं मदेच्छत्वप्रसन्नः पृथिवीपतिः । श्रेणिकस्य ददौ भंभासार इत्यपराभिधाम् ॥ ११२ ॥
इदं च न विसस्मार तदा राजा प्रसेनजित् । उत्तिष्ठेद्यद्गृहादग्निः स पुरे न वसेदिति ॥ ११३ ॥
ततश्चाचिंतयन्नाहमात्मानमनुशास्मि चेत् । सर्वथा तर्हि पर्याप्तं परेषामनुशासनम् ॥ ११४ ॥
इति तत्याज नगरं तद्राजा सपरिच्छदः । क्रोशेनैकेन च ततः शिबिरं स न्यवेशयत् ॥ ११५ ॥
सञ्चरन्तस्तदा चैवं वदन्ति स्म मिथो जनाः । क नु यास्यथ यास्यामो वयं राजगृहं[1] प्रति ॥ ११६ ॥
ततो राजगृहं नाम तत्रैव नगरं नृपः । चकार परिखावप्रचैत्यसौधाट्टबन्धुरम् ॥ ११७ ॥
राज्यार्हमानिनो[2] मैनं राज्यार्हं सूनवोऽपरे । ज्ञासिषुरित्यवाज्ञासीच्छ्रेणिकं पृथिवीपतिः ॥ ११८ ॥
पृथक् पृथक् कुमाराणां ददौ देशान्नरेश्वरः । न किंचिच्छ्रेणिकस्यास्तु राज्यमस्यायता[3]विति ॥ ११९ ॥
ततोऽभिमानी स्वपुरात् कलभः काननादिव । निःसृत्य श्रेणिकोऽगच्छद्वेणातटपुरं क्रमात् ॥ १२० ॥
तत्र च प्रविशन् भद्राभिधस्य श्रेष्ठिनोऽथ सः । कर्म लाभोदयं मूर्तमिवोपाविशदापणे ॥ १२१ ॥
तदा च नगरे तस्मिन् विपुलः कश्चिदुत्सवः । नव्यदिव्यदुकूलांगरागपौराकुलोऽभवत् ॥ १२२ ॥
भूरिक्रायकै[4]रासीत् स श्रेष्ठी व्याकुलस्तदा । कुमारोऽप्यार्पयद्भक्त्या तत्पुटापुटिकादिकम् ॥ १२३ ॥
द्रव्यं कुमारमाहात्म्याच्छ्रेष्ठी भूयिष्ठमार्जयत् । पुण्यपुंसां विदेशेऽपि सहचर्यो ननु श्रियः ॥ १२४ ॥
अद्याऽवितथपुण्यस्य[5] कस्यातिथिरसीत्यथ । श्रेणिकः श्रेष्ठिना पृष्टो भवतामित्यभाषत ॥ १२५ ॥

---

१ राज्ञो गृहम् । २ आत्मानं राज्यार्हं मन्यन्त इति तथा । ३ अस्य श्रेणिकस्यायतौ परिणामे राज्य भवत्विति हेतोः श्रेणिकस्य किंचिन्न ददावित्यन्वयः । ४ बहुग्राहकैः । ५ सत्यपुण्यवतः ।

तवैवान्वेषणे लग्ना भ्रमन्तः सागराम्बराम्[1] । चौर्यवृत्त्यैव जीवामः किमन्यैर्निःस्वशस्त्रिणाम्[2] ॥ २१४ ॥
मुनिरप्यभ्यधाद्भद्राः कष्टमापतितं यदि । धर्मानुबन्धि तत्कार्यं सफलं लोकयोर्द्वयोः ॥ २१५ ॥
केनापि पुण्ययोगेन मानुष्यकमवाप्यते । प्राप्तस्य तस्य च फलं धर्मः स्वर्गापवर्गदः ॥ २१६ ॥
जीवेष्वहिंसा सत्योक्तिरस्तेयं ब्रह्मचारिता । अकिंचन्यं च धर्मोऽयमार्हतोऽभिमतोऽस्तु वः ॥ २१७ ॥
स्वामिभक्ताः स्थ हे भद्रा राजवत्स्वाम्यहं च वः । तन्ममैवामुमध्वानं प्रपद्यध्वं सुमेधसः ॥ २१८ ॥
ते प्रोचुरग्रे स्वामी त्वं सांप्रतं गुरुरप्यसि । त्वया ज्ञापितधर्माः स्मो दीक्षयानुगृहाण नः ॥ २१९ ॥
इत्यार्द्रककुमारस्तान् प्रव्राज्य सहितश्च तैः । वन्दितुं श्रीमहावीरमभिराजगृहं ययौ ॥ २२० ॥
गच्छतश्च मुनेस्तस्य गोशालोऽभिमुखोऽभवत् । अकृतप्रणयस्तस्मै विवादं च प्रचक्रमे ॥ २२१ ॥
भूचराः खेचराश्चापि तत्रायाताः सहस्रशः । तस्थुः सामाजिकीभूय[3] कौतुकोत्तानितेक्षणाः[4] ॥ २२२ ॥
गोशालोऽथावदत् कष्टं तपोमूलं वृथैव भोः । शुभाशुभफलानां हि कारणं नियतिः खलु ॥ २२३ ॥
प्रत्यूचे स मुनिर्मा स्म सुखमस्तीत्यहो ब्रवीः । [5]कारणं पौरुषमपि मन्यस्वानेन हेतुना ॥ २२४ ॥
कारणं यदि सर्वत्र नियतं ननु मन्यसे । तत्तवापीष्टसिद्ध्यर्थं[6] प्रसज्जेरन् वृथा क्रियाः ॥ २२५ ॥
तथाहि नियतिनिष्ठः[7] स्थानस्थः किं न तिष्ठसि । भोजनार्थं प्रयतसे भोजनावसरे च किम् ॥ २२६ ॥
एवं नियतिवत्साधु पौरुषं स्वार्थसिद्धये । नियतेरप्यर्थसिद्धौ पौरुषं त्वतिरिच्यते ॥ २२७ ॥

---

१ पृथ्वीम् । २ निर्धनशस्त्रधारिणाम् । ३ समासदो भूत्वा । ४ कौतुकेन विस्फारितानीक्षणानि यैस्ते । ५ सुखमस्तीति चेन्मन्यसे तत्राह—कारणमित्यादि । ६ शुभाशुभादीष्टसिद्धये । ७ नियतौ निष्ठा आस्था यस्य सः ।

असौ साक्षात् स एवेति श्रेष्ठी चेतस्यचिन्तयत् १२६
नन्दायोग्यो वरो दृष्टः स्वप्नेऽद्य निशि यो मया । असावलसमध्येन ननु गंगा समागता ॥ १२७ ॥
सोऽत्राविष्ट च धन्योऽस्मि यद्भवस्यतिथिर्मम । असावलसमध्येन नसु गंगा समागता ॥ १२८ ॥
संवृत्याट्टं ततः श्रेष्ठी तं नीत्वा निजवेश्मनि । स्नपयित्वा परिधाप्य सगौरवमभोजयत् ॥ १२९ ॥
एवं च तिष्ठंस्तद्गेहे श्रेणिकः श्रेष्ठिनान्यदा । कन्यां परिणयेमां मे नन्दां नाम्नेत्ययाच्यत ॥ १३० ॥
ममाज्ञातकुलस्यापि कथं दत्से सुतामिति । श्रेणिकेनोक्त ऊचे स ज्ञातं तव गुणैः कुलम् ॥ १३१ ॥
ततस्तस्योपरोधेनोदधेरिव सुतां हरिः । श्रेणिकः पर्यणैषीत्तां भवद्धवलमंगलम् ॥ १३२ ॥
भुञ्जानो विविधान् भोगान् सह वल्लभया तया । अतिष्ठच्छ्रेणिकस्तत्र निकुञ्ज इव कुञ्जरः ॥ १३३ ॥
श्रेणिकस्य स्वरूपं तद्विवेदाशु प्रसेनजित् । सहस्राक्षा हि राजनो भवन्ति चरलोचनैः ॥ १३४ ॥
उग्रं प्रसेनजिद्रोगं प्रापाथान्तं विदन्निजम् । ततः श्रेणिकमानेतुं शीघ्रमादिशदौष्ट्रिकान् ॥ १३५ ॥
औष्ट्रिकेभ्यो ज्ञातवार्तः पितुरत्यर्तिवार्तया । नन्दां संबोध्य सस्नेहं प्रतस्थे श्रेणिकस्ततः ॥ १३६ ॥
वयं पांडुरकुड्या गोपाला राजगृहे पुरे । आह्वानमंत्रप्रतिमान्यक्षराणीति चार्पयत् ॥ १३७ ॥
माऽन्या तातस्य रोगार्तेर्मदार्तिर्भूदिति द्रुतम् । उष्ट्रीं श्रेणिकमारुह्य ययौ राजगृहं पुरम् ॥ १३८ ॥
तं दृष्ट्वा मुदितो राजा हर्षनेत्राश्रुभिः समम् । राज्येऽभ्यषिञ्चद्विमलैः सुवर्णकलशांबुभिः ॥ १३९ ॥
राजापि संस्मरन् पार्श्वजिनं पंचनमस्क्रियाम् । चतुःशरणमापन्नो विपद्य त्रिदिवं ययौ ॥ १४० ॥
विश्वं विश्वंभराभारं बभार श्रेणिकस्ततः । तेन गर्भवती मुक्ता गर्भं नन्दापि दुर्वहम् ॥ १४१ ॥

१ आग्रहणे । २ चरा एव लोचनानि येषां तैः । ३ गा धेनूः पालयन्ति पक्षे गा पृथ्वीं पालयन्तीति तथा ।

तत्प्रभावाद्भुतं दृष्ट्वा परं कोपमुपागताः । तेऽप्यार्द्रककुमारेण प्रत्यबोध्यन्त तापसाः ॥ ३४३ ॥
श्रीमहावीरसमवसरणे प्रेषिताश्च ते । गत्वोपाददिरे दीक्षां शमसंवेगशालिनः ॥ ३४४ ॥
तत्र श्रेणिकराजोऽपि तत्तथा गजमोक्षणम् । तापसप्रतिबोधं च श्रुत्वागादभयान्वितः ॥ ३४५ ॥
भक्त्या वन्दितवन्तं चानन्दयामास पार्थिवम् । सर्वकल्याणकारिण्या धर्मलाभाशिषा मुनिः ॥ ३४६ ॥
दृष्ट्वा मुनिमनाबाधमासीनं शुद्धभूतले । राजापृच्छन्ममाश्चर्यं भगवन् हस्तिमोक्षणात् ॥ ३४७ ॥
महर्षिरूचे नोर्वीश दुष्करं करिमोक्षणम् । तर्कुतन्तुपाशमोक्षो दुष्करः प्रतिभासते ॥ ३४८ ॥
राज्ञा पृष्टश्च स मुनिस्तर्कुतन्तुकथां तथा । कथयामास राजापि सलोकोऽपि विसिष्मिये ॥ ३४९ ॥
स आर्द्रककुमारर्षिरभाषत ततोऽभयम् । निःकारणोपकारी त्वं ममाभूर्धर्मबान्धवः ॥ ३५० ॥
त्वया हि प्रेषिता राजपुत्रार्हत्प्रतिमा मम । तद्दर्शनादहं जातिस्मरीभूयार्हतोऽभवम् ॥ ३५१ ॥
किं किं त्वया न दत्तं मे किं किं नोपकृतं ननु । येनाहमार्हते धर्मे कृत्वोपायं प्रवर्तितः ॥ ३५२ ॥
अनार्यत्वमहापंकनिमग्नोऽहं त्वयोद्धृतः । त्वद्बुद्ध्युत्पन्नबोधः सन्नार्यदेशे ह्युपागमम् ॥ ३५३ ॥
परिव्रज्यां प्रपन्नोऽस्मि त्वयाहं प्रतिबोधितः । ततोऽभयकुमार त्वं श्रेयोभिर्भृशमेधसे ॥ ३५४ ॥
श्रेणिकश्चाभयश्चान्ये लोकाश्च तमृषिं ततः । वन्दित्वा प्रीतमनसः स्वं स्वं प्रययुराश्रयम् ॥ ३५५ ॥

तदा पुरे राजगृहेऽभ्युपेतं श्रीवीरनाथं स मुनिर्ववन्दे ।
तत्पादपद्मद्वयसेवनात् स्वं कृतार्थयित्वा च शिवं प्रपेदे ॥ ३५६ ॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि चेलणायोग्यैकस्तम्भप्रासादनिर्माणाम्रफलापहारेण श्रेणिकविद्याग्रहणदुर्गन्धाकथार्द्रककुमारकथावर्णनो नाम सप्तमः सर्गः ॥

अस्त्येव सम्यगित्युक्ते तेन भूयोऽपि भूपतिः । ऊचे नन्दोदरिण्यासीत् किमपत्यमजायत ॥ १७१ ॥
अथाख्यत्कान्तदन्तांशुश्रेणिः श्रेणिकसूरिदम् । देवाभयकुमाराख्यं सा नन्दनमजीजनत् ॥ १७२ ॥
किंरूपः किंगुणः सोऽस्तीत्युदिते सति भूभुजा । ऊचेऽभयः स एवाहं स्वामिन्नस्मीति चिन्त्यताम् ॥ १७३ ॥
परिष्वज्यांकमारोप्य तमाघ्राय च मूर्धनि । स्नेहात्स्नपयितुमिव राजासिञ्चद्दृगंभसा ॥ १७४ ॥
कुशलं वत्स ते मातुरिति पृष्टे महीभुजा । इति विज्ञपयामास बद्धाञ्जलिपुटोऽभयः ॥ १७५ ॥
अनुसरन्ती भृंगीव त्वत्पादांभोजसंगमम् । स्वामिन्नायुष्मती मेऽम्बा बाह्योद्यानेऽस्ति संप्रति ॥ १७६ ॥
ततो नन्दां समानेतुममन्दानन्दकन्दलः । न्ययुक्त सर्वसामग्रीमग्रे कृत्वा नृपोऽभयम् ॥ १७७ ॥
ततः स्वयमपि प्राज्योत्कंठोल्लिखितमानसः । नन्दामभिययौ राजा राजहंस इवाब्जिनीम् ॥ १७८ ॥
शिथिलीभूतवलयां कपोललुलितालकाम् । अनञ्जनाक्षीं कबरीधारिणीं मलिनांशुकाम् ॥ १७९ ॥
तनोस्तनिम्नां दधतीं द्वितीयेन्दुकलातुलाम् । ददर्श राजा सानन्दो नन्दामुद्यानवासिनीम् ॥ १८० ॥
नन्दामानंद्य नृपतिर्नीत्वा च स्वं निकेतनम् । पट्टराज्ञीपदेऽकार्षीत् सीतामिव रघूद्वहः ॥ १८१ ॥
ततः स्वसुः सुसेनायाः पुत्रीं मंत्रिषु धुर्यताम् । राज्यस्यार्धं चाभयाय नृपतिः श्रेणिको ददौ ॥ १८२ ॥
भक्तितः पितरि स्वस्य पदातिपरमाणुताम् । मन्वानः साधयामास दुःसाध्यान् भूभुजोऽभयः ॥ १८३ ॥
इतश्च वसुधावध्वा मौलिमाणिक्यसन्निभा । वैशालीति श्रीविशाला नगर्यस्त्यगरीयसी ॥ १८४ ॥
आखंडल इवाखंडशासनः पृथिवीपतिः । चेटीकृतारिभूपालस्तत्र चेटक इत्यभूत् ॥ १८५ ॥

---

१ गार्भिणी । २ कान्ता मनोहरा दन्तकिरणपङ्क्तिर्यस्य सः । ३ कुशलम् । ४ श्रिया लक्ष्म्या विशाला । ५ दासीकृताः शत्रुनृपा येन सः ।

मृतं जमालिं विज्ञाय वन्दित्वा गौतमः प्रभुम् । पप्रच्छ कां गतिं प्राप जमालिः स महातपाः ॥ १०१ ॥
स्वाम्याख्यल्लान्तके कल्पेऽभवत् किल्बिषिकामरः । त्रयोदशसमुद्रायुर्जमालिः स तपोधनः ॥ १०२ ॥
भूयोऽपि गौतमोऽपृच्छत्तपोभिस्तादृशैरपि । सोऽभूत् किल्बिषिकः कस्माच्च्युत्वा च क्व स यास्यति ॥ १०३ ॥
अथाख्यद्भगवान् धर्मगुरूणां शीलशालिनाम् । उपाध्यायकुलगणसंघानां च विरोधिनः ॥ १०४ ॥
तपस्व्यपि जायन्ते जीवाः किल्बिषिकादिषु । जमालिरपि दोषेण तेन किल्बिषिकोऽभवत् ॥ १०५ ॥
॥ युग्मम् ॥
च्युत्वा ततः पंचकृत्वो भ्रान्त्वा तिर्यङ्नृनाकिषु । अवाप्तबोधिर्निर्वाणं जमालिः समवाप्स्यति ॥ १०६ ॥
धर्माचार्यप्रभृतीनां तन्न भाव्यं विरोधिना । एवमाख्याय भगवान् विहरन्नन्यतो ययौ ॥ १०७ ॥
इतश्च साकेतपुरे यक्षो नाम्ना सुरप्रियः । स चित्र्यते च प्रत्यब्दं क्रियते च महोत्सवः ॥ १०८ ॥
स चित्रकं[1] चित्रकरं चित्रितः सन्निहन्ति च । अचित्रितः पुनर्मारिं विकरोति पुरेऽखिले ॥ १०९ ॥
ततो भीताश्चित्रकराः प्रावर्तन्त पलायितुम् । रुद्धाश्च भूभुजा सर्वे स्वप्रजामारिभीरुणा ॥ ११० ॥
तेषामात्त[2]प्रतिभुवां लिखित्वा पत्रकेषु च । घटे क्षिप्तानि नामानि यमाक्ष[3]पटलोपमे ॥ १११ ॥
[4]आपातमात्रेणाकृष्टमब्देऽब्दे यस्य पत्रकम् । निर्ययौ चित्रकृद्यक्षं स गत्वा तमचित्रयत् ॥ ११२ ॥
एवं व्रजति काले च कौशांब्या एकदैककः । चित्रकृद्दारकस्तत्र चित्रशिक्षार्थमाययौ ॥ ११३ ॥
चित्रकृत्स्थविरायाः स तस्थौ कस्याश्चिदोकसि । समं तत्सूनुना मैत्री जज्ञे तस्य क्रमेण च ॥ ११४ ॥

---

१ चित्रयतीति चित्रकस्तम् । २ आत्ताः गृहीताः प्रतिभुवः साक्षिणो येषा तेषाम् । ३ यमस्य नेत्रपटलोपमे । ४ तत्कालमात्रेण ।

चुलनीपितृवत्सोऽपि स्वाम्यग्रे श्रावकव्रतम् । नियमांश्चाग्रहीत्पत्नीस्ता विना त्वमुचत् स्त्रियः ॥ ३३० ॥
श्रावस्त्यामन्यदा पुर्यां भगवान् विहरन् ययौ । तत्र कोष्ठकसंज्ञे चोपवने समवासरत् ॥ ३३१ ॥
तत्र चानन्दतुल्यर्द्धिर्गृह्यासीन्नन्दिनीपिता । अश्विनीव शशांकस्य तस्य चाश्विन्यभूत्प्रिया ॥ ३३२ ॥
आकर्ण्य श्रीमहावीरवन्दनाद्धर्मदेशनाम् । श्रावकत्वं नियमांश्च सोऽप्यानन्द इवाग्रहीत् ॥ ३३३ ॥
तत्रैवानन्दतुल्यर्द्धिर्गृह्यासील्लान्तकापिता । तत्पत्नी फाल्गुनीनामा फल्गु[1] वल्गु[2] प्रजल्पिनी ॥ ३३४ ॥
श्रीवीरस्वामिपादान्ते [3]समाकर्णितदेशनः । श्रावकत्वं नियमांश्च सोऽप्यानन्द इवाददे ॥ ३३५ ॥
सुरैरप्यपरिक्षोभ्याः श्रावकत्वाद्गिरि[4]स्थिराः । दशैवं श्रावकवराः श्रीवीरस्वामिनोऽभवन् ॥ ३३६ ॥
एवं च बोधयन् भव्यानंभोजानीव भास्करः । भूयो जगाम कौशाम्बीं नगरीं परमेश्वरः ॥ ३३७ ॥
प्रभोश्चरमपौरुष्यां वन्दनायेन्दुभास्करौ । स्वाभाविकविमानस्थौ तस्यां युगपदेयतुः ॥ ३३८ ॥
तयोर्विमानतेजोभिर्नभस्युद्योतिते सति । लोकस्तथैव तत्रास्थात् कौतुकव्यग्रमानसः ॥ ३३९ ॥
विज्ञायोत्थानसमयं चन्दना तु प्रवर्तिनी । वीरं प्रणम्य वसतिं स्वां ययौ सपरिच्छदा ॥ ३४० ॥
मृगावती तु तत्रस्थमार्तण्डोद्यततेजसा । नाज्ञासीद्रात्रिमायातां तत्रैवास्थाद्दिनभ्रमात् ॥ ३४१ ॥
चन्द्रार्कयोर्गतवतोर्ज्ञात्वा रात्रिं मृगावती । प्रतिश्रयमुपेयाय चकिता काललंघनात् ॥ ३४२ ॥
तामूचे चन्दना साध्वि कुलीनायास्तवेदृशम् । किं युज्यते यन्निशायां बहिरेकाकिनी स्थिता ॥ ३४३ ॥
इत्युक्ते चन्दनां तस्याः क्षमयन्त्या मुहुर्मुहुः । घातिक्षयान्मृगावत्या उदपद्यत केवलम् ॥ ३४४ ॥

---

१ अल्पाक्षरम् । २ मनोहरम् । ३ समाकर्णिता देशना येन सः । ४ गिरिवत् स्थिराः । ५ कालातिक्रमात् ।

सुज्येष्ठैवं गुणज्येष्ठा तस्या धर्मं निराकरोत् । श्रुतकूपनिपानाभैर्वचोभिर्युक्तिवर्मितैः ॥ २०० ॥
ततो निरुत्तरीभूतां तां मुद्रितमुखीमिव । शुद्धान्तदास्यो जहसुर्मुखमर्कटिकादिभिः ॥ २०१ ॥
स्वस्वामिनीजयोन्मत्तास्तामन्तःपुरचेटिकाः । उत्तालतुमुलाः कंठे गृहीत्वा निरवासयन् ॥ २०२ ॥
उपादातुं गता दातुं प्रतीतेवाथ तापसी । पूजार्थिन्यागता सैवं प्रत्युतानर्थमासदत् ॥ २०३ ॥
यान्ती च तापसी दध्याविमां वैदग्ध्यगर्विताम् । भूयसीषु सपत्नीषु दुःखपात्रीकरोम्यहम् ॥ २०४ ॥
सुज्येष्ठारूपमथ सा पिंडस्थध्यानलीलया । कृत्वा मनस्यालिलेख पटेऽखिलकलापटुः ॥ २०५ ॥
लिखितं तच्च तद्रूपं त्वरिता क्रूरतापसी । गत्वा राजगृहे राज्ञेऽदर्शयच्छ्रेणिकाय सा ॥ २०६ ॥
तां दृष्ट्वा लिखितां नेत्रमृगैकमृगजालिकाम् । राजा राजगृहाधीशः सानुरागमवर्णयत् ॥ २०७ ॥
यान्त्यस्याः केशदासत्वं ते कलापाः कलापिनाम् । मनोज्ञनयनं वक्त्रं निलीनालीव पंकजम् ॥ २०८ ॥
पत्रावलंबनं कंबोः कुरुते कंठकन्दलः । क्रीडत्कोकं सर इव वक्षो वक्षोजभूषितम् ॥ २०९ ॥
नितंबः स्मरधानुष्कयोग्या भूरिव विस्तृतः । आलानविभ्रमहरावूरू च क्रमवर्तुलौ ॥ २१० ॥
विसकांडविडंबिन्यौ जंघे सरलकोमले । पादौ च ऋजुजंघाकावुन्नालनलिनोपमौ ॥ २११ ॥
अहो सौन्दर्यमद्भुतमहो लावण्यमुज्ज्वलम् । अहो अपरमप्यस्याः सर्वं रम्यं मृगीदृशः ॥ २१२ ॥

---

१ श्रुतस्यागमस्य कूपनिपानसदृशैः । २ अन्तःपुरदास्यः । ३ नेत्रमेव मृगस्तस्य ग्रहण एकाद्वितीया मृगजालसमाना ताम् । ४ मयूराणाम् । ५ निलीना नितरा लीना अलयो भ्रमरा यस्मिंस्तदिव । ६ शंखस्य । ७ स्तनभूषितम् । ८ स्मर एव धनुर्धरस्तस्य योग्या । ९ आलानो गजबंधनस्तंभः ।

तस्य चार्हन्निति ख्यातिं लोक आकर्ण्य मुग्धधीः । उपेत्योपेत्य विदधे निरन्तरमुपासनाम् ॥ ३५७ ॥
इतश्च समये प्राप्ते गौतमः स्वाम्यनुज्ञया । प्राविशत् पुरि भिक्षार्थं चिकीर्षुः षष्ठपारणम् ॥ ३५८ ॥
गोशालोऽत्रास्ति सर्वज्ञोऽर्हन्नित्याकर्ण्य तत्र च । गौतमः सविषादोऽगादात्तभिक्षोऽन्तिके प्रभोः ॥३५९॥
यथावत् पारणं कृत्वा गौतमः समये प्रभुम् । पश्यतां पौरलोकानामपृच्छत् स्वच्छधीरिति ॥ ३६० ॥
स्वामिन्नगर्यामेतस्यां व्याहरन्त्यखिला जनाः । सर्वज्ञ इति गोशालं किमेतद्घटते न वा ॥ ३६१ ॥
अथाख्यद्भगवानेष सूनुर्मंखस्य मंखलेः । अजिनोऽपि जिनंमन्यो गोशालः कपटालयः ॥ ३६२ ॥
मयैव दीक्षितश्चायं शिक्षां च ग्राहितो मया । मिथ्यात्वं प्रतिपन्नो मे सर्वज्ञो नैष गौतम ॥ ३६३ ॥
तत्तु स्वामिवचः श्रुत्वा पौराः पुर्यामितस्ततः । एवं बभाषिरेऽन्योऽन्यं चत्वरेषु त्रिकेषु च ॥ ३६४ ॥
हं हो अर्हन्निहायातो वीरस्वामी वदत्यदः । गोशालो मंखलिसुतो मिथ्या सर्वज्ञमान्यसौ ॥ ३६५ ॥
जनश्रुत्या ततः श्रुत्वा गोशालः कालसर्पवत् । आपूर्यमाणः कोपेन तस्थावाजीवकावृतः ॥ ३६६ ॥
इतश्च स्वामिनः शिष्य आनन्दः स्थविराग्रणीः[1] । षष्ठपारणकं कर्तुं भिक्षार्थं प्राविशत् पुरि ॥ ३६७ ॥
हालाहलागृहासीनो गोशालस्तत्प्रदेशगम् । आनन्दमुनिमाहूय साधिक्षेपमदोऽवदत् ॥ ३६८ ॥
भो आनन्द तवाचार्यो लोकात् सत्कारमात्मनः । इच्छन् वीरः सभान्वक्षं[2] मां तिरस्कुरुतेतराम् ॥३६९॥
मंखपुत्रमनर्हन्तमसर्वज्ञं च वक्ति माम् । तेजोलेश्यां न मे वेत्ति विपक्षदहनक्षमाम्[3] ॥ ३७० ॥
भस्मराशीकरिष्यामि तमहं सपरिच्छदम् । त्वामेवैकं विमोक्ष्यामि दृष्टान्तोऽत्र निशम्यताम् ॥ ३७१ ॥

१ स्थविरेषु मुख्यः । २ सभासमक्षम् । ३ शत्रुदहने समर्थाम् ।

स्वामिन्यप्रभविष्णुः सा महावात्येव[1] पर्वते। प्रभुं प्रदक्षिणीचक्रे भक्तिभागनुहारिणी ॥ ४१५ ॥
संतापमात्रं स्वाम्यंगेऽभूत्तेजोलेश्यया तया। तीरैकक्षोद्भवेनेव[2] दावेन सरिदंभसः ॥ ४१६ ॥
अकार्याय प्रयुक्ता धिगनेनेति[3] क्रुधेव सा। तेजोलेश्या निवृत्यांगे गोशालस्याविशद्बलात् ॥ ४१७ ॥
तयान्तर्दह्यमानोऽपि गोशालो धार्ष्ट्यमाश्रितः। भगवन्तं महावीरमभ्यधत्तैवमुद्धतः ॥ ४१८ ॥
मत्तेजोलेश्यया ध्वस्तः षण्मासान्ते हि काश्यप। पित्तज्वरपराभूतश्छद्मस्थोऽपि विपत्स्यते ॥ ४१९ ॥
स्वाम्यथोवाच गोशाल मृषा ते वागहं यतः। अन्यानि षोडशाब्दानि विहरिष्यामि केवली ॥ ४२० ॥
स्वतेजोलेश्ययैव त्वं पुनः पित्तज्वरार्दितः। विपत्स्यसे सप्तदिनपर्यन्ते नात्र संशयः ॥ ४२१ ॥
तेजोलेश्याक्लिश्यमानवपुष्को विलपन्नथ। भूमौ पपात गोशालः शालद्रुरिव वायुना ॥ ४२२ ॥
गुर्ववज्ञाप्रकुपिता[4] मुनयो गौतमादयः। एवं मर्माविधा वाचोच्चकैर्गोशालमूचिरे ॥ ४२३ ॥
धर्माचार्यप्रातिकूल्यभाजां भो भवतीदृशम्। तेजोलेश्या क्व तव सा धर्माचार्ये नियोजिता ॥ ४२४ ॥
सुचिरं विद्रुवाणोऽपि निघ्नन्नपि महामुनी। कृपयोपेक्षितो भर्त्रा स्वयमेव विपत्स्यसे ॥ ४२५ ॥
व्यपत्स्यथाः पुरापि त्वं वैशाकायनलेश्यया। स्वलेश्यया शीतया त्वां नारक्षिष्यद्यदि प्रभुः ॥ ४२६ ॥
शार्दूल इव गर्तान्तः पतितस्तेषु साधुषु। निकर्तुं सोऽक्षमस्तस्थावुल्लुठनपरः[5] क्रुधा ॥ ४२७ ॥
निःश्वसन् दीर्घमुष्णं च दंष्ट्रालोमानि चोत्खनन्। पादाभ्यां ताडयन्नुर्वीं हतोऽस्मीति मुहुर्ब्रुवन् ॥ ४२८ ॥

---

१ वातानां समूहो वात्या, महती चासौ वात्या तया। २ तीरे कक्षं वनं तदुद्भवेन। ३ अनेन गोशालेन। ४ गुरोस्तिरस्कारेण कुपिताः। ५ उल्लुठनपरः।

दूतेन चागत्य तथाख्याते श्रेणिकभूपतिः । खेदमासादयामास जितो भट इवारिभिः ॥ २२८ ॥
अभयोऽपि हि तत्रस्थः पितृपादाब्जषट्पदः । उवाच तात मा शोचीः करिष्ये वः समीहितम् ॥२२९॥
कला[1]कलापपाथोधिकुंभजन्माभयोऽपि हि । गृहे गत्वालिखद्रूपं फलके मगधेशितुः ॥ २३० ॥
ततो गुटिकया वर्णस्वरभेदं विधाय सः । वणिग्वेशं गृहीत्वा च वैशालीं नगरीं ययौ ॥ २३१ ॥
उपचेटकराजान्तःपुरं चापणमग्रहीत् । तत्रान्तःपुरचेटीनां क्रेतव्यमधिकं ददौ ॥ २३२ ॥
अभयश्चार्चयन्नित्यं श्रेणिकं लिखितं पटे । दासीपृष्टश्चाख्यदयं देवो मे श्रेणिको नृपः ॥ २३३ ॥
दास्यश्च कथयामासुः सुज्येष्ठायै सविस्मयाः । रूपं तादृग्यथा दृष्टं श्रेणिकस्याति[2]दैवतम् ॥ २३४ ॥
सुज्येष्ठाथ सखीप्रायां ज्येष्ठदासीं समादिशत् । द्रुतमानय तद्रूपं महत्कौतूहलं मम ॥ २३५ ॥
अभयाभ्युपरोधेन तदुपादाय दास्यपि । स्वामिन्यै दर्शयामास रूपं श्रेणिकभूपतेः ॥ २३६ ॥
रूपमत्यन्तसुभगं सुज्येष्ठा तु विलोक्य तत् । निष्पंदनेत्रनलिना योगिनीव ल[3]यं ययौ ॥ २३७ ॥
जगाद च क्षणं स्थित्वा गत्वा रहसि सत्वरम् । गूढाभिप्रायसर्वस्वनिधानवसुधां सखीम् ॥ २३८ ॥
यस्येदं फलके रूपं धी[4]मतीच्छामि तं पतिम् । तदेनं संघटयितुं विधिर्भ[5]ट्टारकोऽस्तु कः ॥ २३९ ॥
यद्ययं मे पतिर्न स्यात्तदानीं हृदयं मम । प[6]चेलिममिवैर्वारु द्विधा भावि न संशयः ॥ २४० ॥
तद्ब्रूहि क इहोपाय उपायो यदि वास्त्ययम् । शरणं वणिगेवैष य एतद्रूपमर्चति ॥ २४१ ॥

---

१ कलासमूहाना पाथोधिः समुद्रस्तस्य शोषणे कुम्भजन्माऽगस्त्यः । २ दैवतमतिक्रान्तम् । ३ तन्मयताम् । ४ हे बुद्धिमति । ५ विधिर्विधाता एव भट्टारकः पूज्यः । ६ पचेलिमं पक्वमेर्वारु फलविशेषः ।

तिर्यग्जातिषु सर्वासूत्पत्स्यतेऽथ मुहुर्मुहुः । स शस्त्रवध्यः सर्वत्र दाहार्तश्च मरिष्यति ॥ ५०० ॥
इत्थं कालमनन्तं तु भवान् भ्रान्त्वातिदुःखदान् । स समुत्पत्स्यते वेश्या बही राजगृहात्पुरात् ॥५०१॥
सुप्ता भूषणलुब्धेन कामिना सा हनिष्यते । भूयो राजगृहस्यान्तर्वेश्या भूत्वा विपत्स्यते ॥ ५०२ ॥
स विन्ध्यमूले चोभेले सन्निवेशे भविष्यति । विप्रकन्याथ विप्रेण केनापि परिणेष्यते ॥ ५०३ ॥
गुर्विणी श्वशुरगृहादायान्ती दववह्निना । मार्गे दग्धोत्पत्स्यतेऽग्निकुमारेषु सुरेषु सा ॥ ५०४ ॥
ततोऽपि मानुषो भावी प्रव्रज्यां च ग्रहीष्यति । विराधितश्रामण्यः सन्नसुरेषु भविष्यति ॥ ५०५ ॥
पुनः पुनर्मर्त्यभवान् कतिचित्प्राप्य सोऽसकृत् । विराधितश्रामण्यः सन् भविष्यत्यसुरादिषु ॥ ५०६ ॥
पुनश्च मानुषीभूयातीचाररहितं व्रतम् । पालयित्वा स सौधर्मे कल्पे देवो भविष्यति ॥ ५०७ ॥
एवं सप्तभवान् यावच्छ्रामण्यमनुपाल्य च । कल्पे कल्पे समुत्पद्य सर्वार्थमपि यास्यति ॥ ५०८ ॥
ततश्च्युत्वा विदेहेषु भूत्वाढ्यतनयः सुधीः । दृढप्रतिज्ञो नाम्ना स विरक्तः प्रव्रजिष्यति ॥ ५०९ ॥
स जातकेवलो ज्ञात्वा[1]गोशालकभवान्निजान् । गुर्ववज्ञामुनिवधमूलान् शिष्येषु शंसिता[2] ॥ ५१० ॥
निर्देक्ष्यति च शिष्येभ्यो गुर्ववज्ञादि सर्वथा । न कार्यमन्वभूवं हि तत्फलानि बहून् भवान् ॥ ५११ ॥
स्वशिष्यान् बोधयित्वैवं विहरन्नवनीतलम् । कर्मक्षयेण गोशालजीवो निर्वाणमेष्यति ॥ ५१२ ॥
भूयोऽपि गौतमोऽपृच्छत् केन प्राग्जन्मकर्मणा । प्रत्यनीको बभूवैवं गोशालो भगवंस्तव ॥ ५१३ ॥
अथाख्यद्भगवानत्र जंबूद्वीपेऽत्र भारते । प्राक्चतुर्विंशतावर्हन्नुदायो नामतोऽभवत् ॥ ५१४ ॥

---

१ गोशालकादारभ्य निजान् भवान् ज्ञात्वेत्यर्थः । २ कथयिता ।

तस्यापि धर्म[1]व्याख्याने सोऽश्रौषीद्यन्मुनिस्त्यजेत् । पृथिवीकायमुख्यानां समारंभं त्रिधापि हि ॥५३०॥
ईश्वरोऽचिन्तयत्कोऽमून्भारजेत तथा ह्यसौ । पृथ्व्यां निषीदत्यश्नाति चाग्निपक्वं पिबत्यपः ॥ ५३१ ॥
आत्मन्यपि विसंवादि तद्वदत्येष कुवदः[2] । वरं गणधरः सोऽस्तु यद्वा सोऽपि विरुद्धवाक् ॥ ५३२ ॥
अमुष्यां तदलं धान्यां धर्मं वक्ष्यामि तं स्वयम् । अविरक्तः सुखसुखमनुष्ठास्यति यं जनः ॥ ५३३ ॥
एवं चिन्तयतस्तस्य मूर्ध्नि विद्युत् पपात खात् । मृत्वा च सप्तमावन्यामुदपादि स नारकः ॥ ५३४ ॥
श्रुतशासनसम्यक्त्वप्रत्यनीकत्वपापजम् । दुःखं तत्र चिरं भुक्त्वा मत्स्यः सोऽब्धाविहाभवत् ॥ ५३५ ॥
भूयोऽगात्सप्तमोर्व्यां सोऽत्रैत्य काकः खगोऽभवत् । ततोऽगात् प्रथमावन्यां दुष्टश्चात्रैत्य चाभवत्[3]॥५३६॥
भूयोऽगात्प्रथमावन्यां खरो[4]ऽभूदत्र पङ्गभवान् । ततो मनुष्यः संजज्ञे मृतो नाभूद्वनेचरः[5] ॥ ५३७ ॥
ततो मृत्वा विप्रालोऽभूत्ततोऽपि नरकं ययौ । उद्धृत्य चाक्रिको[6]ऽत्राभूत् कुष्ठी[7] कृम्याकुलस्ततः ॥५३८॥
स पञ्चाशतमब्दानि भक्षितः कृमिभिर्मृतः । अकामनिर्जरायोगाद्देवत्वं प्रत्यपद्यत ॥ ५३९ ॥
ततश्च्युतो नृपः सोऽभून्मृत्वागात्सप्तमावनिम् । नृतिर्यङ्नरकेष्वेवं भ्रान्त्वा गोशालकोऽभवत् ॥५४०॥
एवं पूर्वभवाभ्यासवासनावेशतः स तु । तीर्थकृद्धर्मसाधूनां प्रत्यनीकोऽभवद्भृशम् ॥ ५४१ ॥
इति स्वामिवचः श्रुत्वाबुध्यन्त बहवो जनाः । प्राव्रजंश्च भवोद्विग्नाः श्रावकत्वं च केऽप्यधुः ॥ ५४२ ॥
स्वामी तु रक्तातीसारपित्तज्वरवशात् कृशः । गोशाललेश्यया जज्ञे चकार न तु भेषजम् ॥ ५४३ ॥

---

१ असौ प्रत्येकबुद्धो मुनिः । २ कुत्सित वदतीति तथा । ३ खग एवाभवत् । ४ रासभः । ५ ना मनुष्यः वनेचरो मनुष्योऽभूदित्यर्थः । ६ कुलालः । ७ कुष्ठव्याधिमान् ।

सुज्येष्ठागाद्उपादाय यावद्रत्नकरंडिकाम् । नापश्यच्छ्रेणिकं तावदभ्रान्तर्भूतचन्द्रवत्[1] ॥ २५७ ॥
तदा चापूर्णकामत्वाद्भगिनीहरणादपि । ज्येष्ठारटन्मुषितास्मि ह्रियते हन्त चिल्लणा ॥ २५८ ॥
द्राक् चेटकं संनह्यन्तं रथी वीरंगकस्तदा । उवाच कोऽयमाक्षेपो मयि सत्यपि नाथ ते ॥ २५९ ॥
ततो वीरंगकः सज्जीभूय युद्धाय दुर्धरः । सुरंगाद्वारमभ्यागात् कन्याप्रत्याजिहीर्षया ॥ २६० ॥
सुरंगया गच्छतश्च ततश्च सुलसासुतान् । वीरंगको महाबाहुरेकेनैवेषुणावधीत् ॥ २६१ ॥
संकीर्णत्वात् सुरंगायाः स रथी तद्रथानथ । यावदाकर्षयत्तावद्दूरेऽगान्मगधाधिपः ॥ २६२ ॥
ततोऽर्धजरतीयेन कृताकृतसमीहितः[2] । वीरंगकस्तदखिलं चेटकाय व्यजिज्ञपत् ॥ २६३ ॥
दुहितुर्हरणात्तेषां रथिकानां वधादपि । चेटको युगपद्रोपतोषाभ्यामभ्यपूर्यत ॥ २६४ ॥
सुज्येष्ठाचिन्तयदहो धिग्धिग्विषयगृध्नुता[3] । सुखकांक्षिभिरीदृक्षा यदाप्यन्ते विडंबनाः ॥ २६५ ॥
इत्थं विरक्ता सुज्येष्ठा स्वयमापृच्छ्य चेटकम् । समीपे चन्दनार्यायाः परिव्रज्यामुपाददे ॥ २६६ ॥
श्रेणिकोऽपि हि सुज्येष्ठे सुज्येष्ठ इति चिल्लणाम् । अभ्यालपदजानानश्चिल्लणां तत्र तस्थुषीम् ॥ २६७ ॥
चिल्लणाकथयत्तस्मै सुज्येष्ठा न समागता । सुज्येष्ठायाः कनिष्ठाहं चिल्लणेत्यभिधानतः ॥ २६८ ॥
श्रेणिको व्याजहारैवं नायासोऽभून्मुधा मम । सुभ्रु त्वमपि सुज्येष्ठा तस्या न खलु हीयसे ॥ २६९ ॥
चिल्लणा पतिलाभेन भगिनीवञ्चनेन च । निकामं हर्षशोकाभ्यां समकालमलिप्यत ॥ २७० ॥
श्रेणिकः पवनेनेव रथेनांहस्यरंहसा[4] । शीघ्रमाप स्वनगरं पश्चात्तस्याभयोऽपि हि ॥ २७१ ॥

---

१ मेघान्तरितचन्द्रवत् । २ कृत चाकृत च समीहितं येन सः । ३ विषयलुब्धता । ४ अतिवेगवता ।

## ॥ नवमः सर्गः ॥

इतश्च यः सुदंष्ट्राहि कुमारो नौजुषः प्रभोः । उपसर्गानकृत स क्वचिद्ग्रामेऽभवद्बली ॥ १ ॥
स कृष्याजीवकोऽन्येद्युः सीरेण कष्टुमुर्वराम् । यावत्प्रवृत्तस्तावत्तं श्रीवीरो ग्राममाययौ ॥ २ ॥
स्वामिना तस्य बोधाय प्रेषितो गौतमोऽवदत् । किमिदं क्रियते दैवनियुक्तमिति सोऽब्रवीत् ॥ ३ ॥
भूयोऽपि गौतमोऽवोचत् क्षुद्रजीविकयानया । जीवतस्तव किं सौख्यं किं वा सुचरितं भवेत् ॥ ४ ॥
न केवलमिहैवेदं कष्टकृद्भद्र कर्म ते । प्राणातिपातभूयिष्ठं कष्टायान्यभवेष्वपि ॥ ५ ॥
कर्मणोऽमुष्य कष्टस्य कष्टं लक्षांशतोऽपि हि । क्रियते धर्मकार्ये चेत्कष्टान्तः स्यात्तदा खलु ॥ ६ ॥
इत्यादि गौतमेनोक्तः स ऊचे साध्वहं त्वया । बोधितोऽद्य भवोद्विग्नं परिव्राजय मां ततः ॥ ७ ॥
प्रबुद्ध इति विज्ञाय गौतमस्तमदीक्षयत् । गन्तुं श्रीवीरपादान्ते समं तेन चचाल च ॥ ८ ॥
पप्रच्छ हालिकर्षिस्तं गन्तव्यं भगवन् क नु । गौतमोऽप्यवदत् साधो गन्तव्यमुपमद्गुरु ॥ ९ ॥
हालिकोऽप्यब्रवीदेवं न तुल्यः कोऽपि ते ध्रुवम् । तवापि किं गुरुः कोऽपि स च स्यात्कीदृशो ननु १०
अथाख्यद्गौतमोऽस्तीह मम विश्वगुरुर्गुरुः । चतुस्त्रिंशदतिशयः सर्वज्ञश्चरमो जिनः ॥ ११ ॥
तच्छ्रुत्वा हालिकमुनिः सर्वज्ञे प्रीतिमुद्वहन् । उपार्जयद्बोधिबीजं प्रययौ चानुगौतमम् ॥ १२ ॥

---

१ हलेन । २ पृथ्वीम् क्षेत्रमिति यावत् । ३ दैवनियोग कर्म करोमीति सोऽब्रवीत् । ४ अमुष्य कष्टरूपस्य कर्मणो लक्षांशेनापि धर्मकार्ये कष्ट क्रियते चेत्सर्वकष्टस्यान्तो नाश. स्यात् । ५ मद्गुरुसमीपे ।

तीर्थे स्वार्थाय यास्यामीत्यापृच्छ्य तनयान् द्विजः । ययावूर्ध्वमुखोऽरण्यं शरण्यमिव चिन्तयन् ॥१०९॥
अत्यन्ततृषितः सोऽटन्नटव्यां पयसे चिरम् । अपश्यत् सुहृदमिव देशे नानाद्रुमे ह्रदम् ॥ ११० ॥
नीरं तीरतरुस्रस्तपत्रपुष्पफलं द्विजः । ग्रीष्ममध्यंदिनार्कांशुक्वथितं क्वाथवत् पपौ ॥ १११ ॥
सोऽपाद्यथा यथा वारि भूयो भूयस्तृषातुरः । तथा तथा विरेको[1]ऽथ तस्याभूत् कृमिभिः सह ॥११२॥
स नीरुगासीत्कियद्भिरप्यह्नोभिर्हृदांभसा । मनोज्ञावयवो जज्ञे वसन्तेनेव पादपः ॥ ११३ ॥
आरोग्यहृष्टो ववले विप्रः क्षिप्रं स्ववेश्मनि । पुंसां वपुर्विशेषोत्थः[2] शृंगारो जन्मभूमिषु ॥ ११४ ॥
पुर्यां स प्रविशन् पौरैर्ददृशे जातविस्मयैः । देदीप्यमानो निर्मुक्तनिर्मोकः[3] इव पन्नगः ॥ ११५ ॥
पौरैः पृष्टः पुनर्जात इवोल्लाघः[4] कथं न्वसि । देवताराधनादस्मीत्याचचक्षे स तु द्विजः ॥ ११६ ॥
स गत्वा स्वगृहेऽपश्यत् स्वपुत्रान् कुष्ठिनो मुदा । मयावज्ञाफलं साधु दत्तमित्यवदच्च तान् ॥ ११७ ॥
सुतास्तमेवमूचुश्च भवता तात निर्घृण[5] । विश्वस्तेषु किमस्मासु [6]द्विषेवेदमनुष्ठितम् ॥ ११८ ॥
लोकैराकृश्यमानः स राजन्नागत्य ते पुरम् । आश्रयज्जीविका[7]द्वारं द्वारपालं निराश्रयः ॥ ११९ ॥
तदात्र वयमायाता द्वाःस्थोऽसद्धर्मदेशनाम् । श्रोतुं प्रचलितोऽमुञ्चत्तं विप्रं निजकर्मणि ॥ १२० ॥
द्वारोपविष्टः स द्वारदुर्गाणामग्रतो बलिम् । [8]जन्मादृष्टमिवाभुंक्त यथेष्टं कष्टितः क्षुधा ॥ १२१ ॥
आकंठं परिभुक्तान्नदोषाद्ग्रीष्मोष्मणा च सः । उत्पन्नया तृषाकारि मरुपान्थ इवाकुलः ॥ १२२ ॥

---

१ विरेचनम् । २ वपुषो विशेषः स्वास्थ्यविशेषस्तदुत्थः शृंगारः शरीरशोभा जन्मभूमिषु प्रियो भवतीति शेषः । ३ निर्मोकः कञ्चुकः । ४ नीरोगः । ५ हे निर्दय । ६ शत्रुणेव । ७ जीविकाया द्वारीभूतम् । ८ जन्मन्यदृष्टम् ।

मया किमभिभूतासि खंडिताज्ञासि वा क्वचित् । दुःस्वप्नदृश्वरी[1] वासि भग्नकामासि वा प्रिये ॥ २८६ ॥
एवं राज्ञा सोपरोधं पृच्छ्यमाना कथंचन । तत्तादृगाख्यदापीतविषेव स्खलदक्षरम् ॥ २८७ ॥
दोहदं पूरयिष्यामीत्याश्वास्य नृपतिः प्रियाम् । कथं पूर्यो दोहदोऽयमित्यादिक्षदथाभयम् ॥ २८८ ॥
अभयोऽपि श्रेणिकस्योदरे शशकजंगलम्[2] । तच्चर्माच्छादितं चक्रेऽथोत्तानं तमशाययत् ॥ २८९ ॥
श्रेणिकस्यानुज्ञया च ततो रहसि चिल्लणा । जघास मांसमव्यग्रा रक्षसामिव देवता ॥ २९० ॥
तस्यां च मांसं खादन्त्यामेवमेव महीपतिः । अधीती[3] नटविद्यायामिवामूर्छन्मुहुर्मुहुः ॥ २९१ ॥
चिन्तयन्त्याः पतिं तस्याश्चकंपे हृदयं क्षणात् । गर्भे पुनश्चिन्तयन्त्याः क्षणादुल्लसति स्म च ॥ २९२ ॥
एवं बुद्धिप्रयोगेण चेलणा पूर्णदोहदा । आः पतिघ्न्यस्मि पापाहमिति मोहं[4]मुपाययौ ॥ २९३ ॥
राजापि राज्ञ्यै तत्कालं स्वमक्षतमदर्शयत् । तद्दर्शनादहृष्यच्च पद्मिनीवार्कदर्शनात् ॥ २९४ ॥
गतेषु मासेषु नवस्वथ चेटकनन्दना । नन्दनं सा प्रसुषुवे मलयोर्वीव चन्दनम् ॥ २९५ ॥
आदिदेशाथ सा दासीं पितुर्वैर्येष दारकः । तत्क्वापि त्यज्यतां दूरे पापः पन्नगपोतवत्[5] ॥ २९६ ॥
दास्याशोकवनं गत्वा परित्यक्तः स शुशुभे ततः । उपपादपदोत्पन्नगीर्वाण[6] इव भासुरः ॥ २९७ ॥
तत्र तं बालकं त्यक्त्वा दास्यायान्ती महीभुजा । अप्रच्छि क्व गतासीति तादृगेव च साब्रवीत् ॥ २९८ ॥
अशोकवनिकां गत्वा राजाप्यालोक्य तं सुतम् । हस्ताभ्यां जग्राह पाणिभ्यां प्रीतः स्वामिप्रसादवत् ॥२९९॥

१ दुःस्वप्नदृष्ट्री । २ शशकमासम् । ३ अधीतमनेनेति तथा । ४ मूर्छाम् । ५ सर्पदारकवत् । ६ उपपादशय्यायामुत्पन्नदेववत् ।

श्रीवीरोऽपि ततः स्थानाद्विहरन् सपरिच्छदः । सुरासुरैः सेव्यमानः पृष्ठचंपापुरीं ययौ ॥ १६६ ॥
सालो राजा महासालो युवराजश्च बान्धवौ । त्रिजगद्बान्धवं वीरं तत्र वन्दितुमेयतुः ॥ १६७ ॥
श्रुत्वा तौ देशनां बुद्धौ जामेयं[1] गागलिं स्वयम् । यशोमतीपिठरयोः सुतं राज्येऽभ्यषिंचताम् ॥ १६८ ॥
अथ सालमहासालौ विरक्तौ भववासतः । श्रीमहावीरपादाब्जमूले जगृहतुर्व्रतम् ॥ १६९ ॥
कालान्तरेण विहरन् भगवान् सपरिच्छदः । चतुस्त्रिंशदतिशयो ययौ चंपां महापुरीम् ॥ १७० ॥
स्वामिनोऽनुज्ञया सालमहासालर्षिसंयुतः । ततः पुरीं पृष्ठचंपां गौतमो गणभृद्ययौ ॥ १७१ ॥
ववन्दे गौतमं तत्र भक्तितो गागलिर्नृपः । तन्मातापितरावन्ये पौरामात्यादयोऽपि च ॥ १७२ ॥
तत्रासीनः सुरकृते सौवर्णे कमलासने । इन्द्रभूतिश्चतुर्ज्ञानो विदधे धर्मदेशनाम् ॥ १७३ ॥
गागलिः प्रतिबुद्धोऽथ राज्ये न्यस्य निजं सुतम् । दीक्षां गौतमपादान्ते पितृभ्यां सममाददे ॥ १७४ ॥
स तैस्त्रिभिः सालमहासालाभ्यां च समावृतः । चचाल गौतममुनिश्चंपायां वन्दितुं प्रभुम् ॥ १७५ ॥
अनुगौतममायातां पंचानामपि वर्त्मनि । शुभभाववशात्तेषामुदपद्यत केवलम् ॥ १७६ ॥
प्राप्ताः सर्वेऽपि चंपायां पुर्यां तत्र जिनेश्वरम् । ते प्रदक्षिणयामासुः प्रणनाम तु गौतमः ॥ १७७ ॥
तीर्थं नत्वाथ ते पंच चेलुः केवलिपर्षदि । तानूचे गौतमो हन्त वन्दध्वं परमेश्वरम् ॥ १७८ ॥
स्वाम्यूचे गौतमर्षे मा केवल्याशातनां कृथाः । गौतमोऽप्यक्षमयत्तान्मिथ्यादुष्कृतपूर्वकम् ॥ १७९ ॥
खिन्नोऽथ गौतमो दध्यौ न किमुत्पत्स्यते मम । केवलज्ञानमिह च भवे सेत्स्यामि किं न हि ॥ १८० ॥

१ स्वसुः पुत्रम् ।

कृत्वा रूपान्तरं सोऽथ जातवैक्रियलब्धिकः । प्रविश्य सुलसागेहे सुधीर्भिक्षामयाचत ॥ २७७ ॥
पात्राय साधवे भिक्षां ददामीति कृताश्रवा[1] । याचमानायापि तस्मै सुलसा न ददौ तदा ॥ २७८ ॥
ततश्च निःसृत्य पुराद्द्वारि प्राग्गोपुरस्य सः । विकृत्य ब्रह्मणो रूपमवतस्थे समाहितः ॥ २७९ ॥
पद्मासनसमासीनश्चतुर्बाहुश्चतुर्मुखः । ब्रह्मसूत्र्यक्षसूत्री च जटामुकुटमंडितः ॥ २८० ॥
सावित्रीसंयुतो हंसयानो धर्मं दिदेश सः । पौराणां च मनोऽहार्षीत् साक्षाद्ब्रह्मेति मानिनाम् ॥ २८१ ॥
वहिरस्ति स्वयं ब्रह्मेत्याहूतापि सखीजनैः । न ययौ सुलसा मिथ्यादृष्टिसंस्तवकातरा[2] ॥ २८२ ॥
अंवडश्च द्वितीयेऽह्नि याम्यायां गरुडासनः । शंखचक्रगदाशार्ङ्गी तस्थौ गोविन्दरूपभृत् ॥ २८३ ॥
अपि विष्णुप्रवादेन लोकव्यामोहकारिणा । नाययौ सुलसा तत्र सम्यग्दर्शननिश्चला ॥ २८४ ॥
अंबडोऽथ तृतीयेऽह्नि वारुण्यां वृषवाहनः । चंद्रचूडो[3] युतो गौर्या कृत्तिवासा[4]स्त्रिलोचनः ॥ २८५ ॥
भस्मांगरागः खट्वांगी शूलपाणिः पिनाकभृत् । कपाली रुंडमाली च नानागणसमावृतः ॥ २८६ ॥
आख्यद्धर्मं हरो भूत्वा पौराणां च मनोऽहरत् । परमश्राविका सा तु तं द्रष्टुमपि नाययौ ॥ २८७ ॥
चतुर्थेऽह्न्युत्तरस्यां स वप्रत्रयशोभितम् । दिव्यं समवसरणं विचक्रे स्फारतोरणम् ॥ २८८ ॥
स्थितं तत्र जिनीभूय श्रुत्वा पौरा विशेषतः । ऋद्ध्या महत्याभ्येयुस्तं ततो धर्मं च शुश्रुवुः ॥ २८९ ॥
एवं सत्यप्यनायातां सुलसामंबडोऽथ ताम् । कंचित् क्षोभयितुं प्रैषीद्गत्वा सोऽपीत्यवोचत ॥ २९० ॥
सुलसे समवसृतो विश्वस्वामी जिनेश्वरः । तदेहि भद्रे तत्पादान् वन्दितुं किं विलंबसे ॥ २९१ ॥

१ कृतप्रतिज्ञा । २ मिथ्यादृष्टिपरिचयात् भीता । ३ चन्द्रो चूडाया यस्य सः । ४ चर्मवसनः ।

श्रेणिकोऽपि स्नेहलात्मा महे[1]न महतान्यदा । पद्मावतीं राजपुत्रीं कूणिकेनोदवाहयत् ॥ ३१४ ॥
श्रेणिकादथ धारिण्या सि[2]न्धुरस्वप्नसूचितः । गर्भोऽभूज्जनयन्मेघवृष्टौ भ्रमणदोहदम् ॥ ३१५ ॥
राजादेशात्सोऽभयेनापूर्यताराध्य देवताम् । ततो मेघकुमार इत्याख्ययासूत सा सुतम् ॥ ३१६ ॥
इतश्चैकः पुरा विप्रः प्रारेभे यष्टुमध्वरम् । तत्र दासं न्ययुंक्तैकं दासोऽप्येवं तमब्रवीत् ॥ ३१७ ॥
ददासि यदि मे शेषं तदा स्थास्यामि नान्यथा । विप्रोऽपि तत्प्रपेदेऽथ दासोऽस्थाद्यज्ञवाटके ॥ ३१८ ॥
शेषं लब्धं स दासोऽपि साधुभ्यः प्रददौ सदा । तत्प्रभावेण देवायुर्बध्वा मृत्वा दिवं ययौ ॥ ३१९ ॥
दासजीवो दिवश्च्युत्वा श्रेणिकस्य सुतोऽभवत् । नन्दिषेणः स विप्रस्तु बभ्रामानेकयोनिषु ॥ ३२० ॥
इतश्चैकस्मिन्नरण्ये हस्तियूथे महीयसि । एकोऽभूद्यूथपः [3]स्थाम्ना दिग्वारणकुमारवत् ॥ ३२१ ॥
मैष भूद्यौवनेऽमुष्य व[4]शायूथस्य कामुकः । इति बुद्ध्या स कलभं जातं जातममारयत् ॥ ३२२ ॥
तद्यूथगाया एकस्याः करिण्या उदरेऽन्यदा । स विप्रजीवोऽवातारीद्गुर्विणी साप्यचिन्तयत् ॥ ३२३ ॥
पापेनानेन मे पुत्रा बहवोऽपि विनाशिताः । पुत्रं केनाप्युपायेन रक्षिष्याम्यधुना पुनः ॥ ३२४ ॥
इति निश्चित्य सा वातभग्नपादेव हस्तिनी । बभूव मायया कुं[5]टा मन्दं मन्दं चचार च ॥ ३२५ ॥
मान्ययूथपतेर्भोग्या भवत्वेपेति तां वशाम् । स्तोकं स्तोकं व्रजन् यूथनाथस्तां प्रत्यपालयत् ॥ ३२६ ॥
सातीव मन्दगा भूत्वा हस्तिनी तस्य हस्तिनः । [6]अर्धयामेन यामेनामिलदह्ना द्व्यहेन वा ॥ ३२७ ॥

---

१ उत्सवेन । २ गजस्वप्नसूचितः । ३ बलेन दिग्गजसदृशः । ४ हस्तिनीना यूथस्य । ५ खञ्जा । ६ कदाचिदर्धयामेनामिलत् कदाचिद्यामेनामिलदित्यादि ।

तान् वन्दितुं ययुः पौरास्तेभ्यो धर्मं च शुश्रुवुः । न किं कौतूहलेनापि सुलसे गतवत्यसि ॥ ३०७ ॥
सुलसापि बभाषे तं जानन्नपि किमन्यवत् । जल्पस्येवं महाभाग के ब्रह्माद्यास्तपस्विनः ॥ ३०८ ॥
हिंसितुं शस्त्रभाजो ये स्त्रीभाजः सेवितुं च ताः । कमाख्यास्यन्ति ते धर्ममधर्मनिरताः स्वयम् ॥३०९॥
भगवन्तं महावीरं जगदाप्तं निरीक्ष्य च । तद्धर्मं चोररीकृत्य द्रष्टुं तानुत्सहेत कः ॥ ३१० ॥

साधु साध्विति वदन्नथांबडः स्वं जगाम सदनं प्रमोदभाक् ।
धर्ममार्हतमनिन्द्यमुच्चकैर्हृद्युवाह सुलसापि सर्वदा ॥ ३११ ॥

॥ इत्याचार्यश्रीहेमचन्द्रसूरिविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि हालिकप्रसन्नचन्द्रदर्दुरांकदेवश्रेणिकभावितीर्थकरत्वसालमहासालगौतमाष्टापदारोहणाम्बडसुलसाचरितवर्णनो नाम नवमः सर्गः ॥

---

अशक्तैव वराकीयं मिलत्येव चिरादपि । इति हस्ती विशश्वास मायिभिः को न वञ्च्यते ॥ ३२८ ॥
सान्यदा दूरगे तस्मिन् यूथनाथे मतंगजी । तृणपूलं मूर्ध्नि कृत्वा प्रययौ तापसाश्रमम् ॥ ३२९ ॥
पादेषु निपतन्ती सा मस्तके न्यस्तपूलका । अज्ञायि तापसैरेषा वराकी शरणार्थिनी ॥ ३३० ॥
विश्वस्ता भव वत्से त्वमिति तैरुदिते सति । तत्राश्रमे सुखं सास्थात् पितृ[1]धाम्नीव कन्यका ॥ ३३१ ॥
अन्यदा जातपुत्रा सा पुत्रं तत्राश्रमेऽमुचत् । स्वयं त्वरण्ये यूथान्तर्विचचार तथैव हि ॥ ३३२ ॥
सा स्तन्यं कलभायादादागत्यागत्य चान्तरा । शनैश्चाश्रमशाखीव ववृधे कलभोऽपि सः ॥ ३३३ ॥
पक्वनीवारकवलैः सल्य[2]कीकवलैरपि । प्रेम्णा निजं पोतमिव तापसास्तमपोषयन् ॥ ३३४ ॥
अंके पर्यस्तिकां मूर्ध्नि जटामुकुटमुत्कटम् । स करेण व्यरचयत् पार्श्वे क्रीडंस्तपस्विनाम् ॥ ३३५ ॥
कलशैः सिषिचुर्वृक्षांस्तापसास्तान्निरीक्ष्य च । सिषेच सोऽपि पयसापूर्यापूर्य निजं करम् ॥ ३३६ ॥
एवं चाश्रमजान् वृक्षान् सिञ्चतः प्रतिवासरम् । चक्रुः सेचनक इति नाम तस्य तपस्विनः ॥ ३३७ ॥
करसक्तोन्नतदन्तो मधुपिंगललोचनः । भूमिस्पृक्पुष्[3]करकरः पूर्वा[4]सनसमुन्नतः ॥ ३३८ ॥
उच्चैःकुंभो लघुग्रीवः क्रमा[5]वनतवेणुकः । शुंडे[6]षदूनलांगूलो विंशत्या शोभितो नखैः ॥ ३३९ ॥
अपरा[7]ग्देशयोर्नीचैरुच्चकैर्गात्रदेशयोः । स सर्वलक्षणैर्युक्तः क्रमान्मदमुखोऽभवत् ॥ ३४० ॥
त्रिभिर्विशेषकम् ॥

१ पितृगृहे । २ सल्यकी गजभक्ष्या नामौषधिविशेषः । ३ शुंडादण्डः । ४ उन्नतपूर्वभागः । ५ क्रमेणावनत वेणुक पृष्ठभागो यस्य सः । ६ शुंडादीषदूनं लांगूलं यस्य सः । ७ पार्श्वभागयोः ।

श्रेणिकोऽचिन्तयत् किंचित्प्रद्योतोऽत्र समापतन् । क्रूरग्रह इव क्रुद्धः कार्यो हतबलः कथम् ॥ ११७ ॥
ततोऽभयकुमारस्यौत्पत्तिक्यादिधियां निधेः । नृपतिर्मुखमैक्षिष्ट सुधामधुरया दृशा ॥ ११८ ॥
यथार्थनामा राजानमभयोऽथ व्यजिज्ञपत् । का चिन्तोज्जयिनीशोऽद्य भवेद्युद्धातिथिर्मम ॥ ११९ ॥
यदि वा बुद्धिसाध्येऽर्थे शस्त्राशस्त्रिकथा वृथा । बुद्धिमेव प्रयोक्ष्ये तद्बुद्धिर्हि जयकामधुक् ॥ १२० ॥
अथ बाह्येऽरिसैन्यानामावासस्थानभूमिषु । लोहसंपुटमध्यस्थान् दीनारान् स न्यचीखनत् ॥ १२१ ॥
प्रद्योतनृपतेः सैन्यैस्ततो राजगृहं पुरम् । पर्यवेष्ट्यत भूगोलः पयोधिसलिलैरिव ॥ १२२ ॥
अथेत्थं प्रेषयामास लेखं प्रद्योतभूपतेः । अभयो गुप्तपुरुषैः परुषेतरभाषिभिः[1] ॥ १२३ ॥
शिवादेवीचेल्लणयोर्भेदं नेक्षे मनागपि । तन्मान्योऽसि शिवादेवीसंबन्धेनापि सर्वदा ॥ १२४ ॥
तेनावन्तीश वच्मि त्वामेकान्तहितवाञ्छया । सर्वे श्रेणिकराजेन भेदितास्तव भूभुजः ॥ १२५ ॥
दीनाराः प्रेषिताः सन्ति तेभ्यस्तान् कर्तुमात्मसात् । ते तानादाय बध्वा त्वामर्पयिष्यन्ति मत्पितुः १२६
तदावासेषु दीनारा निखाताः सन्ति तत्कृते । खानयित्वा पश्य को वा दीपे सत्यग्निमीक्षते ॥ १२७ ॥
विदित्वैवं स भूपस्यैकस्यावासमचीखनत् । लब्धास्तत्र च दीनारास्तान् दृष्ट्वा स पलायितः ॥ १२८ ॥
नष्टे तत्र च तत्सैन्यं विलोड्याब्धिमिवाखिलम् । हस्त्यश्वाद्याददे सारं मगधेन्द्रः समंततः ॥ १२९ ॥
नासारूढेन[2] जीवेन वायुवाजेन[3] वाजिना । ततः प्रद्योतनृपतिः कथंचित् स्वां पुरीं ययौ ॥ १३० ॥
नृपा ये बद्धमुकुटा ये चान्येऽपि महारथाः । तेऽपि नेशुः काकनाशं[4] हतं सैन्यं ह्यनायकम् ॥ १३१ ॥

---

१ मृदुभाषिभिः । २ नासापर्यन्तगतेन । ३ वायुवेगेन । ४ काक इव नष्टा इति तथा ।

तेनान्यदा पयः पातुं नदीतीरे प्रसर्पता । स पिता यूथपो दृष्टः कृत्वा युद्धममार्यत ॥ ३४१ ॥
स्वयं यूथपतिर्जज्ञे चिन्तयामास चेतसि । अमुष्मिन्नाश्रमे मात्रा छद्मना ह्यस्मि रक्षितः ॥ ३४२ ॥
रक्षितेन मयाकारि यत्पितुस्तन्ममापि हि । मा कार्षीदाश्रमेऽमुष्मिञ्जातत्रातोऽपरो गजः ॥ ३४३ ॥
इति संचिन्त्य निःशेषं भंक्त्वा तं तापसाश्रमम् । अकृतालयसंस्थानं स नद्योघ इव स्थलम् ॥ ३४४ ॥
दास्यते नाश्रमे सौख्यं दुरात्मेति तपस्विनः । तं गजं श्रेणिकायाख्यन्राजार्हं सर्वलक्षणैः ॥ ३४५ ॥
श्रेणिकोऽपि द्रुतं गत्वा तं बद्ध्वा केरिकुञ्जरम् । समानयत् कौतुकिनः सेनांगेषु हि भूभुजः ॥ ३४६ ॥
प्रसह्यासह्यस्थामापि स्तंभेऽबध्यत स द्विपः । किमसाध्यं मनुष्याणामभेद्यमिव पार्थसाम् ॥ ३४७ ॥
निस्पन्दकरलांगूलकर्णतालः क्रुधा च सः । तस्थावालिखित इव त्रिपदीवर्जितोऽपि सन् ॥ ३४८ ॥
दिष्ट्याभूदाश्रमक्षेममिति ते प्रीतचेतसः । तापसा एत्य तं नागमालानितमतर्जयन् ॥ ३४९ ॥
लालितः पालितोऽस्माभिः पोषितो वर्धितोऽसि च । स्वस्थानघातको रे त्वमाश्रयाश इवाभवः ॥३५०॥
अस्माकं बलदुर्मत्तेनाश्रमोऽभञ्जि यत्त्वया । तत्कर्मणः फलमिदं प्राप्तोऽस्यालानसौहृदम् ॥ ३५१ ॥
गजोऽपि चिन्तयामास नूनमेभिस्तपस्विभिः । उपायरचनां कृत्वा प्रापितोऽहमिमां दशाम् ॥ ३५२ ॥
अभांक्षीन्मंक्षु स क्रुद्धः स्तंभं कदलीकांडवत् । अत्रोटयच्च त्रकिति बन्धनं बिसतंतुवत् ॥ ३५३ ॥
सोऽभ्यरण्यं दधावेऽथाध्माततामारुणाननः । विक्षिपन्नतिदूरेण तापसान्मधुपानिव ॥ ३५४ ॥

---

१ आदौ जातः पश्चात्रातः । २ गजश्रेष्ठम् । ३ जलानां यथाऽभेद्यं नास्ति किंचित्तथा । ४ गजपादबन्धनरहितोऽपि । ५ आलान-बद्धम् । ६ आश्रयमेवाश्नातीति तथाग्निरित्यर्थः । ७ शीघ्रम् ।

ते विमृश्येत्यङ्गुस्तस्य शंबले[1] विषमोदकान् । तद्भस्त्राशंबलं[2] चान्यत् समंतादप्यपाहरन् ॥ १७६ ॥
वर्त्म कियदप्युल्लंघ्य नदीरोधसि शंबलम् । तद्भोक्तुमवतस्थे सोऽनूवन्नशकुनान्यथ ॥ १७७ ॥
शकुनज्ञस्तु सोऽभुक्त्वोत्थाय दूरं ययौ ततः । क्षुधितो भोक्तुकामोऽभूद्वारितः शकुनैः पुनः ॥ १७८ ॥
दूरं गत्वा भोक्तुकामः शकुनैर्वारितः पुनः । ततो गत्वा स तत्सर्वं प्रद्योतस्य न्यवेदयत् ॥ १७९ ॥
ततो राज्ञा समाहूय तत्पृष्टः श्रेणिकात्मजः । पाथेयभस्त्रामाघ्राय जगाद मतिमानिदम् ॥ १८० ॥
अस्ति दृष्टिविषोऽत्राहिर्द्रव्यसंयोगसंभवः । असौ दग्धो भवेन्नूनं भस्त्रामुद्घाटयेद्यदि ॥ १८१ ॥
ततः पराङ्मुखोऽरण्ये मोच्य इत्यभयोदिते । तथैव मुमुचे सद्यो दग्धा वृक्षा मृतश्च सः ॥ १८२ ॥
विना बन्धनमोक्षं त्वं वरं याचस्व मामिति । नृपेणोक्तोऽभयोऽवादीन्न्यासीभूतोऽस्तु मे वरः ॥१८३॥
इतश्च चंडप्रद्योतराजस्य श्रीरिवोदधेः । अभूद्वासवदत्तेति सुतांगारवतीभवा ॥ १८४ ॥
धात्रीजनैर्लाल्यमाना वर्धमाना क्रमेण सा । राज्यलक्ष्मीरिव साक्षाद्रेमे राजगृहांगणे ॥ १८५ ॥
सर्वलक्षणसंपूर्णां विनयादिगुणान्विताम् । पुत्रादप्यधिकां मेने राजा तामतिवत्सलः ॥ १८६ ॥
आत्मानुरूपगुर्वन्ते साध्यैष्ट सकलाः कलाः । गान्धर्ववेद एवैकोऽवाशिष्यत गुरुं विना ॥ १८७ ॥
राजापृच्छच्च सचिवं बहुदृष्टं बहुश्रुतम् । भावी को नाम दुहितुर्गान्धर्वाध्यापने गुरुः ॥ १८८ ॥
प्रायेण राजपुत्रीणां गतानां पतिवेश्मनि । पत्युर्विनोदे गान्धर्वकलैव ह्युपयोगिनी ॥ १८९ ॥
मंत्री प्रोवाच गान्धर्वधुरीणानां शिरोमणिः । संप्रत्युदयनो राजा मूर्तिरन्यैव तुंबरोः[3] ॥ १९० ॥

---

१ पाथेये । २ तस्य भस्त्राया पोट्टलिकाया स्थितं शम्बलम् । ३ तुंबरुर्गन्धर्वविशेषः ।

यदि तां चैव तां चैव तां चैवायतलोचनाम् । न हरामि नृपस्यार्थे नाहं योगन्धरायणः ॥ २३५ ॥
गच्छंश्च चंडप्रद्योतस्तस्य वाचं ससौष्ठवाम् । आकर्ण्य तं निरैक्षिष्ट दुष्कटाक्षेण चक्षुषा ॥ २३६ ॥
योगन्धरायणोऽप्याशु परेषामिंगितादिवित् । सावज्ञोऽवन्तिनृपतिं विवेद कुपितं तदा ॥ २३७ ॥
कौशाम्बीपतिगृह्यत्वमपाकर्तुं[1] स आत्मनः । प्रत्युत्पन्नधियां धुर्य इदमौपयिकं व्यधात् ॥ २३८ ॥
मुक्त्वा संव्यानमुर्ध्वस्थः[2] प्रेतातिविकृताकृतिः । मूत्रयन् व्यञ्जयामास भूताविष्टत्वमात्मनः ॥ २३९ ॥
पिशाचकी कश्चिदसाविति ज्ञात्वा नृपोऽपि हि । सद्यः कोपं निजग्राह निषादीव मतंगजम् ॥ २४० ॥
ततश्च चंडप्रद्योतो गत्वोद्यानेऽनवद्यवाक् । गान्धर्वगोष्ठीमारेभे स्मरद्विपमहौषधम् ॥ २४१ ॥
गान्धर्वकौशलं द्रष्टुं नवं प्रद्योतभूपतिः । आह्वासवदत्तां च वत्सराजं च कौतुकी ॥ २४२ ॥
ऊचे प्रद्योततनयां वत्सराजः शुभानने । आरुह्येभीं वेगवतीं गन्तुं कालोऽयमावयोः ॥ २४३ ॥
सद्यो जितमरुद्वेगां ततो वेगवतीमिभीम् । आनाययदवन्तीशदुहितोदयनाज्ञया ॥ २४४ ॥
कक्षायां बध्यमानायां सा ररास च हस्तिनी । श्रुत्वा तद्रसितं चैवमन्धमौहूर्तिकोऽवदत् ॥ २४५ ॥
कक्षायां बध्यमानायां यथा रसति हस्तिनी । योजनानां शतं गत्वा प्राणत्यागं करिष्यति ॥ २४६ ॥
वसन्तको हास्तिपकोऽबध्नादुदयनाज्ञया । चतस्रो मूत्रघटिकाः करिण्याः पार्श्वयोर्द्वयोः ॥ २४७ ॥
वत्सराजो घोषवतीपाणिः[3] प्रद्योतनन्दना । काञ्चनमाला वसन्तश्चारोहंस्तामथ द्विपीम् ॥ २४८ ॥
योगन्धरायणोऽप्येत्य नुनोद करसंज्ञया । याहि याहीत्युदयनं सोऽपि[4] गच्छन्नदोऽवदत् ॥ २४९ ॥

---

१ कौशाम्बीपतिरुदयनस्तस्य पक्षीयत्वम् । २ अधोवस्त्रम् । ३ वीणापाणिः । ४ उदयनोऽपि ।

यस्त्वय्यपि दधौ दृष्टिं गुह्ये[1]काकारधारिणीम् । तमाशुशुक्षणिः[2] साक्षादालप्यालमिदं हि वा ॥ २६९ ॥
त्वच्छासनस्य साम्यं ये मन्यन्ते शासनान्तरैः । विषेण तुल्यं पीयूषं तेषां हन्त हतात्मनाम् ॥ २७० ॥
[3]अनेडमूका भूयासुस्ते येषां त्वयि मत्सरः । शुभोदर्काय वैकल्यमपि पापेषु कर्मसु ॥ २७१ ॥
तेभ्यो नमोऽञ्जलिरयं तेषां तान्समुपास्महे । त्वच्छासनामृतरसैर्यैरात्मासिच्यतान्वहम् ॥ २७२ ॥
भुवे तस्यै नमो यस्यां तव पादनखांशवः । चिरं चूडामणीयन्ते ब्रूमहे किमतः परम् ॥ २७३ ॥
जन्मवानस्मि धन्योऽस्मि कृतकृत्योऽस्मि यन्मुहुः । जातोऽस्मि त्वद्गुणग्रामरामणीयकलंपटः ॥ २७४ ॥
इत्यभिष्टुत्य विरते श्रेणिके परमेश्वरः । पीयूषवृष्टिदेशीयां[4] विदधे धर्मदेशनाम् ॥ २७५ ॥
श्रुत्वा तां देशनां भर्तुः सम्यक्त्वं श्रेणिकोऽश्रयत् । श्रावकधर्मं त्वभयकुमाराद्याः प्रपेदिरे ॥ २७६ ॥
देशनान्ते जगन्नाथं प्रणम्य श्रेणिको नृपः । प्रीतः स्वामिगिरा प्रीतैः सुतैः सह ययौ गृहे ॥ २७७ ॥
श्रेणिकं धारिणीं चाथ भक्त्या विरचिताञ्जलिः । कुमारो मेघकुमार उदारोक्तिर्व्यजिज्ञपत् ॥ २७८ ॥
पालितो लालितश्चास्मि युवाभ्यां सुचिरं ह्यहम् । अमायैव ह्यभूवं वां प्रार्थये तु तथाप्यदः ॥ २७९ ॥
अनन्तदुःखसंभारात्संसाराच्चकितोऽस्म्यहम् । संसारोत्तारकश्चार्हन् स्वयमेवात्र तिष्ठति ॥ २८० ॥
तन्मामद्यानुमन्येथां प्रव्रजामि यथाधुना । संसारभीरुशरणश्रीवीरचरणान्तिके ॥ २८१ ॥
तावप्येवं बभाषाते व्रतं नेपत्करं खलु । कुमार सुकुमारस्त्वं कथमेतच्चरिष्यसि ॥ २८२ ॥
मेघोऽप्यूचे भवाद्भीतः सुकुमारोऽप्यहं व्रतम् । करिष्ये दुष्करमपि तदिदानीं प्रसीदतम् ॥ २८३ ॥

---

१ वक्रामिति तात्पर्यम् । २ अग्निः । ३ बधिरा मूकाश्च । ४ अमृतवृष्टिसदृशीम् ।

अन्यदा गणभृद्देवसुधर्मस्वामिनोऽन्तिके । प्रव्रज्यामग्रहीत् कोऽपि विरक्तः काष्ठभारिकः ॥ २९४ ॥
विहरन् स पुरे पौरैः पूर्वावस्थानुवादिभिः । अभ्यत्र्यतोपाहस्यततागर्ह्यतापि पदे पदे ॥ २९५ ॥
नावज्ञां सोढुमीशोऽत्र ततो विहरतान्यतः । इति व्यज्ञपयत् स श्रीसुधर्मस्वामिनं गुरुम् ॥ २९६ ॥
सुधर्मस्वामिनान्यत्र विहारक्रमहेतवे । आपृच्छयताभयः पृष्ठन् ज्ञापितस्तच्च कारणम् ॥ २९७ ॥
दिनमेकं प्रतीक्षध्वमूर्ध्वं यत्प्रतिभाति वः । तद्विधत्तेत्ययाचिष्ट प्रणम्य श्रेणिकात्मजः ॥ २९८ ॥
सोऽथ राजकुलात् कृष्ट्वा रत्नकोटित्रयीं वहिः । दास्याम्येतामेत लोकाः पटहेनेत्यघोषयत् ॥ २९९ ॥
ततश्चेयुर्जनाः सर्वेऽप्यवोचदभयोऽप्यदः । जलाग्निस्त्रीवर्जको यस्तस्य रत्नोच्चयोऽस्त्वयम् ॥ ३०० ॥
लोकोत्तरमिदं लोकः स्वामिन् किं कर्तुमीश्वरः । इति तेष्वालापमाणेष्वभयोऽपीत्यभापत ॥ ३०१ ॥
यदि वो नेदृशः कश्चिद्रत्नकोटित्रयं ततः । जलाग्निस्त्रीमुचः काष्ठभारिणोऽस्तु महामुनेः ॥ ३०२ ॥
सम्यगीदृगयं साधुः पात्रदानस्य युज्यते । मुधासौ हसितोऽस्माभिरिति तैर्जगदेऽभयः ॥ ३०३ ॥
अस्य भत्सोपहासादि न कर्तव्यमतः परम् । आदिष्टमभयेनेवं प्रतिपद्य ययुर्जनाः ॥ ३०४ ॥
एवं बुद्धिमहांभोधिः पितृभक्तिपरोऽभयः । निरीहो धर्मसंसक्तो राज्यमन्वशिषत्पितुः ॥ ३०५ ॥
वर्तमानः स्वयं धर्मे स प्रजा अप्यवर्तयत् । प्रजानां च पशूनां च गोपायत्ताः प्रवृत्तयः ॥ ३०६ ॥
राजचक्रे जजागार यथा द्वादशधा स्थिते । तथा श्रावकधर्मेऽपि सोऽप्रमद्वरमानसः ॥ ३०७ ॥

---

१ पृच्छन्नभयं कारणं ज्ञापितः । २ पश्चाद्यत्प्रतिभाति युष्माकं तद्विधत्त । ३ हे लोका एत आगच्छत । ४ गा पृथ्वीं पालयन्ति इति गोपा राजानः पशुपक्षे गा धेनूः पालयन्तीति गोपास्तेषामधीनाः ।

तदा चैकस्य पोतस्य षण्मास्युत्पातयोगतः । भ्रमतोऽगात् पयोराशौ विद्युन्माली ददर्श तम् ॥ ३८२ ॥
तमुत्पातं स संहृत्य सद्यः सांयात्रिकाय तम् । समुद्गं प्रतिमागर्भं कथयित्वा समार्पयत् ॥ ३८३ ॥
ऊचे च तं स्वस्ति तुभ्यमियृथा[1] निरुपद्रवम् । सिन्धुसौवीरविषये त्वं वीतभयपत्तनम् ॥ ३८४ ॥
ततश्चतुष्पथे स्थित्वा कुर्वीथा हन्त घोषणाम् । देवाधिदेवप्रतिमा गृह्यतां गृह्यतामिति ॥ ३८५ ॥
सांयात्रिकोऽपि तत्कालं प्रतिमायाः प्रभावतः । नदीमिव नदीनाथमुत्तीर्य तटमासदत् ॥ ३८६ ॥
सिन्धुसौवीरदेशेषु गत्वा वीतभये पुरे । स्थित्वा चतुष्पथे चक्रे तथैवाघोषणां स ताम् ॥ ३८७ ॥
तापसभक्तस्तत्रागादुदायननृपः स्वयम् । त्रिदंडिनो द्विजन्मानस्तापसाश्चापरेऽपि च ॥ ३८८ ॥
विष्णुं ब्रह्माणमीशानमिष्टं देवमथापरम् । स्मृत्वा लोकाः कुठारेणाजघ्नुस्तं काष्ठसंपुटम् ॥ ३८९ ॥
तत्र स्वरुचि लोकेन मुच्यमाना निरन्तरम् । आयसा अप्यभज्यन्त कुठारास्त्रापुषा इव ॥ ३९० ॥
इत्याश्चर्यप्रसक्तस्य राज्ञो दि[2]नमुखादपि । ललाटंतपतपनो मध्याह्नसमयोऽभवत् ॥ ३९१ ॥
भोजनातिक्रमं ज्ञात्वा राज्ञो राज्ञी प्रभावती । आह्वातुमादिशच्चेटीं पतिभक्तोचितं[3] ह्यदः ॥ ३९२ ॥
राज्ञापि दृष्टुमाश्चर्यं तदाज्ञप्ता प्रभावती । तत्रागात्तदपृच्छच्च राजाप्यकथयत्तथा ॥ ३९३ ॥
ऊचे च राज्ञी देवाधिदेवा ब्रह्मादयो न हि । देवाधिदेवो भगवानेकोऽर्हन् परमेश्वरः ॥ ३९४ ॥
तदर्हत्प्रतिमैवेह भविष्यति न संशयः । ब्रह्मादिनामस्मरणात् प्रदत्ते दर्शनं न सा ॥ ३९५ ॥
एषाहं दर्शयिष्यामि प्रतिमामर्हतः प्रभोः । तन्नामस्मरणादेव लोकाः पश्यत कौतुकम् ॥ ३९६ ॥

---

१ ऋ गतौ इत्यस्माद्धातोर्लोटि मध्यमपुरुषैकवचनम् । २ प्रातःकालात् । ३ पतिभक्ताया उचितम् ।

तथास्थं शशकं दृष्ट्वा करुणापूर्णमानसः । उत्क्षिप्तपाद एवास्थास्त्रिपदीभून्मदादिव ॥ ३९९ ॥
सार्धाद्द्व्यहाद्दवे शान्ते जीवा जग्मुः शशादयः । त्वमपि क्षुत्तृषाक्रान्तः पानीयाय प्रधावितः ॥४००॥
चिरोद्धरणखिन्नैकांघ्रित्वाच्च न्यपतः क्षितौ । क्षुत्तृष्णाक्लेशविवशस्त्र्यहान्मृत्युं त्वमासदः ॥ ४०१ ॥
शशानुकंपापुण्येनाधुना राजसुतोऽभवः । लब्धं कथंचिन्मानुष्यमिदं नयसि किं मुधा ॥ ४०२ ॥
अप्येकं शशकं त्रातुं कष्टमस्थास्तथा तदा । साध्वंघ्रिघट्टनात्कष्टात् प्रणष्टोऽस्यधुना कथम् ॥ ४०३ ॥
एकजीवाभयदानफलमीदृक्षमासदः । सर्वजीवाभयदानं प्रतिपन्नोऽसि साधु तत् ॥ ४०४ ॥
पालय प्रतिपन्नं[1] स्वं भवांभोधिं समुत्तर । मानुष्यं दुर्लभं हीदं तत्समुत्तारणक्षमम् ॥ ४०५ ॥
इति स्वामिगिरा मेघकुमारोऽभूद्व्रते स्थिरः । चक्रे मिथ्या दुष्कृतं च तेपे च त्रिविधं तपः ॥ ४०६ ॥
पालयित्वा व्रतं सम्यग्मृत्वाभूद्विजये सुरः । ततश्च्युत्वा विदेहेषूत्पद्य मोक्षं स यास्यति ॥ ४०७ ॥
स्वामिदेशनयान्येद्युर्बुद्धो व्रतजिघृक्षया । आपप्रच्छे नन्दिषेणः कथंचिच्छ्रेणिकं नृपम् ॥ ४०८ ॥
स पित्रानुमतोऽचालीद्व्रतादानाय वेश्मतः । ऊचे देवतया चैवमन्तरीक्षतलस्थया ॥ ४०९ ॥
किमुत्सुकायसे वत्स प्रव्रज्याग्रहणं प्रति । चारित्रावारकं भोगफलं कर्मास्ति यत्तव ॥ ४१० ॥
किंचित्कालं प्रतीक्षस्व गृहे तत्कर्मणः क्षये । प्रव्रज्यां प्रतिपद्येथा नाकाले फलति क्रिया ॥ ४११ ॥
चारित्रावारकं कर्म साधुसंगजुषो[2] मम । करिष्यति किमित्युक्त्वा स ययौ स्वामिनोऽन्तिके ॥ ४१२ ॥
तथा निषिद्धो भर्त्रापि रभसेन भृशायितः । प्रत्यपादि परिव्रज्यां तत्पादकमलान्तिके ॥ ४१३ ॥

१ अंगीकृत व्रतमिति यावत् । २ साधुकर्मजुष इति पाठान्तरम् ।

साधुभिः सोऽन्वशास्येवं धर्मो हि शरणं भवे । धर्मार्थी च परीक्षेत देवं धर्मं गुरुं सुधीः ॥ ४४० ॥
देवोऽष्टादशभिर्दोषैर्मुक्तो धर्मो दयान्वितः । गुरुश्च ब्रह्मचार्येव निरारम्भपरिग्रहः ॥ ४४१ ॥
एवमाद्युपदेशेन प्रत्यबुध्यत पार्थिवः । जिनधर्मश्च तस्याभूद्हृद्युत्कीर्ण इव स्थिरः ॥ ४४२ ॥
प्रत्यक्षीभूय देवोऽर्हद्धर्मे संस्थाप्य पार्थिवम् । तिरोदधे पार्थिवोऽथ स्वमास्थानीस्थमैक्षत ॥ ४४३ ॥
देवतत्त्वगुरुतत्त्वधर्मतत्त्वाधिवासितः । तदाप्रभृत्यभूत्सम्यगुदायनमहीपतिः ॥ ४४४ ॥
इतश्च गान्धारदेशजन्मा गान्धारनामकः । शाश्वतीरर्हत्प्रतिमा वैताढ्येऽगाद्विवन्दिषुः ॥ ४४५ ॥
वैताढ्यमूले तस्थौ चोपवासैस्तद्दिदृक्षया । तुष्टा शासनदेवी च तदीप्सितमपूरयत् ॥ ४४६ ॥
कृतकृत्यं च तं देवी वैताढ्यस्य तलेऽमुचत् । ददौ चाष्टोत्तरं तस्मै कामदं गुलिकाशतम्[3] ॥ ४४७ ॥
क्षिप्त्वैकां गुलिकां वक्त्रे स दध्यौ वन्दिषीय यत् । देवाधिदेव प्रतिमां श्रीवीतभयपत्तने ॥ ४४८ ॥
इति चिन्तासममपि सोऽथ वीतभयं ययौ । देवाधिदेवप्रतिमां तेन कुब्जाप्यवन्दयत् ॥ ४४९ ॥
शरीरापाटवं चाभूद्गान्धारस्यापरेऽहनि । तं च प्रतिजजागार कुब्जार्हद्धर्मवत्सला ॥ ४५० ॥
गान्धारोऽपि स्वमासन्नमवसानं विदन् सुधीः । कुब्जायै गुलिकाः प्रादात्प्रव्रज्यां स्वयमाददे ॥ ४५१ ॥
रूपार्थिनी कुरूपा सा क्षिप्त्वैकां गुलिकां मुखे । उपपादभवेवाभूद्द्राग्दिव्याकारधारिणी ॥ ४५२ ॥
सुवर्णवर्णसर्वांगा साभूद्गुलिकया तया । ततोऽभ्यधत्त सर्वोऽपि सुवर्णगुलिकेति ताम् ॥ ४५३ ॥
साथ द्वितीयां गुलिकां मुखे कृत्वेत्यचिन्तयत् । वृथैव रूपमीदृक्षोऽनुरूपश्चेत् पतिर्न हि ॥ ४५४ ॥

---

१ हृदि हृदये । २ सभास्थितम् । ३ गुटिकाशतम् ।

षष्ठाष्टमप्रभृतीनि तप्यमानस्तपांसि सः । व्यहार्षीत्प्रभुणा सार्धं ग्रामाकरपुरादिषु ॥ ४१४ ॥
स सूत्रमथ सूत्रार्थं नित्यमेव व्यभावयत् । निषण्णो गुरुपादान्ते सहमानः परीषहान् ॥ ४१५ ॥
भोग्यकर्मोदयाद्भोगेच्छां भवन्तीं बलादपि । रोद्धुं तपोभिः स्ववपुः कृशयामास सोऽधिकम् ॥ ४१६ ॥
स इन्द्रियविकाराणां निकारायानुवासरम् । चकारातापनां घोरां स्मशानादिषु भूमिषु ॥ ४१७ ॥
बलादपि विकारेषु भवत्स्विन्द्रियरोषणः । स्वमुद्बद्धुं समारेभे प्रव्रज्याभंगकातरः ॥ ४१८ ॥
बन्धच्छेदं चकारास्य देवता व्रतवारणी । समाधानस्य शस्त्रेण शस्त्रं कुंठीचकार च ॥ ४१९ ॥
विषं मुमूर्षोरदतस्तस्यावीर्यं चकार सा । वह्नौ च विशतो वह्निर्महायाकृत शीतलम् ॥ ४२० ॥
आत्मानं सोऽथ शैलाग्रादपातयदथान्तरे । तं धृत्वा देवतोवाच न किं स्मरसि मद्वचः ॥ ४२१ ॥
नालं भोग्यफलं कर्माभुक्त्वाक्षेप्तुं जिना अपि । तत्प्रतीपं मुधैव त्वमेवमुत्तिष्ठसेऽन्वहम् ॥ ४२२ ॥
इत्युक्तः स तयैकाकिविहारपरिकर्मभृत् । भिक्षार्थं निर्जगामैकश्चिकीर्षुः षष्ठपारणम् ॥ ४२३ ॥
अथानाभोगदोषेण वेश्यावेश्म विवेश सः । धर्मलाभ इति वाचमुवाच च महामुनिः ॥ ४२४ ॥
न नोऽर्थो धर्मलाभेन अर्थलाभोऽस्तु केवलम् । इति वेश्या सोपहासं विकारात् प्रत्युवाच तम् ॥४२५॥
असौ वराकी हसति किं मामिति विचिन्त्य सः । कृष्ट्वा तीव्रतृणं लब्ध्या रत्नराशिमपातयत् ॥४२६॥
अर्थलाभोऽयमित्युक्त्वा स तस्मान्निर्ययौ गृहात् । ससंभ्रमा सापि वेश्यानुधाव्येति तमभ्यधात् ४२७

१ तिरस्काराय । २ इन्द्रियेषु रोषवान । ३ शस्त्रेणात्मान समाधानस्य तस्य मुनेः शस्त सा देवता कुठीचकार । ४ शीघ्रम् । ५ द्रव्यलाभः ।

दुःखानुभवभूयिष्ठे किं भवेऽस्मिन्नशाश्वते । भवेत्तत्कर्म येनाहं गच्छेयं न हि दुर्गतिम् ॥ ५२८ ॥
इत्यादिका ध्रुवाः पञ्च शतानि कपिलो जगौ । सर्वाः प्राकृतबन्धेन श्रव्यरागेण[1] बन्धुरा ॥ ५२९ ॥
ध्रुवासु गीयमानासु कपिलेन महर्षिणा । ते चौराः प्रत्यबुध्यन्त कस्यांचित्कश्चिदेव[2] च ॥ ५३० ॥
ततः शतानि पञ्चापि चौराणां स महामुनिः । पर्यव्राजयदेतद्धि दृष्टं तज्ज्ञानचक्षुषा ॥ ५३१ ॥
पुरे राजगृहे देवाधिदेवाज्ञां[3] प्रगृह्य सः । ब्रह्मर्षिः कपिलोऽत्रैव त्वत्पुरीमस्ति[4] पावयन् ॥ ५३२ ॥
केवल्येष स्वयंबुद्धः श्वेताम्बरशिरोमणिः । कर्ता प्रतिष्ठां कोऽप्येष पुण्यानामुदयस्तव ॥ ५३३ ॥
ततश्चावन्तिनाथेन प्रार्थितः कपिलो मुनिः । प्रत्यष्ठात् प्रतिमां मंत्रपूतचूर्णानि निक्षिपन् ॥ ५३४ ॥
चर्चयित्वार्चयित्वा च दोर्भ्यामुद्धृत्य पार्थिवः । तां तद्धनो धनमिव हृद्द्वारे प्रतिमां दधौ ॥ ५३५ ॥
न्यधादनिलवेगस्य स्कन्धे तां प्रतिमां नृपः । तदन्तरा सैनिकवदारूढोऽधारयत् स्वयम् ॥ ५३६ ॥
देवाभियोगयानेभ्योऽप्यतिवेगेन दन्तिना । गत्वा वीतभये दास्यै प्रतिमां तां समार्पयत् ॥ ५३७ ॥
सापि तां प्रतिमां चैत्ये न्यस्यादाय पुरातनीम् । आगादासीं प्रतिमां च नृपोऽप्यारोपयद्विपम् ॥ ५३८ ॥
राजापि गजमारुह्यावन्तीं प्राप तथा द्रुतम् । समागतेवाभिमुखं यथा सा पुर्यलक्ष्यत ॥ ५३९ ॥
वणिजो विदिशापुर्यां भायलस्वामिनोऽन्यदा । गोशीर्षकाष्ठप्रतिमा विद्युन्मालिप्रकाशिता ॥ ५४० ॥
राज्ञा कुब्जिकया चापि पूजनाय समर्पिता । तयोस्तदपि बह्वेतद्विषयासक्तयोः सदा ॥ ५४१ ॥
॥ युग्मम् ॥

---

१ मनोहररागेण । २ कस्याचिद्ध्रुवाया गीयमानाया सत्याम् । ३ श्रीवीराज्ञाम् । ४ तव पुरीं पवित्रयन् । ५ नियोगिवत् ।

तपो दुष्करमुज्झेदं भोगान् भुंक्ष्व मया सह । त्यक्ष्यामि सर्वथा प्राणान् प्राणनाथाहमन्यथा ॥ ४२८ ॥
भूयो भूयस्तयेत्युक्तो भोगान् दोषान् विदन्नपि । भोग्यकर्मवशात्तस्याः प्रत्यपादि वचोऽथ सः ॥४२९॥
दशाधिकान् वानुदिनं बोधयिष्यामि नो यदि । तदादास्ये पुनर्दीक्षां प्रतिज्ञामिति चाकृत ॥ ४३० ॥
त्यक्तर्षिलिंगः सोऽवात्सीत्तद्गृहे चिन्तयन् सदा । दीक्षानिषेधिकां वाचं देवताया जिनस्य च ॥४३१॥
भोगान् सह तयाभुंक्त सोऽन्वहं च दिनान्दश । प्रबोध्य भव्यान् दीक्षार्थं प्रैषीदुपजिनेश्वरम् ॥४३२॥
क्षीणेऽन्यदा भोगफले तस्य बोधयतः सतः । नवाबुधन्नाद्यैकजातीयो दशमो न तु ॥ ४३३ ॥
तस्मिन्नबुध्यमाने सा वेश्या रसवतीं कृताम् । आचख्यौ नन्दिषेणाय समयज्ञा मुहुर्मुहुः ॥ ४३४ ॥
सोऽपूर्णाभिग्रहो भोक्तुं नोत्तस्थौ किं तु सादरम् । तं टंकं बोधयन्नस्थाद्गीर्भिर्विविधभंगिभिः ॥ ४३५ ॥
तदा चोवाच तं वेश्या प्राक्सिद्धान्नं विरस्यभूत् । भूयो निष्पन्नमस्त्यन्नं किं विलंबयसि प्रभो ॥४३६॥
नन्दिषेणोऽप्यवोचत्तां बोधितो दशमो न हि । अहमेवाद्य दशमः प्रव्रजिष्यामि तत्पुनः ॥ ४३७ ॥
इत्युक्त्वा तां नन्दिषेणो भुक्तं भोग्यफलं विदन् । निर्गत्य स्वामिनः पार्श्वे प्रव्रज्यां पुनराददे ॥ ४३८ ॥

आलोच्य तद्दुश्चरितं महात्मा समं जिनेन्द्रेण स नन्दिषेणः ।
कुर्वन्विहारं निशितं व्रतं च प्रपालयन्देवभुवं जगाम ॥ ४३९ ॥

॥ इत्याचार्यश्रीहेमचन्द्रसूरिविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि श्रेणिक-सम्यक्त्वलाभमेघकुमारनन्दिषेणप्रव्रज्यावर्णनो नाम षष्ठः सर्गः ॥

---

१ त्यज । २ सुवर्णकारः । ३ विविधरचनाभिर्वाणीभिः । ४ रसरहितमभूत् । ५ वदन्निति पाठान्तरम् ।

तत्पादपद्मसान्निध्यात्प्रतिबोधमवाप्य ये । गृहिधर्मं द्वादशधा शिश्रियुः [1]कृतिनो हि ते ॥ ६१५ ॥
तत्प्रसादाच्च ये सर्वविरतिं प्रतिपेदिरे । ते श्लाघ्या वन्दनीयास्ते तेभ्यो नित्यं नमो नमः ॥ ६१६ ॥
स्वामी वीतभयमपि विहारेण पुनाति चेत् । तत्पादमूले प्रव्रज्यामादाय स्यां तदा कृती ॥ ६१७ ॥
वयं चाभय तज्ज्ञात्वा तदनुग्रहकाम्यया । चंपापुर्याः प्रचलिताः समवासार्ष्म तत्पुरे ॥ ६१८ ॥
अस्मान् प्रणम्य श्रुत्वा च देशनां गतवान् गृहे । एवं स चिन्तयामास स्वविवेकगुणोचितम् ॥ ६१९ ॥
सूनवेऽभीचये राज्यं व्रतेच्छुश्चेद्ददाम्यहम् । संसारनाटकनटस्तन्मयैष कृतो भवेत् ॥ ६२० ॥
उशन्ति [2]नैरकान्तं हि राज्यं नीतिविदोऽपि च । तत्सूनवे न दास्येऽहं दास्ये चेत्तन्न तद्धितः ॥ ६२१ ॥
इति केशिनि जामेये राज्यश्रियमुदायनः । सद्यः संक्रमयामास तेजोऽर्क इव पावके ॥ ६२२ ॥
जीवन्तस्वामिदेवाय पूजार्थमथ पार्थिवः । शासनेन ददौ भूरि ग्रामाकरपुरादिकम् ॥ ६२३ ॥
ततः केशिनरेन्द्रेण कृतनिष्क्रमणोत्सवः । अस्मत्पार्श्वे परिव्रज्यामुदायन उपात्तवान् ॥ ६२४ ॥
स तपोभिः षष्ठाष्टमदशमद्वादशादिभिः । व्रताहादपि कर्मेव स्वमात्मानमशोषयत् ॥ ६२५ ॥

तृणमिव परिहृत्य राज्यलक्ष्मीं श्रामण्यं प्रतिपन्नवान् विशुद्धम् ।
इत्यभयकुमार कीर्तितस्ते चरमो राजर्षिरुदायनाख्यः ॥ ६२६ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि रौहिणेयचरिताभयकुमारापहारोदायनचरितप्रद्योतबन्धनोदायनप्रव्रज्यावर्णनो नामैकादशः सर्गः ॥

---

१ कृतार्थाः । २ नरकोऽन्ते यस्य तत् ।

स्वयं तु तस्मिन्नंगारगर्ते झंपां ददौ करी । सद्यो विपद्य चाद्यायामुत्पेदे नरकावनौ ॥ २०५ ॥
कुमारौ दध्यतुर्धिग्धिगावाभ्यां किमनुष्ठितम् । पशुत्वमावयोर्व्यक्तं न तु सेचनकः पशुः ॥ २०६ ॥
आर्यपादा यस्यकृते क्षिप्ता दुर्व्यसने चिरम् । तं स्वयं निधनं नीत्वा जीवावोऽद्यापि दुर्धियौ ॥ २०७ ॥
आर्यसैन्यस्य महतो नाशप्रतिभुवाविव । अकृष्वहि वृथा नाशं नीतो बन्धुरबन्धुताम् ॥ २०८ ॥
तन्नाद्य जीवितुं युक्तं जीवावश्चेदतः परम् । शिष्यीभूयार्हतो वीरस्वामिनः खलु नान्यथा ॥ २०९ ॥
तदा शासनदेव्या तौ भावश्रमणतां गतौ । नीतौ श्रीवीरपादान्ते परिवव्रजतुर्द्रुतम् ॥ २१० ॥
तदा च प्रव्रजितयोरपि हल्लविहल्लयोः । अशोकचन्द्रो वैशालीमादातुमशकन्न हि ॥ २११ ॥
एवं सति च चंपेशः प्रतिज्ञामकृतेदृशीम् । प्रतिज्ञया पौरुषं हि दोष्मतां भृशमेधते ॥ २१२ ॥
न खनामि पुरीमेतां खरयुक्तहलेन चेत् । तदाहं भृगुपातेनाग्निप्रवेशेन वा म्रिये ॥ २१३ ॥
कृतसन्धोऽपि वैशालीं पुरीं भंक्तुमनीश्वरः । खेदमासादयामास कूणिकः क्रमयोगतः ॥ २१४ ॥
तदा चाशोकचन्द्रस्य खिन्नस्य गमनस्थिता । देव्याख्यदीदृशं रुष्टा श्रमणे कूलवालुके ॥ २१५ ॥
"गतियं चे मागधियं शमने कुलवालके । लमिद्य कूणि एलाप तो वेशालिं गहिस्सदि ॥ २१६ ॥
आकाशदेवतावाचमिमामाकर्ण्य कूणिकः । बभाण सद्यः सञ्जातजयप्रत्याशयोल्लसन् ॥ २१७ ॥
बालकानां हि या भाषा या भाषा योषितामपि । औत्पातिकी च या भाषा सा वै भवति नान्यथा ॥ २१८ ॥
तत्कास्ति श्रमणः कूलवालुकः प्राप्स्यते कथम् । पण्यांगना मागधिकाभिधाना विद्यते क्व च ॥ २१९ ॥

---

१ शत्रुताम् । २ कूणिकः ।

वन्दित्वा श्रीमदर्हन्तं वलितौ तौ च दंपती । जलोपान्ते ददृशतुः श्रमणं प्रतिमास्थितम् ॥ १२ ॥
निरुत्तरीयं तं शीतपरीषहसहं मुनिम् । तौ दंपती ववन्दाते सपद्युत्तीर्य वाहनात् ॥ १३ ॥
तं क्षमाश्रमणं नत्वा सह पत्न्या महीपतिः । वन्दित्वा स्वं ययौ हर्म्यं पुण्यवार्तां प्रपंचयन्[1] ॥ १४ ॥
निर्दग्धागरुकर्पूरधूपधूमान्धकारिते । वासागारे ययौ राजा कृत्वा सायोचितां[2] क्रियाम् ॥ १५ ॥
देव्या चेलणया गंडोपधानीकृतदोर्लतः । तद्वक्षसि न्यस्तकरः सुष्वाप श्रेणिको निशि ॥ १६ ॥
वामनीकृतवक्षोजं गाढमालिंगितस्तया । राजा निद्रामुपेयाय राज्ञी निद्रायते च सा ॥ १७ ॥
निद्रान्तरे चेल्लणायाः प्रच्छदात्[3] पाणिपल्लवः । बहिर्बभूव निद्रा हि परिरंभ[4]विघट्टनी ॥ १८ ॥
शीतेन दुःसहेनालि[5]कंटकेनेव तत्करः । स्पृष्टश्च तद्वेदनया प्राबुध्यत च चेलणा ॥ १९ ॥
शीतार्तकृतसीत्कारा सा पाणिकमलं निजम् । प्रच्छदान्तर्नृपहृदि निजं मन इव न्यधात् ॥ २० ॥
तदा निरुत्तरीयं तं महर्षिं प्रतिमास्थितम् । स्मृत्वोवाचेदृशे शीते कथं हा स भविष्यति ॥ २१ ॥
साससाद पुनर्निद्रां तथैव सरलाशया । दासीव वश्या प्रायेण निद्रा ह्यकलुषचेतसाम् ॥ २२ ॥
तस्याः सीत्कारमात्रेणाल्पनिद्रः पार्थिवोऽपि हि । प्रबुद्धस्तद्वचः श्रुत्वा चिन्तयामास चेतसि ॥ २३ ॥
नूनमस्या मनस्यन्यः प्रेयानस्ति रिरंसि[6]तः । शीतार्तिसंभावनया यमेवमनुशोचति ॥ २४ ॥
स ताम्यन्नीर्ष्यया चैवं तां निशां जाग्रदत्यगात् । प्रियंजानि[7]रकुहनो[8] न कदापि सचेतनः ॥ २५ ॥

१ विस्तारयन् । २ सायकालयोग्याम् । ३ प्रावरणवस्त्रात् । ४ आलिंगनत्याजिनी । ५ वृश्चिकस्य कंटकेन । ६ रन्तु क्रीडितुमिष्टः । ७ प्रीतिमती जाया यस्य सः । ८ अमत्सरी ।

विहरन्तोऽन्यदाचार्यास्ते गिरेर्नगरं ययुः । उज्जयन्तं चारुरुहुः सह क्षुल्लेन तेन तु ॥ ३३५ ॥
क्षुल्लेन देवं वन्दित्वा गुरोरुत्तरतो गिरेः । मुमुचे गंडपाषाणः पेषणाय दुरात्मना ॥ ३३६ ॥
श्रुत्वा खडखडाशब्दं गुरुराकुञ्चितेक्षणः । आलुलोके तमश्मानं पतन्तं पविगोलवत् ॥ ३३७ ॥
चक्रे च वितते जंघे स ग्रावापि तदन्तरे । निरियायापदः प्रायः प्रभवन्ति न धीमति ॥ ३३८ ॥
शशाप च गुरुः क्षुल्लं कुपितस्तेन कर्मणा । स्त्रीसकाशादरे पाप व्रतभंगमवाप्स्यसि ॥ ३३९ ॥
क्षुल्लोऽब्रवीद्गुरो शापं करिष्यामि तवान्यथा । तत्र वत्स्याम्यरण्येऽहं यत्र द्रक्ष्यामि न स्त्रियम् ॥३४०॥
इति सद्यो गुरुं त्यक्त्वा मर्यादामिव दुर्मतिः । निर्मानुषामरण्यानीं स शार्दूल इवाविशत् ॥ ३४१ ॥
गिरिकूलंकषा[1]मूले स्थितः प्रतिमया सदा । स मासादर्धमासाद्वा पथिकादेरपारयत् ॥ ३४२ ॥
एवं कूलंकषामूले मुनेस्तस्य तपस्यतः । प्रावृट् प्रादुर्बभूवाब्दै[2]र्वितानितनभस्तला ॥ ३४३ ॥
रसोद्रेकेण लुंपन्त्य उभे कूले[3] कुले इव । नद्य उन्मार्गगामिन्यो बभूवुः कुलटा इव ॥ ३४४ ॥
क्षुल्लाधिष्ठितकूलायामुत्पूरायां सरित्यथ । दध्यौ तद्देवता भक्ता शासने श्रीमदर्हताम् ॥ ३४५ ॥
कूलस्थितो मुनिरयं कूलद्रुम इवाधुना । नेष्यते वारिपूरेण यद्युपेक्षां करोम्यहम् ॥ ३४६ ॥
ततो गिरिणदीदेव्या निजं कूलं दिशान्यया । प्रावर्ति यत्र तत्रापि क्षेममेव तपोजुषाम् ॥ ३४७ ॥
कूलवालक इत्याख्या तदा तस्य मुनेरभूत् । सांप्रतं वर्ततेऽमुत्र प्रदेशे स महातपाः ॥ ३४८ ॥
कृतकृत्येव सा सद्यः स्मयमानेक्षणा ययौ । कूलवालकविज्ञानात् फलि[4]तद्रुमपादपा ॥ ३४९ ॥

---

१ कूलंकषा नदी । २ अब्दैर्मेघैर्वितानितमाच्छादितं नभस्तल यया सा । ३ तीरे । ४ फलितश्छद्मैव पादपो वृक्षो यस्याः सा ।

अन्तरन्तःपुरं गन्तुं प्रातरादिश्य चेलणाम् । आहूयाभयमित्यूचे श्रेणिकश्चंडशासनः ॥ २६ ॥
ज्ञातमन्तःपुरमभूद्धे दुराचारदूषितम् । तत्सर्वं ज्वाल्यतां मा भूर्मातृमोहादनीदृशः ॥ २७ ॥
इत्यादिश्याभयं राजा राजमानोऽद्भुतश्रिया । अर्हद्भट्टारकं वीरस्वामिनं वन्दितुं ययौ ॥ २८ ॥
अभयः सभयस्ताते स्वभावाच्च विमृश्यकृत् । मंत्रविन्मन्त्रयांचक्रे मनीषी मनसा सह ॥ २९ ॥
सतीमतल्लिकाः[1] सर्वा मातरो मे स्वभावतः । तास्वहं कृतरक्षोऽस्मि तातस्याज्ञा च तादृशी ॥ ३० ॥
संभावितं त्वसंभाव्यं तातपादैः करोमि किम् । नदीपूर इवासह्यः कोपो हि प्रथमं प्रभोः ॥ ३१ ॥
तथापि चित्रमुत्पाद्य कालक्षेपः करिष्यते । कालक्षेपाद्यदि पुनः प्रभोः कोपो निवर्तते ॥ ३२ ॥
शुद्धान्तसन्निधौ जीर्णेभकुटीरभयस्ततः । ज्वालयामास निर्दग्धः शुद्धान्त इति घोषयन् ॥ ३३ ॥
इतश्च श्रेणिकोऽपृच्छत् समये परमेश्वरम् । एकपत्नी[2] किमनेकपत्नी वा चेलणा प्रभो ॥ ३४ ॥
स्वाम्याख्यद्धर्मपत्नी ते चेलणा हि महासती । तामन्यथा मा शंकिष्ठाः शीलालंकारशालिनीम् ॥ ३५ ॥
इदं च श्रेणिकः श्रुत्वा पश्चात्तापमुपागतः । सपदि स्वामिनं नत्वा दधावे नगरं प्रति ॥ ३६ ॥
तथा प्रदीपनं कृत्वाभ्यायान्तं चाभयं नृपः । अपृच्छदस्मदादेशो भवता किमनुष्ठितः ॥ ३७ ॥
अभयोऽप्यभयादूचे प्रणम्य रचिताञ्जलिः । स्वाम्यादेशोऽपरस्यापि प्रमाणं किं पुनर्मम ॥ ३८ ॥
राजा प्रोवाच रे पाप दग्ध्वा मातृजनं निजम् । जीवसि त्वं किमद्यापि किं नापप्तः[3] प्रदीपने ॥ ३९ ॥
अभयोऽप्यभ्यधादेव श्रुतार्हद्वचनस्य मे । पतंगमरणं नार्हमादास्ये समये व्रतम् ॥ ४० ॥

---

१ सतीषु श्रेष्ठाः । २ एकः पतिर्यस्या. सा । ३ पत्ल पतने लुङि मध्यमपुरुषैकवचनम् ।

कटाक्षवीक्षणैस्तस्या अंगस्पर्शमृदूक्तिभिः । मुनेस्तस्याचलच्चित्तं स्त्रीसंगे हि कियत्तपः ॥ ३६५ ॥
मुनेर्मागधिकायाश्च मिथः शय्यासनादिभिः । दंपतिव्यवहारोऽभूदतिव्यक्तो दिने दिने ॥ ३६६ ॥
निन्ये च मागधिकया चंपायां कूलवालकः । नारीणां किंकर इव कामान्धः किं करोति न ॥ ३६७ ॥
चंपेशाय शशंसे च देवायं कूलवालकः । पतीकृत्य मयानीतः किं करोतु समादिश ॥ ३६८ ॥
आदिदेश विशामीशोऽप्यादरात् कूलवालकम् । यथा भज्येत वैशाली मंक्षु भिक्षो तथा कुरु ॥३६९॥
प्रतिश्रुत्य नृपादेशं धीनिधिः कूलवालकः । जगाम लिंगिरूपेण वैशालीमस्खलद्गतिः ॥ ३७० ॥
चंपानाथोऽपि तत्कालं वैशालीमखिलैर्बलैः । रुरोध रुद्धामग्रेऽपि जयप्रत्याशयोत्सुकः ॥ ३७१ ॥
भव्याणि भ्रष्टुमारेभे पुर्या मागधिकापतिः । श्रीमुनिसुव्रतस्वामिस्तूपमेकं ददर्श च ॥ ३७२ ॥
सोऽचिन्तयच्च तं दृष्ट्वा प्रतिष्ठालग्नमस्य हि । बलीयस्तत्प्रभावेण निश्चितं पूर्न भज्यते ॥ ३७३ ॥
केनाप्यौपयिकेनेदं स्तूपमुत्थाप्यते यदि । तदा भज्येत वैशाली नान्यथा वज्रिणापि हि ॥ ३७४ ॥
चिन्तयन्निति बभ्राम वैशाल्यां कूलवालकः । अपृच्छ्यत च तल्लोकैः पुरीरोधकदर्थितैः ॥ ३७५ ॥
वयं भदन्त दान्ताः स्मः पुरीरोधेन विद्विषा । यदि वेत्सि तदाख्याहि कदोपेष्टो भविष्यति ॥ ३७६ ॥
सोऽवदद्वेद्म्यहं सम्यग्यावत् स्तूपमिहास्त्यदः । नगर्यां तावदुपेष्टो न भविष्यति हे जनाः ॥ ३७७ ॥
स्तूपेऽस्मिन् भज्यमानेऽपि भावी प्रत्यय एष वः । द्विट्सैन्यं वार्धिवेलेवाकस्मादपसरिष्यति ॥ ३७८ ॥
उत्कीलिते समन्तात्तु स्तूपे स्वस्त्यस्तु वो जनाः । कुलघ्ने स्थापितमिदं मा मोहमिह यात भोः ॥३७९॥

१ दमिताः । २ समुद्रवेला ।

अन्वविष्यत्तदादेशो यद्येवमपि मे प्रभोः । तदा पतंगमृतिमप्यन्वष्ठास्यं न संशयः ॥ ४१ ॥
अकृत्यं मज्जिराप्येवं किमकार्षीरिति ब्रुवन् । ततः पीतविष इव मूर्छयालिंगि पार्थिवः ॥ ४२ ॥
राजानमभयोऽसिञ्चत् स्वयं शिशिरवारिणा । स्वस्थीभूते च तत्रोचे क्षेममन्तःपुरे प्रभो ॥ ४३ ॥
मन्मातॄणामप्रसादं प्रभो भाग्यविपर्ययात् । अकार्षीर्निग्रहादेशादपराद्धं मया त्वदः ॥ ४४ ॥
जीर्णाः करिकुटीस्तात शुद्धान्तस्या[1]दवीयसीः । अधाक्षं युष्मदाज्ञामप्यविमृश्य करोमि न ॥ ४५ ॥
राजोचे मम पुत्रोऽसि बुद्धिमानसि चाभय । समागच्छन् कलंको मे दूरं येनापसारितः ॥ ४६ ॥
पारितोषिकदानेनानुग्राह्याथाभयं नृपः । अ[2]त्युत्कश्चेलणादेवीदर्शने सदनं ययौ ॥ ४७ ॥
ततो नवनवेनेव प्रेम्णा प्रतिदिनं नृपः । अरंस्त चेलणादेव्या श्रीदेव्येव [3]वृषाकपिः ॥ ४८ ॥
अन्येद्युः पार्थिवो दध्यौ चेलणा प्रेयसी मम । कः कर्तव्योऽन्यराज्ञीभ्यः प्रसादोऽस्यां विशेषवान् ॥४९॥
एकस्तंभं तदेतस्याः प्रासादं कारयाम्यहम् । तत्र स्थिता क्रीडतु सा विमानस्थेव खेचरी ॥ ५० ॥
उपायमिति निश्चित्य श्रेणिकोऽभयमादिशत् । एकस्तंभं कारयेथाः प्रासादं चेलणाकृते ॥ ५१ ॥
अभयोऽपि स्तंभयोग्यदार्वानयनहेतवे । आदिशद्वर्धकिं सोऽपि [4]दार्वर्थमटवीं ययौ ॥ ५२ ॥
पश्यन्नेकैकशो वृक्षानटव्यामथ वर्धकिः । वृक्षमेकमुदैक्षिष्ट सर्वलक्षणलक्षितम् ॥ ५३ ॥
दध्यौ च बहलच्छायोऽभ्रंलिहः पुष्पितः फली । महाशाखो महास्कन्धः सामान्योऽयं तरुर्न हि ॥ ५४ ॥
यादृशं तादृशमपि स्थानं निर्दैवतं न हि । वृक्षराजः पुनरयं श्रियापि व्यक्तदैवतः ॥ ५५ ॥

१ समीपस्था. । २ अत्युत्कठितः । ३ विष्णु श्रीदेव्या लक्ष्म्येव । ४ काष्ठकृते ।

धरणेन श्लाघ्यमानधर्मध्यानो[1] महामना । तस्थौ मृत्योरचकितश्चेटकः प्राग्रणादिव ॥ ३९३ ॥
अर्हत्सिद्धसाधुधर्मान्मंगल्यान्मंगलात्मनः । लोकोत्तमांश्च चतुरश्चतुरः[2][3] सोऽस्मरत् स्वयम् ॥ ३९४ ॥
जीवाजीवादितत्त्वोपदेशकाः परमेश्वराः । बोधिप्रदाः स्वयंबुद्धा अर्हन्तः शरणं मम ॥ ३९५ ॥
ध्यानाग्निदग्धकर्माणस्तेजोरूपा अनश्वराः । अनन्तकेवलज्ञानाः सिद्धाश्च शरणं मम ॥ ३९६ ॥
निरीहा निरहंकारा निर्ममाः समचेतसः । महाव्रतधरा धीराः साधवः शरणं मम ॥ ३९७ ॥
अहिंसासूनृतास्तेयब्रह्माकिंचनतामयः । केवल्युपज्ञः परमो धर्मश्च शरणं मम ॥ ३९८ ॥
अपि जन्मशतैर्यद्यदपराद्धं शरीरिषु । त्रिविधं त्रिविधेनापि तन्निन्दामि समाहितः ॥ ३९९ ॥
गृहिधर्मं द्वादशधा मया पालयता कृता । ये केचिदप्यतीचारास्तान् सर्वान् व्युत्सृजाम्यहम् ॥ ४०० ॥
क्रोधमानमायालोभाभिभूतेन मया सदा । कृतं यद्यच्च हिंसादि तत्रिधापि धिगस्तु मे ॥ ४०१ ॥
एवमाराधनां कृत्वा नमस्कारपरायणः । विपद्य चेटकः स्वर्गसुखभाजनतां ययौ ॥ ४०२ ॥
अशोकचन्द्रोऽपि पुरीं तां हलैर्युक्तरासभैः । खेटयित्वा क्षेत्रमिव स्वां प्रतिज्ञामपूरयत् ॥ ४०३ ॥
तीर्त्वा प्रतिज्ञां चंपेशो दुस्तरामापगामिव । जगाम चंपानगरीमुत्सवेन गरीयसा ॥ ४०४ ॥
अन्यदा पावयन् पृथ्वीं विहारेण जगद्गुरुः । जगाम चंपां श्रीवीरस्तत्रैव समवासरत् ॥ ४०५ ॥
श्रीवीरस्वामिनः पार्श्वे तत्र कालादिमातरः । विरक्ताः सूनुनिधनात् प्राव्रजञ्छ्रेणिकप्रियाः ॥ ४०६ ॥
त्रैलोक्यसंशयच्छेदकारकं परमेश्वरम् । वन्दितुं तत्र समवसरणे कूणिकोऽप्यगात् ॥ ४०७ ॥

---

१ श्लाघ्यमान धर्मध्यानं यस्य स । २ चतु.सख्याकान् । ३ निपुणः ।

# ॥ अथ त्रयोदशः सर्गः ॥

अथ तत्र सुराश्चक्रुर्वप्रत्रितयभूषितम् । रम्यं समवसरणं स्वामिनो देशनासदः[1] ॥ १ ॥
ज्ञात्वा निजायुःपर्यन्तमन्तिमां देशनां प्रभुः । कर्तुं तस्मिन्नुपाविक्षत् सुरासुरनिषेवितः ॥ २ ॥
स्वामिनं समवसृतं ज्ञात्वा पापापुरीपतिः । हस्तिपालः समागत्य नत्वा च समुपाविशत् ॥ ३ ॥
शुश्रूषमाणास्तत्रास्थुर्यथास्थानं सुरादयः । एत्य नत्वा सहस्राक्ष इति स्वामिनमस्तवीत् ॥ ४ ॥
धर्माधर्मौ विना नांगं विनांगेन मुखं कुतः । मुखाद्विना न वक्तृत्वं तच्छास्तारः परे[2] कथम् ॥ ५ ॥
अदेहस्य जगत्सर्गे प्रवृत्तिरपि नोचिता । न च प्रयोजनं किंचित् स्वातंत्र्यान्न पराज्ञया ॥ ६ ॥
क्रीडया चेत्प्रवर्तेत रागवान् स्यात्कुमारवत् । कृपयाथ सृजेत्तर्हि सुख्येव सकलं सृजेत् ॥ ७ ॥
दुःखदौर्गत्यदुर्योनिजन्मादिक्लेशविह्वलम् । जनं तु सृजतस्तस्य कृपालोः का कृपालुता ॥ ८ ॥
कर्मापेक्षः स चेत्तर्हि न स्वतंत्रोऽस्मदादिवत् । कर्मजन्ये च वैचित्र्ये किमनेन शिखंडिना[3] ॥ ९ ॥
अथ स्वभावतो वृत्तिरवितर्क्या महेशितुः । परीक्षकाणां तर्ह्येष परीक्षाक्षेपडिंडिमः ॥ १० ॥
सर्वभावेषु कर्तृत्वं ज्ञातृत्वं यदि संमतम् । मतं नः सन्ति सर्वज्ञा मुक्ताः कायभृतोऽपि च ॥ ११ ॥
सृष्टिवादकुहेवाकमुन्मुच्येत्यप्रमाणकम् । त्वच्छासने रमन्ते ते येषां नाथ प्रसीदसि ॥ १२ ॥

---

१ देशनासभागृहम् । २ परे पराभिमता ईश्वराः । ३ यदि कर्मजन्य वैचित्र्य तर्हि शिखंडिना नपुसकरूपेणानेनेश्वरेण किं प्रयोजनम् ।

विद्यासिद्धस्य मातंगपतेस्तत्पुरवासिनः । पत्न्या अन्येद्युरुत्पेदे [1]माकंन्दफलदोहदः ॥ ७० ॥
सावोचत्पतिमाम्राणि देहि पूरय दोहदम् । सोऽब्रवीदयि मूढा त्वमाम्राण्यसमये कुतः ॥ ७१ ॥
मातंगपतिमित्यूचे न्वार्या[2]र्यसुत विद्यते । फलितं चेलणोद्याने सहकारवनं सदा ॥ ७२ ॥
तदैव चेलणोद्यानसमीपं समुपेयिवान् । अतितुंगान् स मातंगोऽद्राक्षीच्चूतान् सदाफलान् ॥ ७३ ॥
[3]उत्पश्योऽपश्यदागत्य निश्याम्राणि पुनश्च सः । पचेलिमानि गणको नक्षत्राणीव न्नूस्थितः ॥ ७४ ॥
क्षणादेवावनामन्या विद्यासिद्धः स विद्यया । आम्रशाखां नमयित्वा स्वैरमाम्राण्युपाददे ॥ ७५ ॥
प्रातर्लूनफलामाम्रवाटिकां राज्युदैक्षत । चित्रशालामिव भ्रष्टचित्रामरतिदायिनीम् ॥ ७६ ॥
राज्ञी राज्ञे तदाचख्यौ राजाप्यभयमादिशत् । अदृष्टपदसंचारमाम्रचौरं गवेषय ॥ ७७ ॥
[4]दस्योर्यस्येदृशी शक्तिरतिशायिन्यमानुषी । वत्स संभाव्यते तस्मादप्यन्तःपुरविप्लवः ॥ ७८ ॥
अवादीदभयोऽप्येवमर्पयिष्यामि तस्करम् । अचिरादेव तं देव [5]दर्शनप्रतिभूरिव ॥ ७९ ॥
इति प्रतिज्ञां निर्माायाभयस्तद्दिवसादपि । पुरेऽहर्निशमभ्राम्यत्तस्य दस्योर्दिदृक्षया ॥ ८० ॥
एकदा च पुरे भ्राम्यन्नभयो धीमतां वरः । कार्यमाणे पुरजनैः क्वापि संगीतके ययौ ॥ ८१ ॥
पौरदत्तासनासीनोऽभयः पौरानभापत । न यावदायान्ति नटास्तावदाकर्ण्यतां कथा ॥ ८२ ॥
वसन्तपुरवास्तव्यो जीर्णश्रेष्ठ्यतिनिर्धनः । एकोऽभूत्तस्य च बृहत्कुमार्येका वरोचिता ॥ ८३ ॥
[6]वरवृन्दारकप्राप्त्यै देवं पूजयितुं स्मरम् । क्वाप्युद्याने चौरिकयो[7]च्चिच्ये पुष्पाणि सान्वहम् ॥ ८४ ॥

१ आम्रफलदोहदः । २ हे आर्यपुत्र । ३ ऊर्ध्वपश्यः । ४ चौरस्य । ५ दर्शनसाक्षीव । ६ उत्तमवरप्राप्त्यै । ७ उच्चिचाय ।

ते विक्ष्यन्ति भरतभूरभूत् पुष्पफलादिभृत्। भद्रयं नातः परं मांसं त्याज्यो मांसादकश्च यः ॥ १७८ ॥
यथा यथैष्यति कालो वर्त्स्यति हि तथा तथा। रूपसंहननायूंषि धान्यादीनि च भारते ॥ १७९ ॥
भविष्यन्ति सुखा वाता ऋतवः सलिलानि च। तिर्यञ्चश्च मनुष्याश्च गतरोगाः क्रमेण च ॥ १८० ॥
दुःषमान्ते भविष्यन्ति मध्येप्राग्भरतावनि। कुलकराः सप्त तत्रादिमो विमलवाहनः ॥ १८१ ॥
सुदामा संगमश्चापि सुपार्श्वश्च चतुर्थकः। दत्तश्च सुमुखश्चैव संमुचिश्चेति ते क्रमात् ॥ १८२ ॥
तत्र जातिस्मरः पूर्वो नाम्ना विमलवाहनः। निवेशयिष्यति ग्रामपुरादीन् राज्यहेतवे ॥ १८३ ॥
संग्रहीष्यति गोगजाश्वाद्यथ व्यञ्जयिष्यति। शिल्पानि व्यवहारं च लिपीश्च गणितादि च ॥ १८४ ॥
उत्पन्ने दुग्धदध्यादौ सस्येषु ज्वलनेऽपि च। हितकारी स प्रजानां रन्धनाद्युपदेक्ष्यति ॥ १८५ ॥
दुःषमायामतीतायां शतद्वारे महापुरे। भद्रानाम्न्यां महादेव्यां संमुचेः पृथिवीपतेः ॥ १८६ ॥
नन्दनः श्रेणिकजीवो भविष्यत्यादितीर्थकृत्। पद्मनाभाभिधस्तुल्यो जन्ममानादिना मम ॥ १८७ ॥
अतः परं पूर्ववच्च भविष्यन्ति जिनेश्वराः। प्रातिलोम्येन पूर्वार्हत्समाः सर्वेऽप्यमी क्रमात् ॥ १८८ ॥
तत्र श्रेणिकराड्जीवः पद्मनाभो जिनेश्वरः। सुपार्श्वजीवो भगवान् शूरदेवो द्वितीयकः ॥ १८९ ॥
तृतीयः पोट्टिलजीवः सुपार्श्वो जिनपुंगवः। जीवो दृढायुषस्तुर्यस्तीर्थनाथः स्वयंप्रभुः ॥ १९० ॥
कार्तिकस्य जीवः सर्वानुभूतिरिति पंचमः। जीवः शंखस्य षष्ठोऽर्हन् देवश्रुतोऽभिधानतः ॥ १९१ ॥
सप्तमो नन्दजीवस्तु जिनेन्द्र उदयाह्वयः। सुनन्दजीवोऽष्टमोऽर्हन् पेढाल इति नामतः ॥ १९२ ॥
नवमः केकसीजीवो जिनेन्द्रः पोट्टिलाभिधः। दशमो रेवतिजीवः शतकीर्तिर्जिनेश्वरः ॥ १९३ ॥

इत्युक्तवन्तं श्रीवीरं सुधर्मा गणभृद्वरः । पप्रच्छ केवलादिभ्यः किं कुत्रोच्छेदमेष्यति ॥ २०८ ॥
स्वाम्यथाख्यन्मम मोक्षाद्गते काले कियत्यपि । जंबूनाम्नस्तव शिष्यात् परं भावि न केवलम् ॥ २०९ ॥
उच्छिन्ने केवले भावी न मनःपर्ययोऽपि हि । पुलाकलब्धिश्च तथावधिश्च परमो न हि ॥ २१० ॥
क्षपकोपशमश्रेण्यौ न च नाहारकं वपुः । जिनकल्पो न हि न हि संयमत्रितयं तथा ॥ २११ ॥
शिष्यः सेत्स्यति ते जंबूः स चतुर्दशपूर्वभृत् । जंबूशिष्यः प्रभवश्च भविता सर्वपूर्वभृत् ॥ २१२ ॥
शय्यंभवस्तु तच्छिष्यो द्वादशांगी भविष्यति । दशवैकालिकं ग्रन्थं स्रक्ष्यत्युद्धृत्य च श्रुतात् ॥ २१३ ॥
तस्य शिष्यो यशोभद्रो भविता सर्वपूर्वभृत् । संभूतभद्रबाहू च तच्छिष्यौ सर्वपूर्विणौ ॥ २१४ ॥
स्थूलभद्रोऽथ संभूतान्तेवासी सर्वपूर्वभृत् । ततोऽन्तिमा चतुःपूर्वी व्युच्छेदमुपयास्यति ॥ २१५ ॥
महागिरिसुहस्त्याद्या वज्रान्ता दशपूर्विणः । ततः परं भविष्यन्ति तीर्थस्यास्य प्रवर्तकाः ॥ २१६ ॥
एवमाख्याय समवसरणान्निर्ययौ प्रभुः । हस्तिपालनरेन्द्रस्य शुल्कशालां जगाम च ॥ २१७ ॥
स्वामी तद्दिनयामिन्यां विदित्वा मोक्षमात्मनः । दध्यावहो गौतमस्य मयि स्नेहो निरत्ययः ॥ २१८ ॥
स एव केवलज्ञानप्रत्यूहोऽस्य महात्मनः । स छेद्य इति विज्ञाय निजगादेति गौतमम् ॥ २१९ ॥
देवशर्मा द्विजो ग्रामे परस्मिन्नस्ति स त्वया । बोधं प्राप्स्यति तद्धेतोस्तत्र त्वं गच्छ गौतम ॥ २२० ॥
यथादिशति मे स्वामीत्युदित्वा च प्रणम्य च । जगाम गौतममुनिस्तथा चक्रे प्रभोर्वचः ॥ २२१ ॥

---

१ परिहारविशुद्धिसूक्ष्मसंपराययथाख्यातनामकं संयमत्रितयम् । २ द्वादशांगभृत् । ३ महागिरिश्च सुहस्ती चादी येषां ते ।

स्वप्नावकथनात्[1]तस्या मन्वानैः सत्यसन्धताम् । आगच्छन्तीं ग्रहीष्याम इति चौरैरमोचि सा ॥ ९८ ॥
अग्रे च रक्षसैकेन बुभुक्षाक्षामकुक्षिणा । रुरुधे मृगनेत्रा सा मृगीव मृगवैरिणा[2] ॥ ९९ ॥
तस्याः स्वप्नावाख्यानेन विस्मितो राक्षसोऽपि हि । वलितां भक्षयिष्यामीत्याशयेन मुमोच ताम् ॥१००॥
सा ययौ च तमाराममारामिकमुवाच च । पुष्पलाव्यस्मि सैषाहं नवोढा त्वामुपागता ॥ १०१ ॥
अहो महासती सत्यप्रतिज्ञेयं महात्मिका । इति तां मातृवन्नत्वा मालिकोऽपि मुमोच सः ॥ १०२ ॥
सा व्याघुटन्ती तत्रैव रक्षसस्तत्र तस्थुषः । मालिकेन यथा मुक्ता तथाख्यदखिलां कथाम् ॥ १०३ ॥
मालिकादपि किं हीनसत्वोऽहमिति चिन्तयन् । मुमोच तां राक्षसोऽपि प्रणम्य स्वामिनीमिव ॥ १०४ ॥
पश्यतां वर्त्म चोराणां सन्निधानमुपेत्य सा । जगाद भ्रातरः सर्वैः सर्वस्वं गृह्यतां मम ॥ १०५ ॥
मालिकेन यथा मुक्ता यथा मुक्ता च रक्षसा । तत् साख्यदखिलं तेऽपि तदाकर्ण्यैवमूचिरे ॥ १०६ ॥
न वयं हीनसत्वाः स्मो मालिकात्कौणपा[3]दपि । तगच्छ भद्रे भद्रं ते वन्दितासि भगिन्यसि ॥ १०७ ॥
गत्वाचख्यौ च सा स्वस्मै वराय वरवर्णिनी । चौरराक्षसमालाकृत्कथामवितथां[4] तथा ॥ १०८ ॥
विभावरीं तामखिलां भुक्तभोगस्तया सह । सर्वस्वस्वामिनीं चक्रे तां पतिस्तपनोदये[5] ॥ १०९ ॥
विचार्य तद्ब्रूत जनाः कः स्याद्दुष्करकारकः । किं पतिस्तस्कराः किं वा किं रक्षो मालिकोऽथ किम् ११०
तत्र चेर्ष्यालवः प्रोचुः पतिर्दुष्करकारकः । नवोढाऽनंगलग्नापि[6] येन प्रैष्यन्यपुंस्कृते ॥ १११ ॥

---

१ सत्यकथनात् । २ सिंहेन । ३ कुणपं शव भक्ष्यत्वेनास्त्यस्येति तथा राक्षस इति यावत् । ४ सत्याम् । ५ सूर्योदये । ६ कामलग्नापि, स्वमंगमलग्नापि वा ।

अग्निमग्निकुमाराश्च चितामध्ये विचक्रिरे । तद्दीपनं विचक्रुश्च वायुं वायुकुमारकाः ॥ २६४ ॥
गन्धधूपान् घृतमधुकुंभांश्च शतशोऽपरे । ज्वलन्त्यां तत्र चित्यायां चिक्षिपुस्त्रिदिवौकसः ॥ २६५ ॥
मांसादिषु प्रदग्धेषु क्षीरोदादाहृतैर्जलैः । चितां विध्यापयामासुर्झगिति स्तनितामराः ॥ २६६ ॥
शक्रेशानावूर्ध्वदंष्ट्रे दक्षिणादक्षिणे ततः । अधोदंष्ट्रे तु चमरबली जगृहतुः प्रभोः ॥ २६७ ॥
इन्द्रास्त्वन्ये सुराश्चान्यान्दन्तानस्थीनि च प्रभोः । जगृहुस्तच्चिताभस्म नरास्तु शिवकांक्षिणः ॥ २६८ ॥
तस्याश्चितायाः स्थानेऽथ स्थानं कल्याणसंपदाम् । अमरा रचयामासुः स्तूपं रत्नमयं परम् ॥ २६९ ॥
निर्वाणमहमेवं ते कृत्वा भर्तुः सुरा ययुः । नन्दीश्वरे विदधुश्चाष्टाह्निकां शाश्वतार्हताम् ॥ २७० ॥
गत्वा स्वैः स्वविमानान्तर्माणवस्तंभमूर्धसु । वृत्तवज्रसमुद्गेषु स्वामिदंष्ट्रा न्यधुः सुराः ॥ २७१ ॥
गार्हस्थ्ये त्रिंशदब्दी द्विचत्वारिंशत्समी व्रते । इति द्वासप्ततिवर्षाण्यायुर्वीरप्रभोरभूत् ॥ २७२ ॥
श्रीपार्श्वनाथनिर्वाणात् सार्धे वर्षशतद्वये । गते श्रीवीरनाथस्य निर्वाणं समजायत ॥ २७३ ॥
इतश्च देवशर्माणं बोधयित्वा निवृत्तवान् । शुश्राव गौतमः स्वामिनिर्वाणं सुरवार्तया ॥ २७४ ॥
गौतमस्वाम्यथोत्ताम्यंश्चिन्तयामास चेतसि । एकस्याह्नः कृते भर्त्रा किमहं प्रेषितोऽस्मि हा ॥ २७५ ॥
जगन्नाथमियत्कालं सेवित्वान्ते न दृष्टवान् । अधन्यः सर्वथास्म्येष धन्यास्ते तत्र ये स्थिताः ॥ २७६ ॥
गौतम त्वं वज्रमयो वज्रादप्यधिकोऽसि वा । श्रुत्वापि स्वामिनिर्वाणं शतधा यन्न दीर्यसे ॥ २७७ ॥

---

१ क्षीरसमुद्रात् । २ मेघकुमाराः । ३ दक्षिणा चादक्षिणा वामा च तथा ते । ४ निर्वाणमहोत्सवम् । ५ स्वर्गम् । ६ द्विचत्वारिंशतः समाना वर्षाणा समाहार इति द्विगुः ।

दुर्भिक्षे समुपस्थिते प्रलयवल्लीमत्वभाज्यन्यदा भीतं न्यस्य महर्षिसंघमभितो विद्यावदातः पटे ।
योऽभ्युद्धृत्य करांबुजेन नभसा पुर्यामनैषीन्महापुर्यां मंक्षु सुभिक्षधामनि तपोधाम्नामसीम्नां[1] निधिः ॥७॥
तस्माद्वज्राभिधा शाखाभूत् कोटिकगणद्रुमे । उच्चनागरिकामुख्यशाखात्रितयसोदरा[2] ॥ ८ ॥
तस्यां च वज्रशाखायां निलीनमुनिषट्पदः[3] । पुष्पगुच्छायितो गच्छश्चन्द्र इत्याख्ययाभवत् ॥ ९ ॥
धर्मध्यानसुधासुधांशुरमलग्रन्थार्थरत्नाकरो भव्यांभोरुहभास्करः स्मरकरिप्रोन्माथकण्ठीरवः[4] ।
गच्छे तत्र बभूव संयमधनः कारुण्यराशिर्यशोभद्रः सूरिरपूरि येन भुवनं शुभ्रैर्यशोभिर्निजैः ॥ १० ॥
श्रीमन्नेमिजिनेन्द्रपावितशिरस्यद्रौ स संलेखनां कृत्वादौ प्रतिपन्नवाननशनं प्रान्ते शुभध्यानभाक् ।
तिष्ठन् शान्तमनास्त्रयोदश दिनान्याश्चर्यमुत्पादयन्नुच्चैः पूर्वमहर्षिसंयमकथाः सत्यापयामासिवान् ॥११॥
श्रीमान्प्रद्युम्नसूरिः समजनि जनितानेकभव्यप्रबोधस्तच्छिष्यो विश्वविश्वप्रथितगुणगणः प्रावृडम्भोदवद्यः[5] ।
प्रीणाति स्माखिलक्ष्मां प्रवचनजलधेरुद्धृतैरर्थनीरैरातत्य स्थानकानि[6] श्रुतिविषयसुधासारसद्ग्रंथि विष्वक् १२
सर्वग्रन्थरहस्यरत्नमुकुरः कल्याणवल्लीतरुः कारुण्यामृतसागरः प्रवचनव्योमांगणाहस्करः ।
चारित्रादिकरत्नरोहणगिरिः क्ष्मां पावयन् धर्मराट् सेनानीर्गुणसेनसूरिरभवच्छिष्यस्तदीयस्ततः ॥ १३ ॥
शिष्यस्तस्य च तीर्थमेकमवनेः पावित्र्यकृज्जंगमं स्याद्वादत्रिदशापगाहिमगिरिर्विश्वप्रबोधार्यमा ।

---

१ सीमारहितानां तपोधाम्नां निधिर्यो वज्रसूरिरित्यन्वयः। २ उच्चनागरिका मुखादि यस्य तत् च तच्छाखात्रितयं च तस्य सोदरा चतुर्थी शाखेति यावत्। ३ निलीना मुनय एव भ्रमरा यस्मिन्सः। ४ कठीरवः सिंहः। ५ यः वर्षाकालमेघवदर्थनीरैः सकलपृथ्वीं प्रीणाति स्म। ६ विंशतिस्थानकानि आतत्य विस्तृत्य।

अन्यस्मिन्नह्नि समवसृतं श्रीज्ञातनन्दनम् । नन्तुं गजघटा[1]घंटाटंकारैः पूरयन् दिशः ॥ १२७ ॥
वार्तयद्भिरिव मिथो हेषा[2]व्याजेन वाजिभिः[3] । निरुन्धानोऽवनितलं वाह्याली[4]रंगनर्तकैः ॥ १२८ ॥
अम्बरादवतरन्मेघमंडलश्रीविडंबकैः । शोभमानचमूलोको मायूरातपवारणैः[5] ॥ १२९ ॥
वाहनस्य तुरंगस्य नृत्यतः स्पर्धया ध्रुवम् । प्रनृत्यद्भलतासंकः सहोभत इवासने ॥ १३० ॥
राकानिशाकरस्पर्द्धिधवलातपवारणः । जह्ववीयमुनाकल्पवारस्त्रीधुतचामरः ॥ १३१ ॥
वैतालिकैः स्तूयमानः स्वर्णालंकारबन्धुरैः । भूमिष्ठ इव सुत्रामा[6] जगाम मगधाधिपः ॥ १३२ ॥
॥ षड्भिः कुलकम् ॥
तदा च वर्त्मन्येकाभूजातमात्रोज्झितार्भिका । पूत्यादिभ्यो[7]ऽपि दुर्गन्धा नरकांश इवागतः ॥ १३३ ॥
तद्गन्धं घ्रातुमसहाः सर्वे घ्राणमपूपुरन् । प्राणायामकृतः[8] सायं गायत्रीजापका इव ॥ १३४ ॥
किमेतदिति पृष्टश्च श्रेणिकेन परिछदः । कथयामास दुर्गन्धां जातमात्रोज्झितां च ताम् ॥ १३५ ॥
राजाप्यर्हन्मुखान्नित्यं श्रुतद्वादशभावनः । अजुगुप्सापरो बालां तां निरीक्ष्य ययौ स्वयम् ॥ १३६ ॥
गत्वा समवसरणे वन्दित्वा परमेश्वरम् । दुर्गन्धाया कथां तस्याः पप्रछ समये नृपः ॥ १३७ ॥
स्वाम्याख्यत्पर्यन्तदेशे शालिग्रामेऽभवद्धनी । धनमित्र इति श्रेष्ठी धनश्रीरिति तत्सुता ॥ १३८ ॥
धनश्रियो विवाहे च प्रारब्धे श्रेष्ठिनान्यदा । विहरन्तः समाजग्मुर्ग्रीष्मतौ केऽपि साधवः ॥ १३९ ॥

---

१ गजसमूहस्य घटाना नादैः । २ हेषा अश्वस्य शब्दः । ३ अश्वैः । ४ वाह्यालयेव रगस्थानं तस्मिन्नर्तकैः । ५ मयूरपिच्छच्छत्रैः । ६ इन्द्रः । ७ दुर्गन्धादिभ्यः । ८ प्राणायामकारकाः ।

अन्यदा नगरे कौमुद्युत्सवोऽभून्मनोरमः । शृंगाररससर्वस्वनाटिकासुखसन्निभः ॥ १५५ ॥
कुमार[1]युवतिर्मात्रा सहोत्सवदिदृक्षया । [2]युवलोचनसारंगवागुरा सा समाययौ ॥ १५६ ॥
शुचि[3]संव्यानसंवीतसर्वांगौ श्रेणिकाभयौ । वि[4]वाहप्रस्थितवराविव तत्र समेयतुः ॥ १५७ ॥
महत्युत्सवसंमर्दे श्रेणिकस्य करोऽलगत् । आभीरीदुहितुस्तस्या हृद्युन्नतकुचस्थले ॥ १५८ ॥
राजा जातानुरागो द्राक् तस्या निवसनाञ्चले । निजां बबन्ध सम्भोगसत्यंकारमिवोर्मिकाम् ॥ १५९ ॥
अभयं चादिशन्नाममुद्रा मे व्यग्रचेतसः । केनाप्यहारि तद्बोध्यस्त्वया तदपहारकः ॥ १६० ॥
रुरोध धीमतां धुर्यो रंगद्वाराण्यथाभयः । लोकानेकैकमारेभे क्रष्टुं शारीरिवा[5]क्षिकः ॥ १६१ ॥
सर्वेषामपि वस्त्राणि केशपाशान् मुखानि च । अभयः शोधयामास धि[6]षणाधनशेवधिः ॥ १६२ ॥
आभीरीपुत्रिकायाश्च तस्या वस्त्रादि शोधयन् । स ददर्शाञ्चले बद्धां नृपनामांकितोर्मिकाम् ॥ १६३ ॥
तामपृच्छच्च जगृहे त्वयेयं कथमूर्मिका । कर्णौ पिधाय साप्यूचे न जाने किंचिदप्यदः ॥ १६४ ॥
तां च रूपवतीं दृष्ट्वा स दध्यौ धीमतां वरः । नूनं तातोऽनुरक्तोऽस्यामाभीरीदुहितर्यभूत् ॥ १६५ ॥
अस्याः संग्रहणविधावभिज्ञानं निजोर्मिकाम् । राजा रागपरवशो बबन्ध नियतं स्वयम् ॥ १६६ ॥
अभयश्चिन्तयन्नेवं तां निन्ये राजसन्निधौ । राजाप्यपृच्छत् किं प्राप्तो य[7]शस्कर स तस्करः ॥ १६७ ॥

---

१ कुमारी चासौ युवतिः यद्वा कु ईषत् मार. कामो यस्याः सा चासौ युवतिश्च । २ यूना यानि लोचनानि तान्येव सारंगा मृगास्तद्बन्धने वागुरा । ३ संव्यानं वस्त्रम् । ४ विवाहार्थं चलितौ वरौ । ५ आक्षिको द्यूतकारः शारी इव, शारिः भाषाया "सोगठु" इति ख्यातम् । ६ धिषणा बुद्धिरेव धनं तस्य शेवधिर्निधिः । ७ हे यशस्विन् ।

मंत्रिणा चोपनीतानि प्राभृतान्याददे नृपः । सौवर्च[1]लानिवपत्रकम्बलादीन्यनेकशः ॥ १८३ ॥
महत्या प्रतिपत्त्या तं संभाव्यार्द्रकभूपतिः । प्रपच्छ कच्चित्कुशलं मद्बन्धोर्मगधेशितुः ॥ १८४ ॥
स्वस्वामिकुशलोदन्तैः सान्द्रैश्चन्द्रातपैरिव । तन्मनःकुमुदानन्दं सचिवेन्दुरदत्त सः ॥ १८५ ॥
पप्रच्छार्द्रककुमारस्तात को मगधाधिपः । तव येनेदृशी प्रीतिर्म[2]धुनेव मनोभुवः ॥ १८६ ॥
राजा प्रोवाच राजास्ति श्रेणिको मगधाधिपः । पारंपर्यागता मैत्री तत्कुले मत्कुलेऽपि च ॥ १८७ ॥
द्रागार्द्रककुमारोऽपि प्रोन्मीलत्प्रेमकन्दलः । दृशा सुधातरंगिण्या पश्यन्मंत्रिणमब्रवीत् ॥ १८८ ॥
किमनूनगुणः सूनुस्त्वत्प्रभोरस्ति कश्चन । अमात्य कर्तुमिच्छामि तं सम्भा[3]जनभाजनम् ॥ १८९ ॥
मंत्र्यूचेऽस्ति धियां धाम पञ्चमंत्रिशताधिपः । वदान्योऽनन्यसामान्यकरुणारससागरः ॥ १९० ॥
दक्षः कृतज्ञः सकलकलाजलधिपारगः । अभयो नाम तनयः श्रेणिकस्य महीपतेः ॥ १९१ ॥
॥ युग्मम् ॥
बुद्धिविक्रमसंपन्नं धर्मज्ञं भयवर्जितम् । अभयं विश्वविदितं न जानासि कुमार किम् ॥ १९२ ॥
गुणा न केऽपि ते सन्ति येऽभये न कृता[4]स्पदाः । जीवाकारा इवांभोधौ स्वयंभूरमणाभिधे ॥ १९३ ॥
आर्द्रकेशोऽपि पुत्रं स्वमभये सौहृदार्थिनम् । ऊचे मन्मार्गसंलग्नः कुलीनो नन्दनोऽसि मे ॥ १९४ ॥
द्वयोः समानगुणयोः समानकुलसंपदोः । विवाहसम्बन्ध इव युज्यते वत्स सौहृदम् ॥ १९५ ॥

१ सौवर्चलं क्षारविशेषः भाषाया "सचल" इति ख्यातम् । २ वसन्तेन सह कामस्येव । ३ प्रीतिभाषणपात्रम् । ४ कृतमास्पदं स्थान यैस्ते ।

दत्वा च तालकं द्वारे ततः श्रेणिकराजसूः । मंजूषां मुद्रयामास मुद्रया निजया स्वयम् ॥ २११ ॥
आर्द्रकेशपुमांसं तं प्रभूतैः प्राभृतैः सह । विससर्ज प्रियालापपूर्वकं मगधाधिपः ॥ २१२ ॥
अभयोऽपि हि तां पेटां तस्य हस्ते समर्पयन् । तमुवाचेति सत्कृत्य वाचा पीयूषसारया ॥ २१३ ॥
एषार्द्रककुमारस्य पुरः पेटोपढौक्यताम् । मदीयं तस्य मद्बन्धोर्वाच्यमेतच्च वाचिकम् ॥ २१४ ॥
रहस्येकाकिना भूत्वोन्मुद्र्य पेटामिमां स्वयम् । तदन्तर्वस्तु संप्रेक्ष्यं दर्शनीयं न कस्यचित् ॥ २१५ ॥
इति[2] कर्तव्यमित्युक्त्वा स पुमान् स्वपुरं ययौ । उपायनान्यार्पयच्च स्वस्वामिस्वामिपुत्रयोः ॥ २१६ ॥
तच्चार्द्रककुमारायाचख्यावभयवाचिकम् । ततो रहसि स स्थित्वा तां पेटामुद्घाटयत् ॥ २१७ ॥
ददर्श च तदन्तःस्थां तमस्युद्योतकारिणीम् । तामादिनाथप्रतिमां ज्योतिर्भि[3]र्घटितामिव ॥ २१८ ॥
दध्यौ च किमिदं किंचिदंगाभरणमुत्तमम् । किमारोप्यं मूर्ध्नि कंठे हृदयेऽन्यत्र वा क्वचित् ॥ २१९ ॥
दृष्टपूर्वमिवेदं मे क्वापीति प्रतिभासते । न तु स्मृतिपथं याति मन्दाभ्यासस्य शास्त्रवत् ॥ २२० ॥
इत्यार्द्रककुमारस्य भृशं चिन्तयतः सतः । मूर्छा जातिस्मृतिजनन्यजनिष्ट गरीयसी ॥ २२१ ॥
उत्पन्नजातिस्मरणः स्वयमेवाप्तचेतनः । स एवं चिन्तयामास पूर्वजन्मकथां निजाम् ॥ २२२ ॥
इतो भवात्तृतीयस्मिन् भवे मगधनीवृति[4] । कुटुम्बी वसन्तपुरेऽभूवं सामायिकाभिधः ॥ २२३ ॥
भार्या बन्धुमती मेऽभूदश्रौषं च तया सह । यथावदार्हतं धर्मं सुस्थिताचार्यसन्निधौ ॥ २२४ ॥
धर्मं श्रुत्वा सभार्योऽपि प्रतिबुद्धस्तदन्तिके । गृहवासविरक्तोऽहं परिव्रज्यामुपात्तवान् ॥ २२५ ॥

---

१ पेटाम् । २ इति मया कर्तव्यमित्युक्त्वा । ३ तेजोभिः । ४ मगधदेशे ।

पत्तने चाहमेकस्मिन् गुरुणा विहरन्नगाम् । बन्धुमत्यपि तत्रागात् संयताजनमध्यगा[1] ॥ २२६ ॥
एकस्मिन्नह्नि तां पश्यन् स्मरन् पूर्वरतान्यहम्[2] । अनुरक्तोऽभवं तस्यां तदाख्यं चान्यसाधवे ॥ २२७ ॥
सोऽप्याचख्यौ प्रवर्तिन्यै बन्धुमत्यै च सा पुनः । प्रवर्तिनी च प्रोवाच विषण्णा बन्धुमत्यदः ॥ २२८ ॥
गीतार्थोऽप्येष मर्यादां लंघेत यदि का गतिः । मर्यादां पालयन्नब्धिरपि पृथ्वीं न लुंपति ॥ २२९ ॥
देशान्तरमपि गतां यावच्छ्रोष्यति मामसौ । तावन्महानुभावश्च मयि रागं न हास्यति ॥ २३० ॥
तस्मादहं भगवति पपत्स्ये मरणं खलु । न चास्य नापि मे शीलखंडनं जायते यथा ॥ २३१ ॥
इति सानशनं कृत्वा स्वमुद्बध्य च लीलया । निष्ठ्यूतवज्राहौ प्राणान् देवभूयमियाय च ॥ २३२ ॥
तथा मृतां च तां श्रुत्वा मयाप्येतद्विचिन्तितम् । महानुभावा मृता सा व्रतभंगभयात् खलु ॥ २३३ ॥
भग्नव्रतः पुनरहं तदलं जीवितेन मे । कृत्वेत्यनशनमहं विपद्य त्रिदशोऽभवम् ॥ २३४ ॥
ततश्च्युत्वाहमुत्पन्नोऽस्म्यनार्यो धर्मवर्जितः । प्रतिबोधयिता यो मां स बन्धुः स गुरुश्च मे ॥ २३५ ॥
भाग्योदयेन केनापि बोधितोऽभयमंत्रिणा । अद्यापि मन्दभाग्योऽस्मि तं द्रष्टुं यदनीश्वरः ॥ २३६ ॥
तदनुज्ञाप्य पितरमननुज्ञाप्य वाप्यहम् । आर्यदेशं गमिष्यामि यत्र मेऽस्त्यभयो गुरुः ॥ २३७ ॥
इत्थं मनोरथं कुर्वन् प्रतिमामादिमार्हतः[3] । पूजयन्नार्द्रकासूनुर्व्यतियाति स्म वासरान् ॥ २३८ ॥
अन्येद्युरार्द्रकासूनुर्नृपमेवं व्यजिज्ञपत् । ताताभयकुमारेण सममिच्छामि दर्शनम् ॥ २३९ ॥
अवादीदार्द्रकेशोऽपि न गन्तव्यं खलु त्वया । वत्स स्थानस्थितानां हि सौहृदं श्रेणिकेन नः ॥ २४० ॥

१ साध्वीजनमध्यवर्तिनी । २ प्रथमक्रीडितानि । ३ आदिमस्य प्रथमस्यार्हतः ।

पित्राज्ञया निबद्धश्चोत्कंठितश्चाभयं प्रति । ततश्चार्द्रककुमारो न तस्थौ न जगाम च ॥ २४१ ॥
वर्षन्नश्रान्तमस्रांभः[1] स भाद्रपदमेघवत् । अभयोत्कंठितस्तस्थावनुत्तानविलोचनः[2] ॥ २४२ ॥
आसने शयने याने भोजनेऽन्यक्रियास्वपि । अभयालंकृतामाशां[3] दृशोरग्रे चकार सः ॥ २४३ ॥
पारापत इवोड्डीय यियासुरभयान्तिके । न ह्यार्द्रककुमारोऽगाद्रतिं रोर इवामयवान्[4] ॥ २४४ ॥
कीदृशो मगधो देशः कीदृग्राजगृहं पुरम् । कस्कोऽध्वा तत्र गमनेऽपृच्छदेवं च पार्श्वगान् ॥ २४५ ॥
दध्यावार्द्रकराजोऽपि कुमारो मम निश्चितम् । यास्यत्यकथयित्वैव कदाप्यभयसन्निधौ ॥ २४६ ॥
ततश्च पञ्च सामन्तशतान्यादिशदार्द्रकः । यदार्द्रककुमारोऽयं रक्ष्यो देशान्तरं व्रजन् ॥ २४७ ॥
देहच्छायेव तत्पार्श्वं सामन्तास्तेऽत्यजन्न हि । बन्दे धृतमिवात्मानं कुमारोऽपि ह्यमंस्त सः ॥ २४८ ॥
आर्द्रकिर्हृदये कृत्वाभयोपगमनं सुधीः । प्रत्यहं कर्तुमारेभे वाह्याल्यां वाहवाहनम्[5] ॥ २४९ ॥
अश्वारूढाश्च पार्श्वेऽस्थुः सामंतास्तेऽङ्गरक्षकाः । कुमारो वाहयन्नश्वं किञ्चिद्गत्वा न्यवर्तत ॥ २५० ॥
एवं च वाहयन्नश्वं स ययावधिकाधिकम् । पुनश्च व्याघुट्यायचौ ते च तस्य विशश्वसुः ॥ २५१ ॥
आर्द्रकासूनुरन्येद्युः पुंभिः प्रत्ययितैर्निजैः[6] । प्रगुणं[7] कारयामास यानपात्रं पयोनिधौ ॥ २५२ ॥
रत्नैश्च पूरयामास यानपात्रं तदार्द्रकिः । अग्रेऽप्यारोहयामास तत्रार्हत्प्रतिमां च ताम् ॥ २५३ ॥
तदैव वाहयन्नश्वमदृशीभूय पूर्ववत् । तत्रारुह्य प्रवहणे स ययावार्यनीवृतम् ॥ २५४ ॥
यानादुत्तीर्य संप्रेष्य प्रतिमामभयाय ताम् । सप्तक्षेत्र्यां धनान्युप्त्वा यतिलिंगमुपाददे ॥ २५५ ॥

१ अश्रुजलम् । २ अवनतलोचनः । ३ आशां दिशाम् । ४ रोगवान् । ५ अश्वक्रीडाम् । ६ विश्वस्तैः । ७ सज्जम् ।

उच्चारयितुमारेभे यावत्सामायिकं च सः । आकाशस्थितया तावदूचे देवतयोच्चकैः ॥ २५६ ॥
महासत्वो यद्यपि त्वं गृहीदीक्षां तथापि मा । अद्यापि ते भोगफलं कर्मास्त्यागमयस्व तत् ॥ २५७ ॥
भुक्त्वा भोगफलं कर्माददीथाः समये व्रतम् । अवश्यमेव भोक्तव्यं भोग्यं तीर्थकृतामपि ॥ २५८ ॥
महात्मंस्तद्व्रतेनालं यदात्तमपि हास्यते[1] । भोजनेनापि किं तेन यद्भुक्तमपि वम्यते ॥ २५९ ॥
अथार्द्रककुमारोऽपि स्वमूरीकृत्य पौरुषम् । दैवीं वाचमनादृत्य प्रव्रज्यां स्वयमाददे ॥ २६० ॥
प्रत्येकबुद्धः स मुनिर्निशितं पालयन् व्रतम् । विहरन्नन्यदा प्राप वसन्तपुरपत्तनम् ॥ २६१ ॥
बाह्यदेवकुले क्वापि तस्थौ प्रतिमया च सः । सर्वाधिपरिहारेण समाधिमधिजग्मिवान् ॥ २६२ ॥
इतश्च तस्मिन्नगरे वरश्रेष्ठी महाकुलः । देवदत्तोऽभवत्तस्य पत्नी धनवती पुनः ॥ २५३ ॥
स तु बन्धुमतीजीवश्च्युत्वाजनि सुता तयोः । सुरूपा श्रीमती नाम श्रीमतीनां[2] शिरोमणिः ॥ २६४ ॥
धात्रीभिर्लाल्यमाना च मालतीपुष्पदामवत् । पांशुक्रीडोचितां[3] प्राप वयोऽवस्थां क्रमेण सा ॥ २६५ ॥
तत्र देवकुलेऽन्येद्युः पौरबालाभिरन्विता । श्रीमती पतिरमणक्रीडया रन्तुमाययौ ॥ २६६ ॥
भर्तारं वृणुतेत्यूचुस्तत्र सर्वाश्च बालिकाः । कयापि कोऽपि सर्वाभिर्वराः स्वरुचि वव्रिरे ॥ २६७ ॥
श्रीमत्युवाच सख्यो[4]ऽसौ वृतो भट्टारको मया । साधु वृतं साधु वृतमिति चोवाच देवता ॥ २६८ ॥
तन्वाना गर्जितं रत्नान्यवर्षत् सा च देवता । श्रीमती गर्जिभीता तु तस्य पादेऽलगन्मुनेः ॥ २६९ ॥
सोऽचिन्तयत् क्षणं स्थित्वा मम्माभूदिह तस्थुषः । उपसर्गोऽनुकूलोऽयं व्रतद्रुममहा[5]निलः ॥ २७० ॥

१ त्यक्ष्यते । २ लक्ष्मीमतीनाम् । ३ धूलिक्रीडायोग्याम् । ४ हे सख्यः । ५ अनिलो वायु. ।

इति ध्यात्वान्यतः सोऽगान्महर्षीणां हि कुत्रचित् । आस्थान्यत्रापि न प्रायः सापायेषु[1] तु का कथा २९१
तामादातुं रत्नवृष्टिमाजगाम महीपतिः । अस्वामिकं धनं राज्ञोऽर्हतीति कृतनिश्चयः ॥ २९२ ॥
तद्द्रव्यं संजिघृक्षन्तो[2] ददृशू राजपूरुषाः । नागलोकद्वारमिव स्थानं तन्नागसंकुलम् ॥ २९३ ॥
ऊचे च देवतामुष्यै दत्तं वरणके[3] मया । द्रव्यमेतदिति श्रुत्वा विलक्षोऽपासरन्नृपः ॥ २९४ ॥
ततश्च तद्धनं सर्वमाददे श्रीमतीपिता । स्थानं ययुश्च सर्वे स्वं तदा सायमिवाण्डजाः ॥ २९५ ॥
अथोद्वोढुमढौकन्त श्रीमतीं बहवो वराः । वरं वृणिष्वेति पित्रोक्ता जगाद श्रीमती त्वदः ॥ २९६ ॥
वृतो मया यो महर्षिर्वरस्तात स एव मे । मम तद्वरणेऽदाच्च द्रव्यं तद्गृह्यदेवता ॥ २९७ ॥
स्वरुच्यापि मया तावन्महर्षिः स वृतो वरः । तद्द्रव्यमाददानेन त्वयाप्यनुमतं हि तत् ॥ २९८ ॥
तत्तस्मै कल्पयित्वा मां नान्यस्मै दातुमर्हसि । किं न श्रुतं त्वया तात बाला अपि वदन्त्यदः ॥ २९९ ॥
सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति साधवः । सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत् सकृत् ॥३००॥
श्रेष्ठ्यूचे स कथं प्राप्यो न ह्येकत्रावतिष्ठते । अलीव[4] पुष्पं संस्थानमातिष्ठति नवं नवम् ॥ ३०१ ॥
स किमायास्यति नो वायातोऽपि ज्ञास्यते कथम् । किं नाम तस्याभिज्ञानं कति नायान्ति भिक्षवः ३०२
श्रीमत्यूचे मया तात तदा गर्जितभीतया । दृष्टं तदंघ्रौ लक्ष्मास्ति वानर्येव विलग्नया ॥ ३०३ ॥
तस्मादतः परं तात तथा कुरु यथाखिलान् । यातायातपरान् साधून् पश्यामि प्रतिवासरम् ॥ ३०४ ॥
श्रेष्ठ्यब्रवीदिहायान्ति ये केचिदिह पत्तने । भिक्षां देहि स्वयं तेभ्यो महर्षिभ्यो दिने दिने ॥ ३०५ ॥

---

१ उपद्रवसहितेषु । २ संगृहीतुमिच्छन्तः । ३ विवाहे । ४ भ्रमर इव ।

बालकोऽप्यवदद्बाल्याद[1]क्षरैर्लल्लमन्मनैः । बद्धाहं धारयिष्यामि कथं यास्यति मे पिता ॥२००॥
इत्युक्त्वा तर्कुसूत्रेण लालयेवोर्णनाभकः । अवेष्टयत् पितुः पादौ स मुग्धमधुराननः ॥ २०१ ॥
उवाच चाम्ब मा भैषीः स्वस्था भव मया ह्यसौ । बद्धपादो द्विप इवेशीत यातुं कथं पिता ॥ २०२ ॥
श्रीमतीपतिरप्येवमचिन्तयदहो शिशोः । स्नेहानुबन्धः कोऽप्येष मन्मनः[2]पक्षिपाशयभूत् ॥ २०३ ॥
तन्मदंघ्र्योः कृताः सन्ति यावन्तः सूत्रवेष्टकाः । तावन्त्यब्दानि स्थास्यामि पुत्रप्रेम्णा गृहस्थताम् २०४
पादयोस्तन्तुबन्धाश्च ग[3]णिता द्वादशाभवन् । गार्हस्थ्ये द्वादशाब्दानि ततः सोऽप्यत्यवाहयत् ॥ २०५ ॥
सं[4]धावधौ च संपूर्णे वैराग्येणोररीकृतः । यामिन्याः पश्चिमे यामे स सुधीरित्यचिन्तयत् ॥ २०६ ॥
संसारकूपान्निर्गन्तुं व्रतमालंब्य रज्जुवत् । मया प्राप्तं च मुक्तं च लग्नस्तत्र[5]ास्म्यहं पुनः ॥ २०७ ॥
मनसैव व्रतं भग्नं प्राग्जन्मनि तथाप्यहम् । अनार्यत्वं प्रपन्नोऽस्मि का गतिः स्यादतः परम् ॥ २०८ ॥
भवत्विदानीमप्यात्तपरिव्रज्यस्तपोऽग्निना । अग्निशौचांशुकमिवात्मानं प्रक्षालयाम्यहम् ॥ २०९ ॥
प्रातश्च श्रीमतीं पत्नीं स संभाष्यानुमान्य च । यतिलिंगमुपादाय निर्ममो निर्ययौ गृहात् ॥ २१० ॥
स प्रस्थितो राजगृहमन्तराले ददर्श ताम् । स्वां सामन्तपञ्चशतीं चौर्यवृत्तिपरायणाम् ॥ २११ ॥
उपलक्ष्य स तैर्भक्त्या ववन्दे सोऽब्रवच्च तान् । किमेषा जीविका पापहेतुर्युष्माभिराहता ॥ २१२ ॥
तेऽवोचन् वञ्चयित्वास्मान् पलायिष्ठा यदा प्रभो । दर्शयामः स्म न तदात्मानं भूमिपतेर्ह्रिया ॥ २१३ ॥

---

१ अस्पष्टमधुरैः । २ मम मन एव पक्षी तस्य पाशसदृशोऽभूत् । ३ गणिताः सन्तो द्वादश जाताः । ४ प्रतिज्ञाया अवधौ पूर्णे सति । ५ ससारकूपे ।

तथाहि खात्[1] पतत्यंभो भूखातादपि[2] तद्भवेत् । बलीयसी हि नियतिर्नियतेरपि पौरुषम् ॥ ३२८ ॥
एवं निरुत्तरीचक्रे गोशालं स महामुनिः । तुष्टुवे खेचराद्यैश्च कुर्वद्भिर्जयमंगलम् ॥ ३२९ ॥
आर्द्रकर्षिर्ययौ हस्तितापसानामथाश्रमम् । उच्छानाया[3]तपक्षिप्तहस्तिमांसाकुलोटजम् ॥ ३३० ॥
तत्रस्थास्तापसाश्चैकं सुमहान्तं मतंगजम् । हत्वा तन्मांसमश्नन्तो ते निन्युर्दिवसान् बहून् ॥ ३३१ ॥
ते चैवमूचुर्हन्तव्यो वरमेको मतंगजः । यस्यैकस्यापि मांसेन भूयान् कालोऽतिगम्यते ॥ ३३२ ॥
मृगतित्तिरमत्स्याद्यैर्वान्यैर्वा बहुभिश्च किम् । तैरप्याहार एवार्थः पापं तत्रातिरिच्यते ॥ ३३३ ॥
तदा च ते दयाभासधर्मनिष्ठास्तपस्विनः । बबन्धुर्मारणायैकं महाकायं मतंगजम् ॥ ३३४ ॥
स भारशृंखलाबद्धो यत्र चासीन्मतंगजः । तेनाध्वना स जगाम महर्षिः करुणार्द्रधीः ॥ ३३५ ॥
स च हस्ती महर्षिं तं मुनिपंचशतीवृतम् । ईक्षामास वन्द्यमानं भूलुठन्मौलिभिर्जनैः ॥ ३३६ ॥
लघुकर्मा करी सोऽपि मुनिं दृष्ट्वेत्यचिन्तयत् । वन्दे यद्यहमप्येनं बद्धस्तत् करवाणि किम् ॥ ३३७ ॥
महर्षिदर्शनात्तस्य गरुत्मद्दर्शनादिव[4] । अयःपाशा[5] व्यशीर्यन्त नागपाशा इवाभितः ॥ ३३८ ॥
निरर्गलः सोथ हस्ती वंदितुं तं महामुनिम् । अभ्यसर्पीज्जनस्तूचे मुनिरेष हतो हतः ॥ ३३९ ॥
पलायाञ्चक्रिरे लोका मुनिस्तस्थौ तथैव सः । इभोऽप्यवनमत्कुंभस्थलः प्रणमति स्म तम् ॥ ३४० ॥
स्पर्शं स्पर्शं च तत्पादौ दाहार्तः कदलीमिव । परमां निर्वृतिं प्राप प्रसारितकरः करी ॥ ३४१ ॥
स हस्ती पुनरुत्थाय भक्तिमन्थरया[6] दृशा । पश्यन्महर्षिं प्राविक्षदरण्यानीमनाकुलः[7] ॥ ३४२ ॥

---

१ आकाशात् । २ पृथ्वीखननात् । ३ शुष्कीकरणाय । ४ गरुडदर्शनात् । ५ लोहपाशाः । ६ भक्त्या मन्थरा निश्चला तया ।
७ महदरण्यमरण्यानी ताम् ।

## ॥ अष्टमः सर्गः ॥

अथ भव्यानुग्रहाय ग्रामाकरपुरादिषु । विहरन् ब्राह्मणकुंडग्रामेऽगात् परमेश्वरः ॥ १ ॥
बहुशालाभिधोद्याने पुरात्तस्माद्बहिःस्थिते । चक्रुः समवसरणं त्रिवप्रं त्रिदशोत्तमाः ॥ २ ॥
न्यषदत्प्राङ्मुखस्तत्र पूर्वसिंहासने प्रभुः । गौतमाद्या यथास्थानं सुराद्याश्चावतस्थिरे ॥ ३ ॥
श्रुत्वा सर्वज्ञमायातं पौरा भूयांस आययुः । देवानन्दार्षभदत्तावेपतुस्तौ च दंपती ॥ ४ ॥
त्रिश्च प्रदक्षिणीकृत्य प्रणम्य च जगद्गुरुम् । श्रद्धावानृषभदत्तो यथास्थानमुपाविशत् ॥ ५ ॥
देवानन्दा प्रभुं नत्वार्षभदत्तस्य पृष्ठतः । शुश्रूषमाणाध्वज्ञाऽस्थादानन्दविकचानना ॥ ६ ॥
स्तनाभ्यां प्राक्षरत्स्तन्यं रोमाञ्चश्चाभवत्तनौ । तदा च देवानन्दायाः पश्यन्त्याः परमेश्वरम् ॥ ७ ॥
तथाविधां च तां प्रेक्ष्य जातसंशयविस्मयः । स्वामिनं गौतमस्वामी पप्रच्छेति कृताञ्जलिः ॥ ८ ॥
उत्प्रस्रवा निर्निमेषदृष्टिर्देववधूरिव । देवानन्दा तवालोकात्सूनोरिव कथं प्रभो ॥ ९ ॥
अथाख्यद्भगवान् वीरो गिरा स्तनितधीरया । देवानां प्रिय भो देवानन्दायाः कुक्षिजोऽस्म्यहम् ॥१०॥
दिवश्च्युतोऽहमुषितः कुक्षावस्या ह्यशीत्यहम् । अज्ञातपरमार्थापि तेनैषा वत्सला मयि ॥ ११ ॥
देवानन्दर्षभदत्तौ मुमुदाते निशम्य तत् । सर्वा विसिष्मिये पर्षत्ताहगश्रुतपूर्विणी ॥ १२ ॥
क्वसूनुस्त्रिजगन्नाथः क्व चावां गृहिमात्रकौ । इत्युत्थाय ववन्दाते दंपती तौ पुनः प्रभुम् ॥ १३ ॥

---

१ निजासनमार्गज्ञा । २ अधिकपयःप्रस्रववती । ३ मेघगर्जितमिव धीरया गभीरया । ४ अशीतिदिनपर्यन्तम् ।

देशनामिति ॥ १४ ॥
पितरौ दुःप्रतीकारावीदृग्धीर्भगवानपि । तावुद्दिश्य जनांश्चापि विदधे देशनामिति ॥ १५ ॥
इयं माता पितैषोऽयं पुत्र इत्यादिको भवे । जायते विघटते च संबन्धः प्राणिनामिह ॥ १६ ॥
इन्द्रजालप्रायमेतत्समस्तमपि संसृतौ । न वस्तुं क्षणमप्यत्र श्रद्दधीत विविक्तधीः ॥ १७ ॥
इदं शरीरं नो यावज्जर्जरीकुरुते जरा । न यावदन्तकः प्राणानाछेत्तुमुपतिष्ठते ॥ १८ ॥
सुखाद्वैतनिधानस्य निर्वाणस्यैकसाधनीम् । तावद्दीक्षामाश्रयध्वं प्रमादोऽत्र न युज्यते ॥ १९ ॥
देवानन्दर्षभदत्तावथ नत्वैवमूचतुः । आवां विरक्तौ संसारवासादस्मादसारतः ॥ २० ॥
देहि जंगमकल्पद्रो दीक्षां संसारतारणीम् । तरीतुं तारयितुं च कोऽपरस्त्वदृते क्षमः ॥ २१ ॥
अस्त्वेतदिति नाथेन प्रोक्तौ तौ धन्यमानिनौ । ईशान्यां दिशि गत्वोज्झांचक्रतुर्भूषणादिकम् ॥ २२ ॥
पञ्चमुष्टिकचोत्पाटं कृत्वा संवेगतस्तु तौ । नाथं प्रदक्षिणीकृत्य वन्दित्वा चैवमूचतुः ॥ २३ ॥
स्वामिञ्जन्मजरामृत्युभीतौ त्वां शरणं श्रितौ । स्वयं दीक्षाप्रदानेन प्रसीदानुगृहाण नौ ॥ २४ ॥
ददौ तयोः स्वयं दीक्षां समाचारं शशंस च । आवश्यकविधिं चाख्यन्निरवद्यमनस्कयोः ॥ २५ ॥
वसन्ति सन्तो यत्राहरपि तत्रोपकारिणः । किं पुनर्भगवान् विश्वकृतज्ञग्रामणीः प्रभुः ॥ २६ ॥
देवानन्दां चन्दनायै स्थविरेभ्यस्त्वथर्षभम् । स्वामी समर्पयामास तौ चापातां परं व्रतम् ॥ २७ ॥
अधीतैकादशांगौ तौ नानाविधतपःपरौ । अवाप्य केवलज्ञानं मृत्वा शिवमुपेयतुः ॥

१ दुःखेन प्रतिक्रियेते प्रत्युपक्रियेते इति तथा । २ ससारे । ३ विविक्ता विवेकवती धीर्यस्य सः । ४ यत्र अहः दिनमपि ।
५ विश्वेषां सर्वेषां कृतज्ञानां ग्रामणीर्मुख्यः ।

भगवान् वर्धमानोऽपि जगदानन्दवर्धनः । विजहार ततो धात्रीं ग्रामाकरपुराकुलाम् ॥ २८ ॥
क्रमाच्च क्षत्रियकुंडग्रामं स्वामी समाययौ । तस्थौ समवसरणे विदधे चाथ देशनाम् ॥ २९ ॥
स्वामिनं समवसृतं नृपतिर्नन्दिवर्धनः । ऋद्ध्या महत्या भक्त्या च तत्रोपेयाय वन्दितुम् ॥ ३० ॥
स त्रिः प्रदक्षिणीकृत्य वन्दित्वा च जगद्गुरुम् । उपाविशद्यथास्थानं भक्तितो रचिताञ्जलिः ॥ ३१ ॥
जमालिर्नाम जामेयो जामाता च प्रभोस्तदा । प्रियदर्शनया सार्धं तत्र वन्दितुमाययौ ॥ ३२ ॥
जमालिर्देशनां श्रुत्वा पितरावनुमान्य च । क्षत्रियाणां पञ्चशत्या सहितो व्रतमाददे ॥ ३३ ॥
जमालिभार्या भगवद्दुहिता प्रियदर्शना । सहिता स्त्रीसहस्रेण प्राव्राजीत् स्वामिनोऽन्तिके ॥ ३४ ॥
ययौ विहर्तुमन्यत्र ततश्च भगवानपि । जमालिरप्यनुचरः सहितः क्षत्रियर्षिभिः ॥ ३५ ॥
एकादशांगीमध्यैष्ट जमालिर्विहरन् क्रमात् । सहप्रव्रजितानां च तमाचार्यं व्यधात्प्रभुः ॥ ३६ ॥
चतुर्थषष्ठाष्टमादीन्यतप्यत तपांसि सः । चन्दनामनुगच्छन्ती सा चापि प्रियदर्शना ॥ ३७ ॥
नाथं जमालिर्नत्वोचेऽन्यदाहं सपरिच्छदः । विहारेणानियतेन प्रयामि त्वदनुज्ञया ॥ ३८ ॥
अनर्थं भाविनं ज्ञात्वा भगवान् ज्ञानचक्षुषा । भूयो भूयः पृच्छतोऽपि जमालेर्नोत्तरं ददौ ॥ ३९ ॥
अनिषिद्धमनुज्ञातं जमालिरिति बुद्धितः । विहर्तुं सपरीवारः प्रभुपार्श्वाद्विनिर्ययौ ॥ ४० ॥
क्रमेण विहरन् प्राप श्रावस्तीं सोऽन्यदा पुरीम् । बहिश्च समवासार्षीत्तुद्याने कोष्टकाभिधे ॥ ४१ ॥
विरसैः शीतलै रुक्षैस्तुच्छैरसमयाशितैः । पानान्नैस्तस्य चान्येद्युस्तत्र पित्तज्वरोऽभवत् ॥ ४२ ॥

१ अकाले भक्षितैः ।

आसीनः सोऽसहः स्थातुं पंकान्तरितकीलवत् । संस्तारको मे क्रियतामित्युवाचा[1]न्तिषन्मुनीन् ॥ ४३ ॥
तेऽपि संस्तारकं कर्तुं प्रारभन्त महर्षयः । शिष्याः कुर्वन्ति गुर्वाज्ञां राजाज्ञामिव सेवकाः ॥ ४४ ॥
पित्तेन पीडितोऽत्यन्तं सोऽपृच्छच्च पुनः पुनः । किं संस्तृतः संस्तरको न वेति ब्रूत साधवः ॥ ४५ ॥
संस्तारकः संस्तृतोऽसावित्यूचुः साधवोऽपि हि । उत्थाय प्रययावार्तो जमालिश्च तदन्तिकम् ॥ ४६ ॥
संस्तरं संस्तीर्यमाणं प्रेक्ष्या[2]क्षमवपुष्टया । निषद्योत्पन्नमिथ्यात्वः क्रुद्धः साधूनदोऽवदत् ॥ ४७ ॥
नो नोश्चिरं वयं भ्रान्तास्तत्त्वं ज्ञातं चिरादिदम् । क्रियमाणं न हि कृतं कृतमेव कृतं खलु ॥ ४८ ॥
संस्तरः संस्तीर्यमाणः संस्तीर्ण इति वर्णितः । यद्भवद्भिरसत्यं तन्न वक्तुं जातु युज्यते ॥ ४९ ॥
उत्पद्यमानमुत्पन्नं क्रियमाणं कृतं च यत् । ब्रूतेऽर्हंस्तन्न घटते प्रत्यक्षेण विरोधतः ॥ ५० ॥
[3]परापरक्षणव्यूहयोगनिष्पद्यमानके । कार्ये कथं कृतमिति प्रारंभेऽपि निगद्यते ॥ ५१ ॥
अर्थक्रियाविधातृत्वं यस्य तस्यैव वस्तुता । पदार्थे प्रथमकालोत्पन्ने त[4]दपि नास्ति हि ॥ ५२ ॥
आद्यारंभे कृतमिति यदि शेषक्षणेषु तत् । कृतस्य करणे नूनमनवस्था प्रसज्यते ॥ ५३ ॥
तद्युक्तिसंगतमिदं कृतमेव कृतं स्फुटम् । न ह्यजातस्य पुत्रस्य नाम केनापि दीयते ॥ ५४ ॥
प्रत्यक्षं प्रतिपद्यध्वं निर्दोषं मुनयस्ततः । न ह्यु[5]क्तमिति गृह्येत युक्तियुक्तं हि गृह्यते ॥ ५५ ॥
सर्वज्ञ इति विख्यातो ना[6]र्हन्मिथ्या वदेदिति । नैवं सोऽपि वदत्येव स्खलनं महतामपि ॥ ५६ ॥

---

१ शिष्यान् मुनीन् । २ असमर्थशरीरत्वेन । ३ परापरक्षणसमूहस्य योगेनोत्पद्यमाने । ४ अर्थक्रियाकर्तृत्वम् । ५ भगवतोक्तमिति मत्वा । ६ अर्हन् मिथ्या न वदेदिति नैव किं तु सोऽपि मिथ्या वदत्येवेति सटंकः ।

एवं विभाषमाणं तं मुक्तमर्यादमुत्क्रुधम् । जमालिमूचुः स्थविरा विपरीतं ब्रवीषि किम् ॥ ५७ ॥
न जल्पन्त्यन्यथार्हन्तो रागद्वेषविवर्जिताः । न प्रत्यक्षविरुद्धादिदोषलेशोऽपि तद्गिराम् ॥ ५८ ॥
यद्याद्ये समये वस्तु निष्पन्नं नोच्यते तदा । समयाविशेषात्तस्योत्पत्तिर्न समयान्तरे ॥ ५९ ॥
अर्थक्रियासाधकत्वं वस्तुनो यच्च लक्षणम् । तदप्यन्यभिचार्येवाभिधाज्ञानोपयोगतः ॥ ६० ॥
तथाहि तादृशं वस्तु लोकैः प्रथमतोऽपि हि । किं करोषीति पृष्टः सन् घटाद्यभिधया वदेत् ॥ ६१ ॥
पूर्वकालकृते यद्वानवस्था करणस्य हि । साप्यलीका नान्यकार्यान्तरसाधनतः खलु ॥ ६२ ॥
छद्मस्थानां त्वादृशानां युक्तायुक्तविवेचनम् । कथं भवेद्युक्तियुक्तं त्वद्वचो येन गृह्यते ॥ ६३ ॥
सर्वज्ञः केवलालोकज्ञातत्रैलोक्यवस्तुकः । प्रमाणं भगवान् वीरो युक्त्ययुक्ती मुधैव ते ॥ ६४ ॥
यदवादीर्जमाले त्वं स्खलनं महतामिति । मत्तस्येव प्रमत्तस्येवोन्मत्तस्येव ते वचः ॥ ६५ ॥
क्रियमाणं कृतमिति साधु सर्वज्ञभाषितम् । न चेत्तद्वचसा राज्यं संत्यज्य प्राव्रजः कथम् ॥ ६६ ॥
अदूष्यं दूषयंस्तस्य वचनं किं न लज्जसे । निमज्जसि भवांभोधौ किमनेन स्वकर्मणा ॥ ६७ ॥
प्रायश्चित्तं गृहाण त्वं श्रीवीरस्वामिनोऽन्तिके । निजं तपो जन्म चेदं मा स्म नैषीर्निरर्थकम् ॥ ६८ ॥
अप्येकाक्षरमात्रं यः श्रद्धात्यर्हतां न हि । प्रपद्यते स मिथ्यात्वं ततो भवपरंपराम् ॥ ६९ ॥
बहुधा स्थविरैरेवं जमालिर्बोधितोऽपि हि । न न्यवर्तिष्ट कुमतान्मौनमेव तु शिश्रिये ॥ ७० ॥
कुमतप्रतिपन्नं तं हित्वा केऽपि तदैव हि । स्थविराः स्वामिनं जग्मुः केऽपि तत्रावतस्थिरे ॥ ७१ ॥

१ अभिधाया ज्ञानस्योपयोगात् ।

मोहेन स्त्रीसुलभेन प्राक् स्नेहेन च शिश्रिये । जमालिपक्षं सपरीवारापि प्रियदर्शना ॥ ७२ ॥
क्रमाज्जमालिरुल्लाघ[1] आत्मानमपरानपि । व्युद्ग्राहयन् कुमतेन तेन च प्रतिवासरम् ॥ ७३ ॥
हसन् जिनेन्द्रवचनं सर्वज्ञोऽहमिति ब्रुवन् । साहंकारः प्रववृते विहर्तुं सपरिच्छदः ॥ ७४ ॥
॥ युग्मम् ॥

सोऽन्येद्युः परिचंपायां पूर्णभद्राभिधे वने । श्रीवीरं समवसृतं गत्वावादीन्मदोद्धुरः ॥ ७५ ॥
छद्मस्था असमुत्पन्नकेवला भगवंस्तव । शिष्या विपन्ना[2] भूयांसस्तादृगस्मि न खल्वहम् ॥ ७६ ॥
अद्यये मे समुत्पन्ने केवलज्ञानदर्शने । सर्वज्ञः सर्वदर्शी चाहमेवार्हन्निह क्षितौ ॥ ७७ ॥
अथोचे गौतमस्त्वं भो जमाले ज्ञानवान् यदि । किं शाश्वतोऽशाश्वतो वा जीवो लोकश्च शंस तत् ७८
तस्य प्रत्युत्तरं मूढो जमालिर्दातुमक्षमः । प्रसारितमुखस्तस्थौ शून्यो वायसपोतवत् ॥ ७९ ॥
अथोचे भगवान् वीरो जमाले विद्धि तत्त्वतः । शाश्वतोऽशाश्वतश्चायं लोको जीवोऽपि लोकवत् ॥८०॥
लोकोऽयं द्रव्यरूपत्वाच्छाश्वतोऽशाश्वतः पुनः । प्रतिक्षणपरिध्वंसिपर्यायापेक्षया खलु ॥ ८१ ॥
जीवोऽपि द्रव्यरूपत्वापेक्षत्वेनैष शाश्वतः । अशाश्वतो नृदेवादिपर्यायान्तरसंभवात् ॥ ८२ ॥
एवमाख्यात्यपि नाथे मिथ्यात्वमथिताशयः । निर्ययौ समवसृतेर्जमालिः सपरिच्छदः ॥ ८३ ॥
ततो जमालिः संघेन निह्नवत्वाद्बहिष्कृतः । स्वामिनः केवलोत्पत्तेस्तदाब्दानि चतुर्दश ॥ ८४ ॥
स्वदर्शनाभिप्रायं स सर्वत्रापि प्ररूपयन् । स्वच्छन्दचारी सर्वज्ञमानी व्यहरतावनिम् ॥ ८५ ॥

१ उल्लाघो नीरोगः । २ मृताः ।

जज्ञे प्रसिद्धिः सर्वत्र यज्जमालिर्जगद्गुरोः । मोहाद्विप्रतिपन्नः सन् मिथ्यात्वं प्रतिपन्नवान् ॥ ८६ ॥
विहरन्नन्यदा सोगाच्छ्रावस्तीं नगरीं पुनः । तस्थावेकत्र चोद्याने परिवारसमावृतः ॥ ८७ ॥
आर्यासहस्रसहिता साप्यार्या प्रियदर्शना । तस्थौ ढंककुलालस्य शालायामृद्धिशालिनः ॥ ८८ ॥
परमश्रावको ढंकस्तां दृष्ट्वा कुमतस्थिताम् । बोधयिष्याम्युपायेन केनापीति व्यचिन्तयत् ॥ ८९ ॥
स भांडान्यन्यदोच्चिन्वन्[1] बुद्धिपूर्वमलक्षितम् । पटे प्रियदर्शनायाश्चिक्षेप हुतभुक्कणम् ॥ ९० ॥
दह्यमानं पटं प्रेक्ष्य बभाषे प्रियदर्शना । भो ढंक त्वत्प्रमादेन पश्य दग्धः पटो मम ॥ ९१ ॥
ढंकोऽप्युवाच मा साध्वि मृषा वादीर्मते हि वः । सकलेऽपि पटे दग्धे युज्यते वक्तुमीदृशम् ॥ ९२ ॥
दह्यमानोऽपि दग्धोऽयमिति वाक् श्रीमदर्हताम् । युज्यते प्रतिपत्तुं तत्तद्वचोऽनुभवादपि ॥ ९३ ॥
तच्छ्रुत्वा सापि चोत्पन्नशुद्धधीरभ्यधादिति । अहं चिरविमूढापि त्वया साध्वस्मि बोधिता ॥ ९४ ॥
[2]ही दूषितमियत्कालं श्रीवीरस्वामिनो वचः । तन्मिथ्यादुष्कृतं मेऽस्तु तत्प्रमाणमतः परम् ॥ ९५ ॥
अथ ढंको बभाषे तां साधु चांते भविष्यति । गच्छाधुनापि सर्वज्ञं प्रायश्चित्तं समाचर ॥ ९६ ॥
ढंकेनेत्युदितेच्छामोऽनुशिष्टिमिति[3] भाषिणी । हित्वा जमालिं सपरीवारा वीरं जगाम सा ॥ ९७ ॥
जमालिवर्जमन्येऽपि ढंकेन प्रतिबोधिताः । सर्वेऽपि मुनयो जग्मुः श्रीवीरस्वामिनोऽन्तिके ॥ ९८ ॥
ततो जमालिरेकाकी कुमतेन प्रतारयन् । महीं पर्यट्य भूयांसि वर्षाणि व्रतमाचरन् ॥ ९९ ॥
अन्तेऽर्धमासानशनं कृत्वा दुष्कर्म तं निजम् । अनालोच्य मृतः कल्पे षष्ठे किल्बिषिकोऽभवत् ॥१००॥

१ उच्चिनोतीति तथा । २ हीति खेदसूचकमव्ययम् । ३ शिक्षाम् ।

तदा च स्थविरासूनोर्निर्ययौ नामपत्रकम् । कृतान्तोत्क्षिप्तपत्राऽऽर्त्तं स्थविरा सा रुरोद च ॥ ११५ ॥
कौशाम्बीचित्रकृद्यूना पृष्टा रुदितकारणम् । सा चख्यौ यक्षवृत्तान्तं स्वपुत्रस्य च वारकम् ॥ ११६ ॥
सोऽप्यशापिष्ट मा रोदीर्मातस्तिष्ठतु ते सुतः । चित्रकृन्नाद्यकं यक्षं चित्रयिष्याम्यहं हि तम् ॥ ११७ ॥
उवाच स्थविराप्येवं वत्स त्वमपि मे सुतः । सोऽप्युवाचाम्ब मे भ्राता मयि सत्यस्तु सुस्थितः ॥ ११८ ॥
स कृत्वा समये षष्ठं स्नात्वा चन्दनचर्चितः । शुच्यंशुकाष्टगुणया[1] पत्र्या संयमिताननः ॥ ११९ ॥
नूतनैः कूर्चकै[2]रग्र्यै[3]र्वर्णकैस्तमचित्रयत् । चित्रकृद्दारको यक्षं नत्वा चैवमवोचत ॥ १२० ॥
सुरप्रिय सुरश्रेष्ठ निर्मातुं चित्रकर्म ते । कोऽलमत्यन्तनिष्णो[4]ऽपि मुग्धः कोऽहं वराककः ॥ १२१ ॥
तथापि हि यथाशिक्षं[5] यक्षराज मया कृतम् । युक्तायुक्तं तत्क्षमस्व निग्रहानुग्रहक्षम ॥ १२२ ॥
एवं तस्य गिरा तुष्टो यक्षो विनयसारया । ऊचे वरं वृणीष्वेति वव्रे चित्रकृदप्यदः ॥ १२३ ॥
त्वं देव यदि तुष्टोऽसि वराकस्य ममाधुना । वरस्तदयमेवास्तु मार्यो नातः परं जनः ॥ १२४ ॥
यक्षोऽप्यूचे सिद्धमेतद्यत्त्वं नैव विनाशितः । अन्यद्याचस्व नो यज्ञ स्वार्थसिद्धिनिबन्धनम् ॥ १२५ ॥
चित्रकृत्पुनरूचेऽथ मारिश्चेद्रक्षिता त्वया । संजातः कृतकृत्योऽहं स्वामिन्नेतावतापि हि ॥ १२६ ॥
विस्मितोऽथावदद्यक्षः परार्थवरयाञ्चया । भूयोऽपि तव तुष्टोऽस्मि वृणु स्वार्थकृते वरम् ॥ १२७ ॥
उवाच चित्रकृदपि तुष्टोऽसि यदि देव मे । यस्य द्विपदस्य चतुःपदस्यान्यस्य वापि च ॥ १२८ ॥

---

१ पवित्रवस्त्रस्याष्टगुणवत्या पत्र्या बन्धेन । २ पिच्छैः । ३ श्रेष्ठैः । ४ निष्णो निपुणः । ५ शिक्षामनतिक्रम्य यथाशिक्षितं तथेत्यर्थः ।

पश्याम्येकांशमपि हि तदंशस्यानुसारतः । यथावस्थिततद्रूपालेखने शक्तिरस्तु मे ॥ १२९ ॥
॥ युग्मम् ॥
एवमस्त्विति यक्षेणोदितः पौरैश्च पूजितः । ययौ पुरीं स कौशाम्बीं शतानीकनृपाश्रिताम् ॥ १३० ॥
तत्रान्यदा शतानीकः सभास्थो गर्वितः श्रिया । ऊचे दूतं नास्ति किं मे यदस्ति परभूभुजाम् ॥ १३१ ॥
तव चित्रसभा नास्तीत्यूचे दूतेन भूपतिः । स चादिशच्चित्रकरान् सभाचित्रणहेतवे ॥ १३२ ॥
चित्रकृद्भिः सभाभूमिर्विभज्य जगृहे च सा । अन्तःपुरासन्नदेशस्तस्य चित्रकृतस्त्वभूत् ॥ १३३ ॥
चित्रं तत्र च कुर्वाणो जालकस्यान्तरेण सः । पादांगुष्ठं मृगावत्या देव्याः सोर्मिकम[1]ैक्षत ॥ १३४ ॥
इयं मृगावती देवीत्यनुमानात् स चित्रकृत् । आलिखत्तां तथारूपां यक्षराजप्रसादतः ॥ १३५ ॥
[2]उन्मील्यमाने नेत्रे तूरुमूले कूर्चिका[3]मुखात् । निपपात मषीबिन्दुः सोऽपनिन्ये तु तं द्रुतम् ॥ १३६ ॥
भूयोऽपतन्मषीबिन्दुर्भूयः सोऽपि ममार्ज तम् । भूयश्च पतितं प्रेक्ष्य स चित्रकृदचिन्तयत् ॥ १३७ ॥
नूनं लाञ्छनमेतस्याः प्रदेशे ह्यत्र विद्यते । भवितव्यं [4]ततोऽनेन नापनेष्याम्यतः परम् ॥ १३८ ॥
एवं स[5]मापिते चित्रे तत्रागादीक्षितुं नृपः । पश्यन् क्रमेण तद्रूपं मृगावत्या ददर्श च ॥ १३९ ॥
ऊरौ प्रेक्ष्य च तं बिन्दुं क्रुद्धो राजा व्यचिन्तयत् । वि[6]ध्वस्ता नूनमेतेन पापेन मम पत्न्यसौ ॥ १४० ॥
अन्यथा वस्त्रमध्यस्थं मषीग्रन्थिं मृगीदृशः । मृगावत्या विजानीयात् कथमेष दुराशयः ॥ १४१ ॥

---

१ ऊर्मिकासहितम् । २ उल्लिख्यमाने सति । ३ पिच्छिकाग्रात् । ४ तस्मादनेन बिन्दुना तत्र भवितव्यम् । ५ निर्मापिते इति वा पाठः । ६ शीलाद्भ्रंशिता ।

इति कोपेन तं दोषमुदीर्य नृपतिः स्वयम् । आरक्षकाणां तं सद्यो निग्रहाय समार्पयत् ॥ १४२ ॥
नृपं चित्रकृतोऽथोचुरसावेकांशदर्शनात् । लिखत्यखिलमालेख्यं यक्षदत्तवरौजसा ॥ १४३ ॥
इत्युक्ते तत्परीक्षार्थं क्ष्मामुजा क्रुद्धचेतसा । वरचित्रकृतस्तस्य दर्शितं कुब्जिकामुखम् ॥ १४४ ॥
कुब्जिकां तां तथारूपां सोऽथ चित्रकरोऽलिखत् । तथाप्यमर्षाद्राजा तत्सदंशकमकर्तयत् ॥ १४५ ॥
चित्रकृत् सोऽपि तं यक्षं गत्वाश्रयदुपोषितः । सोऽप्यूचे वामहस्तेन तद्वच्चित्रं करिष्यसि ॥ १४६ ॥
एवं लब्धवरश्चित्रकरोऽमर्षादचिन्तयत् । अहं निरागास्तेनेमां किं राज्ञा प्रापितो दशाम् ॥ १४७ ॥
तस्य प्रतिकरिष्येऽहमुपायेनापि केनचित् । कुर्वन्ति विक्रमासाध्यं साध्यं बुद्ध्यैव धीधनाः ॥ १४८ ॥
एवं विमृश्य फलके कल्पिताकल्पभूषणाम् । विश्वैकभूषणं देवीं स लिलेख मृगावतीम् ॥ १४९ ॥
स्त्रीलोलस्य प्रचंडस्य चंडप्रद्योतभूपतेः । गत्वा मृगावतीरूपं स मनोज्ञमदर्शयत् ॥ १५० ॥
तत्प्रेक्ष्य चंडप्रद्योतस्तमूचे चित्रकृद्वर । विज्ञानकौशलं मन्ये तवेदं न तु वेधसः ॥ १५१ ॥
न दृष्टपूर्वं मर्त्येऽस्मिन् श्रुतपूर्वं न वा दिवि । कथं रूपमलेखीदं प्रतिच्छन्दं विना त्वया ॥ १५२ ॥
आख्याहि सत्यतः केयं येन गृह्णाम्यमूमहम् । अस्थाने क्वचिदस्त्येषा मय्येवौचित्यमञ्चति ॥ १५३ ॥
पूर्णो मनोरथो मेऽसाविति हृष्टोऽथ चित्रकृत् । शशंस पुरि कौशाम्ब्यां शतानीकोऽस्ति भूपतिः ॥१५४॥
नाम्ना मृगावती पूर्णमृगांकास्या मृगेक्षणा । एषाग्रमहिषी तस्य मृगारातिसमौजसः ॥ १५५ ॥

---

१ तस्याङ्गुष्ठम् । २ निरपराधी । ३ पराक्रमेणासाध्यम् । ४ कल्पितानि नेपथ्यभूषणानि यस्यास्ताम् । ५ पूर्णिमाचन्द्रवन्मुखं यस्याः सा । ६ सिंहसमानबलवतः ।

सा वचसामपि ॥ १५६ ॥
लेखितुं तां यथावस्थां विश्वकर्मापि न क्षमः । मया तु किंचिल्लिखिता दूरे सा वचसामपि ॥ १५६ ॥
लेखितुं तां यथावस्थां विश्वकर्मापि न क्षमः । मृगस्येव मृगीं सिंहो ग्रहीष्यामि मृगावतीम् ॥ १५७ ॥
उवाच चंडप्रद्योतः शतानीकस्य पश्यतः । मृगस्येव मृगीं सिंहो ग्रहीष्यामि मृगावतीम् ॥ १५७ ॥
राजनीतिस्तथाप्यस्तु यातु दूतस्तदर्थने । अनर्थः प्रथमं तस्य मा भूदादेशकारिणः ॥ १५८ ॥
इति प्रैषीद्वज्रजंघं सोऽनुशिष्य तदन्तिके । गत्वा सोऽपि शतानीकं दूतराडेवमब्रवीत् ॥ १५९ ॥
शतानीकादिशति त्वां चंडप्रद्योतनृपतिः । देवी मृगावती लब्धा त्वया दैवादियं खलु ॥ १६० ॥
स्त्रीरत्नमीदृशं योग्यं मामेव त्वं हि कीदृशः । तच्छीघ्रं प्रेषयास्मभ्यं राज्यं प्राणाश्च चेत्प्रियाः ॥ १६१ ॥
शतानीकोऽप्यथोवाच कोपाद्रे दूतपांसन । अनाचारं वदन्नेवं दूतत्वान्नाद्य हन्यसे ॥ १६२ ॥
ईदृग्मर्यप्यनायत्ते यस्येच्छा तस्य पाप्मनः । स्वाधीनायां क आचारः प्रजायां हन्त वर्तते ॥ १६३ ॥
शतानीकनृपेणैवं दूतो निर्भर्त्स्य निर्ययम् । निर्वासितोऽगादवन्त्यां प्रद्योतस्य शशंस च ॥ १६४ ॥
क्रुद्धोऽथ चंडप्रद्योतः सैन्यैराच्छादयन् दिशः । चचाल प्रतिकौशाम्बि निर्मर्याद इवार्णवः ॥ १६५ ॥
श्रुत्वा प्रद्योतमायान्तं गरुत्मन्तमिवोरगः । जातातिसारः प्रक्षोभाच्छतानीको व्यपद्यत ॥ १६६ ॥
देवी मृगावती दध्यौ पतिस्तावद्व्यपादि मे । बालः स्वल्पबलः सूनुरसावुदयनोऽपि च ॥ १६७ ॥
बलीयसोऽनुसरणं नीतिः स्त्रीलंपटे त्विह । सा मे कुलकलंकाय तस्माच्छद्मेह युज्यते ॥ १६८ ॥
वाचिकैरनुकूलैस्तदेतमत्र स्थिताप्यहम् । प्रलोभ्य कालं नेष्यामि समयप्राप्तिकांक्षया ॥ १६९ ॥

१ न जातु इति वा पाठः । २ आज्ञावर्तिनः । ३ दूतराजः । ४ अस्वाधीने मय्यपि यस्येदृगीच्छास्ति तस्य पापस्य स्वाधीनाया प्रजाया कीदृगाचारो वर्तते भविष्यतीत्यर्थः ।

विमृश्यैवमनुशिष्य दूतः प्रस्थापितस्तया । स्कन्धावारस्थितं गत्वा चंडप्रद्योतमब्रवीत् ॥ १७० ॥
ब्रूते मृगावतीति त्वां शतानीके दिवं गते । त्वमेव शरणं किं तु पुत्रोऽप्राप्तबलो मम ॥ १७१ ॥
मयायं मुक्तः प्रत्यन्त[1]भूपैरभिभविष्यते । भृशं पितृविपत्त्युत्थैः शोकावेगैरिवोल्बणैः ॥ १७२ ॥
प्रद्योतस्तद्गिरा हृष्टोऽभाषिष्ट ननु तत्सुतम् । पराभवितुमीशः स्यात् को नाम मयि गोप्तरि ॥ १७३ ॥
दूतोऽवदत् पुनर्देव देव्यैतदपि भाषितम् । प्रद्योते स्वामिनि सुतं न जेतुं कश्चिदीश्वरः ॥ १७४ ॥
देवपादाः परं दूरे समीपे सीमभूभुजः । तदौषध्यो हिमगिरावहि[2]रुच्छीर्षके पुनः ॥ १७५ ॥
त्वं निर्विघ्नं मया योगं यदीच्छसि कुरुष्व तत् । उज्जयिन्या इष्टकाभिः कौशाम्ब्यां वप्रमुत्कटम् ॥१७६॥
प्रद्योतस्तत्प्रपेदेऽथ मार्गे श्रेणितया निजान् । चतुर्दशापि नृपतीनमुचत् सपरिच्छदान् ॥ १७७ ॥
पुंस्परंपरयाऽव[3]न्त्याः समानीय स इष्टकाः । कौशाम्ब्या वप्रमकरोद्बलिष्ठमचिरादपि ॥ १७८ ॥
भूयो मृगावती दूतमुखेनोचे पुरीमिमाम् । धनधान्येन्धनाद्यैस्त्वं प्रद्योत नृप पूरय ॥ १७९ ॥
सर्वमाशु तथा चक्रे चंडप्रद्योतभूपतिः । किं किं करोति न पुमानाशापाशवशीकृतः ॥ १८० ॥
पुरीं रोधक्षमां ज्ञात्वा धीमत्यथ मृगावती । तस्थौ पिधाय द्वाराणि वप्रे चारोपयद्भटान् ॥ १८१ ॥
चंडप्रद्योतराजोऽपि तस्थौ रुद्ध्वाभितः पुरीम् । [4]प्रालम्बभ्रष्टकपिवत् परं वैलक्ष्यमुद्वहन् ॥ १८२ ॥
अन्येद्युरुद्यद्वैराग्या दध्यावेवं मृगावती । यद्येति भगवान् वीरः प्रव्रजामि तदा ह्यहम् ॥ १८३ ॥
इमं च तस्याः संकल्पं विज्ञाय परमेश्वरः । सुरासुरपरीवारोऽचिरादेव समाययौ ॥ १८४ ॥

१ शत्रुनृपैः । २ सर्पः । ३ उज्जयिन्याः । ४ फालभ्रष्टकपिवत् ।

बहिश्च समवसृतं श्रुत्वार्हन्तं मृगावती । द्वाराण्युद्घाट्य निर्भीका महाऋद्ध्या समाययौ ॥ १८५ ॥
सा वन्दित्वा जगन्नाथं यथास्थानमवास्थिता । प्रद्योतोऽप्येत्य वन्दित्वा त्यक्तवैरमुपाविशत् ॥ १८६ ॥
आयोजनविसर्पिण्या सर्वभाषानुयातया । गिरा श्रीवीरनाथोऽथ विदधे धर्मदेशनाम् ॥ १८७ ॥
सर्वज्ञोऽसाविति जनाच्छ्रुत्वैको धन्वभृत्पुमान् । संशयं मनसापृच्छद्दूरस्थो जगद्गुरुम् ॥ १८८ ॥
तं बभाषे जगन्नाथो वचसा शंस संशयम् । अन्येऽपि प्रतिबुध्यन्ते भव्यसत्त्वा अमी यथा ॥ १८९ ॥
इत्युक्तेऽपि त्रपानिघ्नो[1] व्यक्तं वक्तुमनीश्वरः । स ऊचे भगवान् या सा सा सेति प्रमिताक्षरम् ॥१९०॥
एवमेतदिति स्वामी प्रोचे मुकुलिताक्षरम्[2] । पप्रच्छ गौतमः स्वामिन् या सा सा सेति किं वचः ॥१९१॥
अथाचचक्षे भगवानिहैव भरते पुरि । चंपायां स्वर्णकारोऽभूदेकः स्त्रीलंपटः पुरा ॥ १९२ ॥
यां यां रूपवतीं कन्यामपश्यद्विचरन् भुवि । पञ्चस्वर्णशतीं दत्वा तां तां परिणिनाय सः ॥ १९३ ॥
पर्यणैषीत् क्रमादेवं स्त्रीणां पंचशतानि सः । सर्वांगीणाभरणानि तासां प्रत्येकमप्यदात् ॥ १९४ ॥
वारकोऽभूद्यदा यस्याः सर्वालंकारभृत्तदा । स्नानांगरागलिप्तांगी तेन रन्तुं ससज्ज सा ॥ १९५ ॥
अन्यदास्थुरुपशान्तवेशाः सर्वाश्च तत्स्त्रियः । अन्यथाशिक्षयत्ताः स तर्जनाताडनादिभिः ॥ १९६ ॥
अतीर्ष्यालुतया तासां रक्षणार्थं समुद्यतः । न जातु स गृहद्वारं सौविदल्ल इवामुचत् ॥ १९७ ॥
भोजनं स्वजनेऽन्योऽपि न सोऽदत्त निजे गृहे । नाभुक्त स्वयमप्यन्यगृहे तासामविश्वसन् ॥ १९८ ॥
अन्यदा प्रियमित्रेणानिच्छन्नपि कथंचन । निन्ये निजगृहे भोक्तुमिदं मैत्र्या[3] हि लक्षणम् ॥ १९९ ॥

१ लज्जाधीनः । २ अल्पाक्षरम् । ३ मैत्र्यादिलक्षणमिति पाठान्तरे मैत्र्या आदिलक्षणम् ।

तदा च दध्युस्तत्पत्न्यो धिगृद्धिं धिक् च यौवनम् । धिग्जीवितं च तिष्ठामो यद्गुप्ताविव यंत्रिताः २००
यमदूत इव घारं पापः पतिरयं हि नः । न जातु मुंचति चिरादद्य साध्वन्यतो ययौ ॥ २०१ ॥
तिष्ठामः स्वेच्छया तावत् क्षणमद्येति बुद्धितः । स्नात्वांगरागमाकल्पं वरमाल्यादि चादधुः ॥ २०२ ॥
यावद्दर्पणमादाय स्वं पश्यन्त्योऽवतस्थिरे । तास्तावदाययौ स्वर्णकारो दृष्ट्वा च सोऽकुपत् ॥ २०३ ॥
तत्रैकां महिलां पापः स तथाताडयद्भृशम् । यथा व्यपादि सा दन्तिपादाक्रान्तेव पद्मिनी ॥ २०४ ॥
मंत्रयाञ्चक्रिरेऽथान्या हनिष्यत्येष नोऽपि हि । संभूय हन्मस्तदमुं रक्षितेनामुना हि किम् ॥ २०५ ॥
एवं विचिन्त्य तास्तस्मै चक्राणीव प्रचिक्षिपुः । शतानि पंचैकोनानि दर्पणानामशंकिताः ॥ २०६ ॥
विपेदे सोऽपि तत्कालं सानुतापाश्च ताः स्त्रियः । चितावज्ज्वालयित्वौकों व्यपद्यन्त क्षणादपि ॥२०७॥
सानुतापतया ताश्चाकामनिर्जरया मृताः । शतानि पंचैकोनानि मनुष्यत्वेन जज्ञिरे ॥ २०८ ॥
दैवदुर्योगतश्चौर्यजीविनो मिलिताः क्रमात् । एकत्र दुर्गे तिष्ठन्तश्चौर्यं संभूय कुर्वते ॥ २०९ ॥
सोऽप्युत्पेदे स्वर्णकारस्तिर्यक्षु प्राग्मृता तु सा । तत्पत्न्युत्पद्य तिर्यक्षु पुत्रो विप्रकुलेऽभवत् ॥ २१० ॥
पंचाब्दके तत्र जाते तिर्यक्त्वात् स्वर्णकृत् स तु । तत्कुले भगिनीत्वेन तस्यैव समजायत ॥ २११ ॥
तस्याश्च पालकश्चक्रे पितृभ्यां स तु दारकः । अतिदुष्टतयारोदीत् पाल्यमानापि तेन सा ॥ २१२ ॥
उदरस्पर्शनं तस्याः कुर्वता तेन चान्यदा । गुह्ये कथमपि स्पृष्टा सा न्यवर्तिष्ट रोदनात् ॥ २१३ ॥
तद्रोदनप्रतीकारं तं ज्ञात्वा स तु दारकः । तस्या रुदत्यास्तत्स्थानस्पर्शं चक्रे तथैव हि ॥ २१४ ॥

---

१ कारागृहे । २ अद्य चिरादन्यतो ययौ तत्साधु जातमित्यर्थः । ३ स्त्रियम् । ४ गृहम् ।

तथा कुर्वन् पितृव्यां सोऽन्यदा ज्ञातो निहत्य च । निर्वासितो निजगृहाद्ययौ च गिरिगह्वरे ॥ २१५ ॥
शतानि पंचैकोनानि दस्यवो यत्र तेऽवसन् । तां पल्लीं सोऽगमत्तैश्च चौरैः संयुयुजेतराम् ॥ २१६ ॥
तत्स्वसाऽनाथतारुण्याप्यभवत् कुलटैव सा । स्वेच्छया पर्यटन्ती च ग्रामे काप्यन्यदा ययौ ॥ २१७ ॥
तैस्तस्करैः स तु ग्रामस्तदैवागत्य लुंटितः । गृहीता दारिका सा तु भार्याचक्रेऽखिलैरपि ॥ २१८ ॥
तेऽन्यदाचिन्तयंश्चौरा यदेकेयं वराकिका । सर्वेषां सेवयास्माकं मरिष्यत्यचिरादपि ॥ २१९ ॥
ते विमृश्यैवमानिन्युरपरामपि योषितम् । ईर्ष्यया पूर्वभार्या सा तच्छिद्राणि स्म मार्गति ॥ २२० ॥
चौराश्चौर्याय चान्येद्युर्ययुः साप्याप्य तच्छलम् । उपकूपं सपत्नीं तां निन्ये [1]व्याजेन केनचित् ॥ २२१ ॥
ऊचे च भद्रे कूपान्तः किमप्यस्तीह पश्य तत् । साप्यृजुर्द्रष्टुमारेभे मध्ये क्षिप्ता ततस्तया ॥ २२२ ॥
आगता दस्यवस्ते च तां पप्रच्छुः क्व सा ननु । सावोचत् किमहं वेद्मि स्वप्रियां किं न रक्षथ ॥ २२३ ॥
तैर्ज्ञातमनया यत्सा वराकी मारितेर्ष्यया । दुःशीला मत्स्वसैषा किं विममर्शेति स द्विजः ॥ २२४ ॥
सर्वज्ञोऽत्रागतोऽस्तीति श्रुत्वा लोकादिहागतः । प्रागेव मनसापृच्छत् स्वसृदुःशीललज्जया ॥ २२५ ॥
मयोक्तं पृच्छ वाचेति या सा सा सेति पृष्टवान् । अस्माभिश्चैवमित्युक्त्वा तां जामिं ज्ञापितो ह्यसौ २२६
एवं च रागद्वेषाद्यैर्मूढात्मानो भवे भवे । भ्राम्यन्ति भविनो नानादुःखभाजनतां गताः ॥ २२७ ॥
एवमाकर्ण्य स पुमान् परं संवेगमागतः । स्वामिपार्श्वे प्रवव्रजे तां पल्लीं पुनरप्यगात् ॥ २२८ ॥
प्रबोधिता चौरपुंसा तेन प्रव्रजितेन च । एकोना सा पंचशती चौराणामग्रहीद्व्रतम् ॥ २२९ ॥

१ मिषेण ।

उत्थाय स्वामिनं नत्वा जगादाथ मृगावती । चंडप्रद्योतमापृच्छ्य प्रव्रजिष्याम्यहं प्रभो ॥ २३० ॥
साथ प्रद्योतमप्यूचे यदि त्वमनुमन्यसे । प्रव्रजामि भवोद्विग्ना तदा पुत्रस्तु तेऽर्पितः ॥ २३१ ॥
स्वामिप्रभावान्निर्वाणवैरः प्रद्योतभूपतिः । तामनुज्ञाय कौशाम्ब्यां चकारोदयनं नृपम् ॥ २३२ ॥
सहागृह्णन्मृगावत्या प्रव्रज्यां स्वामिसन्निधौ । अष्टावंगारवत्याद्याः प्रद्योतनृपतेः प्रियाः ॥ २३३ ॥
मृगावत्याद्याः प्रभुणाप्यनुशिष्य समर्पिताः । चन्दनायास्तदुपास्त्या सामाचारीं च जज्ञिरे ॥ २३४ ॥
इतश्चास्ति निरुपमं परमाभिर्विभूतिभिः । नाम्ना वणिजकग्राम इति ख्यातं महापुरम् ॥ २३५ ॥
तत्र प्रजानां विधिवत्पितेव परिपालकः । जितशत्रुरिति ख्यातो बभूव पृथिवीपतिः ॥ २३६ ॥
आसीद्गृहपतिस्तत्र नयनानन्ददर्शनः । आनन्दो नाम मेदिन्यामायात इव चन्द्रमाः ॥ २३७ ॥
सधर्मचारिणी तस्य रूपलावण्यहारिणी । बभूव शिवनन्देति शशांकस्येव रोहिणी ॥ २३८ ॥
निधौ वृद्धौ व्यवहारे चतस्रोऽस्य पृथक् पृथक् । हिरण्यकोटयोऽभूवंश्चत्वारश्च व्रजा गवाम् ॥ २३९ ॥
तत्पुरादुत्तरप्राच्यां कोल्लाकाख्योपपत्तने । आनन्दस्यातिबहवो बन्धुसंबन्धिनोऽभवन् ॥ २४० ॥
तदा च पृथ्वीं विहरञ्जिनः सिद्धार्थनन्दनः । तत्पुरोपवने पूतिपलाशे समवासरत् ॥ २४१ ॥
जितशत्रुर्महीनाथस्त्रिजगन्नाथमागतम् । श्रुत्वा ससंभ्रमोऽगच्छद्वन्दितुं सपरिच्छदः ॥ २४२ ॥
आनन्दोऽपि ययौ पद्भ्यां पादमूले जगत्पतेः । कर्णपीयूषगंडूषकल्पां श्रुत्वा च देशनाम् ॥ २४३ ॥
अथानन्दः प्रणम्यांघ्री त्रिजगत्स्वामिनः पुरः । जग्राह द्वादशविधं गृहिधर्मं महामनाः ॥ २४४ ॥

१ नष्टवैरः । २ तस्याश्चन्दनायाः सेवया ।

तथा कुर्वन् पितृन्यां सोऽन्यदा ज्ञातो निहत्य च । निर्वासितो निजगृहाद्ययौ च गिरिगह्वरे ॥२१५॥
शतानि पंचैकोनानि दस्यवो यत्र तेऽवसन् । तां पल्लीं सोऽगमत्तैश्च चौरैः संयुयुजेतराम् ॥ २१६ ॥
तत्स्वसाऽनाप्ततारुण्याप्यभवत् कुलटैव सा । स्वेच्छया पर्यटन्ती च ग्रामे क्वाप्यन्यदा ययौ ॥ २१७ ॥
तैस्तस्करैः स तु ग्रामस्तदैवागत्य लुंटितः । गृहीता दारिका सा तु भार्याचक्रेऽखिलैरपि ॥ २१८ ॥
तेऽन्यदाचिन्तयंश्चौरा यदेकेयं वराकिका । सर्वेषां सेवयास्माकं मरिष्यत्यचिरादपि ॥ २१९ ॥
ते विमृश्यैवमानिन्युरपरामपि योषितम् । ईर्ष्यया पूर्वभार्या सा तच्छिद्राणि स्म मार्गति ॥ २२० ॥
चौराश्चौर्याय चान्येद्युर्ययुः साप्याप्य तद्बलम् । उपकूपं सपत्नीं तां निन्ये [1]व्याजेन केनचित् ॥ २२१ ॥
ऊचे च भद्रे कूपान्तः किमप्यस्तीह पश्य तत् । साप्यृजुर्द्रष्टुमारेभे मध्ये क्षिप्ता ततस्तया ॥ २२२ ॥
आगता दस्यवस्ते च तां पप्रच्छुः क्व सा ननु । सावोचत् किमहं वेद्मि स्वप्रियां किं न रक्षथ ॥ २२३ ॥
तैर्ज्ञातमनया यत्सा वराकी मारितेर्ष्यया । दुःशीला मत्स्वसैषा किं विममर्शेति स द्विजः ॥ २२४ ॥
सर्वज्ञोऽत्रागतोऽस्तीति श्रुत्वा लोकादिहागतः । प्रागेष मनसापृच्छत् स्वसृदुःशीललज्जया ॥ २२५ ॥
मयोक्तं पृच्छ वाचेति या सा सा सेति पृष्टवान् । अस्माभिश्चैवमित्युक्त्वा तां जामिं ज्ञापितो ह्यसौ २२६
एवं च रागद्वेषाद्यैर्मूढात्मानो भवे भवे । भ्राम्यन्ति भविनो नानादुःखभाजनतां गताः ॥ २२७ ॥
एवमाकर्ण्य स पुमान् परं संवेगमागतः । स्वामिपार्श्वे प्रवव्रजे तां पल्लीं पुनरप्यगात् ॥ २२८ ॥
प्रबोधिता चौरपुंसा तेन प्रव्रजितेन च । एकोना सा पंचशती चौराणामग्रहीद्व्रतम् ॥ २२९ ॥

१ मिषेण ।

उत्थाय स्वामिनं नत्वा जगादाथ मृगावती । चंडप्रद्योतमापृच्छ्य प्रव्रजिष्याम्यहं प्रभो ॥ २३० ॥
साथ प्रद्योतमप्यूचे यदि त्वमनुमन्यसे । प्रव्रजामि भवोद्विग्ना तदा पुत्रस्तु तेऽर्पितः ॥ २३१ ॥
स्वामिप्रभावान्निर्वाणवैरः प्रद्योतभूपतिः । तामनुज्ञाय कौशाम्ब्यां चकारोदयनं नृपम् ॥ २३२ ॥
सहागृह्णन्मृगावत्या प्रव्रज्यां स्वामिसन्निधौ । अष्टावंगारवत्याद्याः प्रद्योतनृपतेः प्रियाः ॥ २३३ ॥
मृगावत्याद्याः प्रभुणाप्यनुशिष्य समर्पिताः । चन्दनायास्तदुपास्त्या सामाचारीं च जज्ञिरे ॥ २३४ ॥
इतश्चास्ति निरुपमं परमाभिर्विभूतिभिः । नाम्ना वणिजकग्राम इति ख्यातं महापुरम् ॥ २३५ ॥
तत्र प्रजानां विधिवत्पितेव परिपालकः । जितशत्रुरिति ख्यातो बभूव पृथिवीपतिः ॥ २३६ ॥
आसीद्गृहपतिस्तत्र नयनानन्ददर्शनः । आनन्दो नाम मेदिन्यामायात इव चन्द्रमाः ॥ २३७ ॥
सधर्मचारिणी तस्य रूपलावण्यहारिणी । बभूव शिवनन्देति शशांकस्येव रोहिणी ॥ २३८ ॥
निधौ वृद्धौ व्यवहारे चतस्रोऽस्य पृथक् पृथक् । हिरण्यकोटयोऽभूवंश्चत्वारश्च व्रजा गवाम् ॥ २३९ ॥
तत्पुरादुत्तरप्राच्यां कोल्लाकाख्योपपत्तने । आनन्दस्यातिबहवो बन्धुसंबन्धिनोऽभवन् ॥ २४० ॥
तदा च पृथ्वीं विहरञ्जिनः सिद्धार्थनन्दनः । तत्पुरोपवने दूतिपलाशे समवासरत् ॥ २४१ ॥
जितशत्रुर्महीनाथस्त्रिजगन्नाथमागतम् । श्रुत्वा ससंभ्रमोऽगच्छद्वन्दितुं सपरिच्छदः ॥ २४२ ॥
आनन्दोऽपि ययौ पद्भ्यां पादमूले जगत्पतेः । कर्णपीयूषगंडूषकल्पां श्रुत्वा च देशनाम् ॥ २४३ ॥
अथानन्दः प्रणम्यांघ्री त्रिजगत्स्वामिनः पुरः । जग्राह द्वादशविधं गृहिधर्मं महामनाः ॥ २४४ ॥

१ नष्टवैरः । २ तस्याश्चन्दनायाः सेवया ।

शिवनन्दामन्तरेण स्त्रीः स तत्याज हेम तु । चतस्रश्चतस्रः स्वर्णकोटीर्नि[1]ध्यादिगा विना ॥ २४५ ॥
प्रत्याचख्यौ व्रजानेष ऋते च चतुरो व्रजान् । क्षेत्रत्यागं च विदधे हलपंचशतीं विना ॥ २४६ ॥
शकटान् वर्जयामास पंच पंचशतान्यृते । दिग्यात्राव्यापृतानां च वहतां [2]चानसां स तु ॥ २४७ ॥
दिग्यात्रिकाणि चत्वारि स सांवा[3]हनिकानि च । विहाय वहनान्यन्यवाहनानि व्यवर्जयत् ॥ २४८ ॥
अपरं [4]गन्धकाषाय्याः स तत्याजांगपुं[5]सनम् । दन्तधावनमार्द्रया [6]मधुयष्टेर्ऋते जहौ ॥ २४९ ॥
वर्जयामास च क्षी[7]रामलकादपरं फलम् । अभ्यंगं च विना तैले सहस्रशतपाकिमे ॥ २५० ॥
अन्यत्सुरभिगन्धाढ्यादुद्वर्तनकमत्यजत् । अष्टभ्य औ[8]ष्ट्रिकपयस्कुंभेभ्योऽन्यच्च मज्जनम् ॥ २५१ ॥
अपरं क्षौमयुगलाद्वासः सर्वमवर्जयत् । श्रीखं[9]डागरुघुसृणान्यपास्यान्यद्विलेपनम् ॥ २५२ ॥
ऋते च मालतीमाल्यात् पद्माच्च कुसुमं जहौ । कर्णि[10]कानाममुद्राभ्यामन्यच्चाशेषभूषणम् ॥ २५३ ॥
तुरुष्कागरुधूपेभ्य ऋते धूपविधिं जहौ । घृतपूरात्खंडखाद्यादपरं भक्ष्यमत्यजत् ॥ २५४ ॥
[11]काष्ठपेयां विना पेयां कलमादन्यदोदनम् । माषमुद्गकला[12]येभ्य ऋते सूपमपाकरोत् ॥ २५५ ॥
घृतं च वर्जयामास विना शा[13]रदगोघृतात् । शाकं स्वस्तिकमंडूकीं वालुक्यां च विना जहौ ॥२५६॥

---

१ निधिवृद्धिव्यवहारगाः । २ शकटानाम् । ३ नौसाधनानि । ४ गन्धकषायेण रक्ता शाटी गन्धकाषायी तस्याः । ५ अगलुछनवस्त्रम् । ६ मधुयष्टिर्भाषाया "जेठीमध" इति ख्यातम् । ७ क्षीरवन्मधुरामलकात् । ८ साधारणप्रमाणा घटाऔष्ट्रिककुंभा उच्यते । ९ घुसृणः कुकुमः । १० कर्णिका कर्णभूषणविशेषः । ११ घृतमिश्रितमुद्गादिधान्यनिर्मितो रसविशेष. काष्ठपेया । १२ कलायः सूपविशेषः भाषाया "वटाणा" इति ख्यातम् । १३ शरद्दतूद्भवगोघृतात् ।

शते स्नेहाम्ल[1]दाल्यम्लात्तेमनं[2] खाम्बुनो[3]ऽम्बु च । पंचसुगन्धितांबूलान्मुखवासं च सोऽमुचत् ॥ २५७ ॥
आनन्दः शिवनन्दाया उपेत्याथ ससंमदः[4] । अशेषं कथयामास गृहिधर्मं प्रतिश्रुतम्[5] ॥ २५८ ॥
शिवाय शिवनन्दापि यानमारुह्य तत्क्षणम् । भगवत्पादमूलेऽगाद्गृहिधर्मार्थिनी ततः ॥ २५९ ॥
तत्र प्रणम्य चरणौ जगत्त्रयगुरोः पुरः । प्रपेदे शिवनन्दापि गृहिधर्मं समाहिता ॥ २६० ॥
अधिरुह्य ततो यानं विमानमिव भासुरम् । भगवद्वाक्सुधापानमुदिता सा गृहं ययौ ॥ २६१ ॥
अथ प्रणम्य सर्वज्ञमिति पप्रच्छ गौतमः । महात्मायं किमानन्दो यतिधर्मं ग्रहीष्यति ॥ २६२ ॥
त्रिकालदर्शी भगवान् कथयामासिवानिति । श्रावकव्रतमानन्दः सुचिरं पालयिष्यति ॥ २६३ ॥
ततः सौधर्मकल्पेऽसौ विमाने चारुणप्रभे । भविष्यत्यमरवरश्चतुःपल्योपमस्थितिः ॥ २६४ ॥
इतश्च जाह्नवीहंसश्रेणीभिरिव[6] चारुभिः । चैत्यध्वजै राजमाना चंपेत्यस्ति महापुरी ॥ २६५ ॥
भोगिभोगायतभुजस्तंभः[7] कुलगृहं श्रियः । जितशत्रुरिति नाम्ना तस्यामासीन्महीपतिः ॥ २६६ ॥
अभूद्गृहपतिस्तस्यां कामदेवाभिधः सुधीः । आश्रयोऽनेकलोकानां महातरुरिवाध्वनि ॥ २६७ ॥
लक्ष्मीरिव स्थिरीभूता रूपलावण्यशालिनी । अभूद्भद्राकृतिर्भद्रा नाम तस्य सधर्मिणी ॥ २६८॥
निधौ षट् स्वर्णकोट्यः षड् वृद्धौ षड् व्यवहारगाः । व्रजाः षट् तस्य दशगोसहस्रमितयोऽभवन् २६९
तदा च विहरन्नुर्वीं तत्रोर्वीमुखमंडने । पूर्णभद्राभिधोद्याने श्रीवीरः समवासरत् ॥ २७० ॥
कामदेवोऽथ पादाभ्यां भगवन्तमुपागमत् । शुश्राव च श्रोत्रसुधां स्वामिनो धर्मदेशनाम् ॥ २७१ ॥

---

१ स्नेहयुक्तादाम्लात् दाल्याआम्लात् । २ तक्रपाकः । ३ आकाशजलादृते । ४ सहर्षः । ५ अंगीकृतम् । ६ गगातटवर्तिहसानां श्रेणिभिः । ७ सर्पदेहवद्दीर्घभुजस्तभः ।

कामदेवस्ततो देवनरासुरगुरोः पुरः । प्रपेदे द्वादशविधं गृहिधर्मं विशुद्धधीः ॥ २७२ ॥
प्रत्याख्यत् स विना भद्रां स्त्रीर्व्रजान् षड्व्रजीं विना।निधौ वृद्धौ व्यवहारे षट् षट् कोटीर्विना वसु २७३
शेषं च वस्तुनियममानन्द इव सोऽग्रहीत् । ततः प्रभुं नमस्कृत्य ययौ निजनिकेतनम् ॥ २७४ ॥
स्वयमात्ते श्रावकत्वे तेनाख्याते च तत्प्रिया । भद्राप्युपेत्य जग्राह स्वाम्यग्रे श्रावकव्रतम् ॥ २७५ ॥
इतश्च काशिर्नाम्नानुगंगमस्ति पुरी वरा । विचित्ररचनारम्या तिलकश्रीरिवावनेः ॥ २७६ ॥
सुत्रामेवामरावत्यामविलुप्तितविक्रमः । जितशत्रुरभूत्तत्र धरित्रीधवपुंगवः ॥ २७७ ॥
आसीद्गृहपतिस्तस्यां महेभ्यश्चुलनीपिता । प्राप्तो मनुष्यधर्मेव मनुष्यत्वं कुतोऽपि हि ॥ २७८ ॥
जगदानन्दिनस्तस्यानुरूपा रूपशालिनी । श्यामा नामाभवद्भार्या श्यामेव तुहिनद्युतेः ॥ २७९ ॥
अष्टौ निधानेऽष्टौ वृद्धावष्टौ च व्यवहारगाः । इति तस्याभवन् हेम्नश्चतुर्विंशतिकोटयः ॥ २८० ॥
एकैकशो गोसहस्रैर्दशभिः प्रमितानि तु । तस्यासन् गोकुलान्यष्टौ कुलवेश्मानि संपदाम् ॥ २८१ ॥
तस्यां पुर्यामथान्येद्युरुद्याने कोष्ठकाभिधे । भगवान् समवसृतो विहरंश्चरमो जिनः ॥ २८२ ॥
ततो भगवतः पादवन्दनाय सुरासुराः । सेन्द्राः समाययुस्तत्र जितशत्रुश्च भूपतिः ॥ २८३ ॥
पद्भ्यां चचाल चुलनीपिताप्युचितभूषणः । वन्दितुं नन्दितमनाः श्रीवीरं त्रिजगत्पतिम् ॥ २८४ ॥
भगवन्तं ततो नत्वोपविश्य चुलनीपिता । शुश्राव परया भक्त्या प्राञ्जलिर्धर्मदेशनाम् ॥ २८५ ॥

१ षण्णा व्रजाना समाहारः । २ अनुगग गगातीरे । ३ विचित्ररचनाभी रम्या । ४ अखण्डितपराक्रम. । ५ क्षितीशपुगवः । ६ कुबेर इव । ७ चन्द्रस्य पत्नी श्यामा रात्रिरिव । ८ आनन्दितमनाः ।

अथोत्थितायां सदसि प्रणम्य चरणौ प्रभोः । इति विज्ञपयामास विनीतश्चुलनीपिता ॥ २८६ ॥
स्वामिन्नस्मादृशां बोधहेतोर्विहरसे महीम् । जगद्बोधं विना नान्यो ह्यर्थश्चंक्रमणे रवेः ॥ २८७ ॥
सर्वोऽपि याच्यते गत्वा स दत्ते यदि वा न वा । आगत्यायाचितो धर्मं दत्से हेतुः कृपात्र ते ॥ २८८॥
जानामि यतिधर्मं चेद्गृह्णामि स्वामिनोऽन्तिके । योग्यता परमियती मन्दभाग्यस्य नास्ति मे ॥ २८९ ॥
याचे श्रावकधर्मं तु स्वामिन् देहि प्रसीद मे । आदत्तेऽब्धावप्युदंको भरणं निजमेव हि ॥ २९० ॥
यथासुखं गृहाणेति स्वामिनानुमतस्ततः । प्रतिपेदे श्रावकार्हं धर्मं द्वादशधापि सः ॥ २९१ ॥
अष्टाष्टकोट्यभ्यधिकं स्वर्णं निध्यादिषु त्रिषु । व्रजेभ्योऽन्यानथाष्टभ्यः प्रत्याचख्यौ व्रजानपि ॥२९२॥
नियमं चान्यवस्तूनां कामदेव इवाददे । श्यामा तत्पत्न्यपि स्वामिसमीपे श्रावकव्रतम् ॥ २९३ ॥
तदा च गौतमो नत्वा पप्रच्छेति जगत्पतिम् । महाव्रतधरः किं स्यान्न वायं चुलनीपिता ॥ २९४ ॥
अथोचे स्वामिना नैष यतिधर्मं प्रपत्स्यते । गृहिधर्मरतः किं तु मृत्वा सौधर्ममेष्यति ॥ २९५ ॥
अरुणाभे विमाने च चतुःपल्योपमस्थितिः । ततश्च्युत्वा विदेहेषूत्पद्य निर्वाणमेष्यति ॥ २९६ ॥
तत्रैवासीत् सुरादेवो गृही धन्या च तत्प्रिया । आसीत्तस्य हिरण्यादि पुष्कलं कामदेववत् ॥ २९७ ॥
स कामदेववद्गत्वा स्वाम्यग्रे श्रावकव्रतम् । नियमांश्चाग्रहीत् सार्धं धन्यया धर्मधन्यया ॥ २९८ ॥
ततश्च विहरन् स्वामी पुरीमालभिकां ययौ । तत्र शंखवनोद्याने भगवान् समवासरत् ॥ २९९ ॥
पुर्यां तत्राभवच्चुल्लशतिको नामतो गृही । कामदेवसमस्तवृद्ध्या बहुलेति च तत्प्रिया ॥ ३०० ॥

१ उदंको घृततैलादिभरणयोग्यश्चर्मपात्रविशेषः । २ धर्मेण धन्या तया.

समं वहुलया धर्मं प्रपेदे नियमानपि ॥ २०१ ॥
स कामदेववद्गत्वा श्रीवीरचरणान्तिके । सहस्राम्रवणनामन्युद्याने समवासरत् ॥ २०२ ॥
ततश्च कांपील्यपुरे जगाम विहरन् प्रभुः । नाम्ना पुष्पेति तद्भार्या शीलालंकारशालिनी ॥ २०३ ॥
तत्रासीत्कामदेवर्द्धि[1]र्गृहस्थः कुंडगोलिकः । सोऽग्रहीन्नियमांश्चापि पुष्पया भार्यया सह ॥ २०४ ॥
कामदेव इव स्वामिपादाग्रे श्रावकव्रतम् । शब्दालपुत्रः कुलालोऽग्निमित्रा तस्य च प्रिया ॥ २०५ ॥
इतश्च पौलाशपुरे गोशालोपासको[2]ऽवसत् । तृतीया व्यवहारेऽभूद्व्रज एकश्च गोऽयुतम्[3] ॥ २०६ ॥
हिरण्यकोटिस्तस्यैका निधानेऽन्या तु वृद्धिगा । कुंभकारापण[4]शतान्यासन् पंच सदापि च ॥ २०७ ॥
वहिश्च पौलाशपुरात् कुंभकारस्य तस्य तु । सर्वज्ञोऽर्हन्महाब्रह्मा त्रैलोक्यार्च्य इहैष्यति ॥ २०८ ॥
तमशोकवनेऽवोचत्त्रिदशः[5] कोऽपि यत्प्रगे[6] । एवं द्विस्त्रिर्गदित्वा तं त्रिदशः स तिरोदधे ॥ २०९ ॥
सेवेथास्तं च फलकपीठसंस्तरकादिना । सर्वज्ञः खलु गोशालः प्रातरत्र समेष्यति ॥ २१० ॥
आजीवभक्तो[7] दध्यौ स नूनं धर्मगुरुः स मे । श्रीवीरः समवासार्षीत् सहस्राम्रवणे वने ॥ २११ ॥
विचिन्त्यैवं स्थिते तस्मिन् प्रातस्तत्र समागतः । कृत्वा च देशनां स्वामी तं कुलालमभाषत ॥ २१२ ॥
कुंभकारः सोऽपि गत्वा भगवन्तमवन्दत । कोऽप्यूचे यत्प्रगे ब्रह्मा सर्वज्ञोऽर्हन्निहैष्यति ॥ २१३ ॥
शब्दालपुत्र भो ह्यस्त्वामशोकवनगं सुरः । त्वयापि तद्गिराचिन्ति यद्गोशालः समेष्यति ॥ २१४ ॥
उपास्यः स त्वया पीठफलकादिसमर्पणात् ।

---

१ कामदेवस्येव ऋद्धिर्यस्य सः । २ गोशालस्य भक्तः । ३ गवामयुत दशसहस्री । ४ कुंभकारहट्टाना शतानि । ५ देव. । ६ प्रातःकाले । ७ गोशालमतभक्तः ।

इति स्वामिवचः श्रुत्वा सोऽचिन्तयदहो अयम् । सर्वज्ञोऽर्हन्महावीरो महाब्राह्मण आगतः ॥ ३१५ ॥
तन्नमस्करणीयोऽयमुपास्यः सर्वथापि हि । इत्युत्थाय प्रभुं नत्वा स प्राञ्जलिरदोऽवदत् ॥ ३१६ ॥
बहिरस्मात्पुरात् कुंभकारापणशतानि मे । पंच सन्ति तेषु पीठाद्यादायानुगृहाण माम् ॥ ३१७ ॥
तद्वचः प्रत्यपादीशस्तं च गोशालशिक्षया । [1]उपात्तान्नियतिवादाद्युक्तिभिर्विन्यवर्तयत् ॥ ३१८ ॥
त्यक्त्वा नियतिवादं स प्रमाणीकृत्य पौरुषम् । आनन्द इव शिश्राय स्वाम्यग्रे श्रावकव्रतम् ॥ ३१९ ॥
परं विशेषो नियमे निधिवृद्धिनियोगगाः । तिस्रस्तस्य स्वर्णकोट्यो व्रजस्त्वेको गवामिति ॥ ३२० ॥
अग्निमित्रा च तत्पत्नी तेनैव प्रतिबोधिता । आगत्य स्वामिनः पार्श्वे शिश्रिये श्रावकव्रतम् ॥ ३२१ ॥
विहर्तुमन्यतोऽचालीत्ततश्च भगवानपि । गोशालकोऽपि ह्यश्रौषीज्जनश्रुत्येदमुच्चकैः ॥ ३२२ ॥
आजीवकानां [2]समयं हित्वा शब्दालपुत्रकः । निर्ग्रंथानां श्रमणानां शासनं प्रतिपन्नवान् ॥ ३२३ ॥
ततश्चाचिन्तयत्तत्र गत्वा शब्दालपुत्रकम् । आजीवकानां समये स्थापयाम्यद्य पूर्ववत् ॥ ३२४ ॥
इत्यागात्तत्र गोशालस्तद्वेश्मा[3]जीवकैर्वृतः । तं च शब्दालपुत्रो न दृशापि समभावयत् ॥ ३२५ ॥
शब्दालपुत्रं गोशालः स्वे संस्थापयितुं मते । श्रावकत्वाच्चलयितुं वाऽशक्तो निर्ययौ पुनः ॥ ३२६ ॥
अधिराजगृहं वीरश्चैत्ये गुणशिलाह्वये । गत्वाथ समवासार्षीत् सुरासुरनिषेवितः ॥ ३२७ ॥
चुलनीपितृतुल्यर्द्धिर्महाशतकनामकः । गृह्यभूत्तस्य पत्न्यश्च रेवत्याद्यास्त्रयोदश ॥ ३२८ ॥
हिरण्यकोट्यो रेवत्या अष्टावष्ट व्रजाः पुनः । एका कोटी व्रजश्चैकोऽन्यासां प्रत्येकमप्यभूत् ॥ ३२९ ॥

१ गृहीतात् । २ मतम् । ३ आजीवकमतवर्तिभिः ।

निभ्रान्त्याश्च प्रवर्तिन्या भुवो[1] बाहुमुदक्षिपत् । तत्पार्श्वे यान्तमुरगं दृष्ट्वा केवलशक्तितः ॥ ३४५ ॥
प्रबुद्धया चन्दनया पृष्टा किं बाहुरुद्धृतः । महाहिरिह यातीति शशंस च मृगावती ॥ ३४६ ॥
भूयोऽपि चन्दनावोचत्सूचीभेद्ये तमस्यपि । मृगावति कथं दृष्टस्त्वया हिर्विस्मयो मम ॥ ३४७॥
मृगावती भगवतीत्याचचक्षे प्रवर्तिनि । उत्पन्नकेवलज्ञानचक्षुषा ज्ञातवत्यहम् ॥ ३४८ ॥
केवल्याशातनीं धिङ्मामित्यश्रान्तं[2] स्वगर्हया[3] । उत्पेदे केवलज्ञानं चन्दनाया अपि क्षणात् ॥ ३४९ ॥
इतश्च गौतमोऽपृच्छन्नाथ भावाः स्वभावतः । किं यान्त्यन्यत्वमर्केन्दुविमाने यदिहेयतुः ॥ ३५० ॥
स्वाम्याख्यत् स्युर्दशाश्चर्याण्युपसर्गो यदर्हताम् । गर्भापहारश्चन्द्रार्कविमानावतरस्तथा ॥ ३५१ ॥
चमरोत्पातः[4] परिषद्भव्या[5]ऽष्टोत्तरं शतम् । सिद्धा अपरकंकायां कृष्णस्य गमनं तथा ॥ ३५२ ॥
असंयतार्चा स्त्रीतीर्थं[6] हरिवंशकुलोद्भवः । ततोऽसौ संगतोऽर्केन्दुविमानावतरः खलु ॥ ३५३ ॥
॥ त्रिभिर्विशेषकम् ॥
इत्याख्याय ततो नाथः श्रावस्तीं विहरन् ययौ । तस्यां च समवासार्षीदुद्याने कोष्ठकाभिधे ॥ ३५४ ॥
तस्यां प्रागागतस्तेजोलेश्या[7]हतविरोधकः । अष्टांगनिमित्तज्ञानज्ञातलोकमनोगतः॥ ३५५ ॥
अजिनोऽपि जिनशब्दमात्मना संप्रकाशयन् । हालाहलाकुंभकार्या गोशालोऽवसदापणे ॥ ३५६ ॥
॥ युग्मम् ॥

१ पृथ्वीतः । २ निरन्तर यथा तथा । ३ स्वनिन्दया । ४ चमरेन्द्रकृत उपसर्गः । ५ भव्यप्राणिरहिता परिषत् सभा । ६ स्त्री-तीर्थंकरः । ७ तेजोलेश्यया हतो विरोधो येन सः ।

अवसरः प्रसरश्च संवादः कारकस्तथा । भलनो वणिजोऽभूवन् हेमिलायां पुरा पुरि ॥ ३७२ ॥
भांडैरापूर्य शकटान्निर्ययुस्ते वणिज्यया । यान्तश्च निर्जलारण्यं विविशुः किंचिदध्वनि ॥ ३७३ ॥
ते पञ्चापि तृषाक्रान्ता मरुमार्गगता इव । जलं गवेषयामासुः पर्यटन्तो महाटवीम् ॥ ३७४ ॥
भ्राम्यन्नवसरः पञ्चशिखरं वामलूरकम् । ददर्शादर्शयत्तेषां चतुर्णां सुहृदामपि ॥ ३७५ ॥
ते तस्य पूर्वशिखरं संभूयास्फोटयन् द्रुतम् । तस्माच्च लेभिरे वारि तत्पीत्वा सुस्थतां ययुः ॥ ३७६ ॥
अथोचे प्रसरोऽपाच्यशृंगमप्यस्य दीर्यताम् । लप्स्यामहे नूनमितो वस्त्वन्यदपि किंचन ॥ ३७७ ॥
अथाब्रवीदवसरः खननं नास्य युज्यते । उत्थास्यत्यहिरेतस्मान्नाकुरोको हि भोगिनाम् ॥ ३७८ ॥
अवादीदथ संवादो विसंवादोऽप्यभूदिह । यत्परिस्फोटितात्पूर्वशिखरान्नाहिरुत्थितः ॥ ३७९ ॥
भूयोऽप्यवसरोऽवोचद्दैवादिह पयोऽभवत् । अथोचे कारको दैवाद्रुक्मा इह नु भाविनः ॥ ३८० ॥
इत्युदित्वा तत् खनितुं समारभत कारकः । मतं ममेदं नेत्युक्त्वा गंत्रीमवसरो ययौ ॥ ३८१ ॥
वभाषे भलनो यातोऽवसरो यदि यातु तत् । विनाप्यमुं खनिष्याम इति सर्वेऽपि तेऽखनन् ॥ ३८२ ॥
खातात्तस्मान्नाकुशृंगात् सद्यो रुक्मा विनिर्ययुः । विभज्यावसरवर्जं चत्वारो जगृहुश्च तान् ॥ ३८३ ॥
तृतीयमपि ते नाकुशिखरं लोभतोऽखनन् । रूप्यं प्रापुर्जगृहुश्च तद्रुक्मानपहाय तान् ॥ ३८४ ॥
चखनुश्चतुर्थमपि ते शृंगं स्वर्णं च लेभिरे । ततो रजतमप्यौज्झन् सुवर्णादानलोभतः ॥ ३८५ ॥

१ वणिजा कर्म वणिज्या तया व्यापारेणेति यावत् । २ वलमीकम् । ३ नाकुर्वल्मीको भोगिना सर्पाणामोको गृहमस्ति । ४ शकटम् ।

रत्नानि पञ्चमे शृंगे भविष्यन्तीति बुद्धितः । चखनुस्तदपि लोभान्धा लाभाल्लोभो हि वर्धते ॥ ३८६ ॥
अत्यन्तमथितादब्धेः कालकूट इवोत्कटः । तस्माच्छृंगात् खन्यमानादुत्तस्थौ दृग्विषोरगः ॥ ३८७ ॥
वल्मीकाग्रस्थितः सोऽहिः प्राक् सूर्यं प्रेक्ष्य तान्दृशा । भस्मीचकार चतुरः सगंत्रीवृषभानपि ॥३८८॥
निर्लोभ इत्यवसरं सगंत्रीवृषमप्यथ । तस्याहेर्देव्यधिष्ठात्री प्रापयत् स्थानमीप्सितम् ॥ ३८९ ॥
धक्ष्यामि त्वद्गुरुं सर्पोऽधाक्षीत्तांश्चतुरो यथा । मोक्ष्यामि त्वामहं सोऽहिर्मुमोचावसरं यथा ॥ ३९० ॥
ततोऽसमाप्तभिक्षार्थ एवानन्दो ययौ प्रभुम् । गोशालोक्तं तदाचख्यावपृच्छच्चेति शंकितः ॥ ३९१ ॥
भस्मराशीकरिष्यामीत्युक्तं गोशालकेन यत् । उन्मत्तभाषितं तत् किं तत्कर्तुमथवा क्षमः ॥ ३९२ ॥
अथाचचक्षे भगवानर्हद्भ्यः सोऽन्यतः क्षमः । अर्हतामपि सन्तापमात्रं कुर्यादनार्यधीः ॥ ३९३ ॥
तद्गत्वा गौतमादीनां शंसेदं ते यथा हि[1] तम् । इहागतं नोदनया धर्म्ययापि तुदन्ति न ॥ ३९४ ॥
तेषां गत्वाख्यदानन्दस्तदा गोशालकोऽपि हि । तत्रागात् स्वामिनोऽग्रे चावस्थाय व्यब्रवीदिति ॥३९५॥
भोः काश्यप वदस्येवं गोशालो मंखलेः सुतः । अन्तेवासी[2] ममेत्यादि तन्मृषा भाषितं तव ॥ ३९६ ॥
गोशालस्तव यः शिष्यः स हि शुक्लाभिजातिकः । धर्मध्यानस्थितो मृत्वा त्रिदशेषूदपद्यत ॥ ३९७ ॥
तद्देहेऽस्मिन्नुपसर्गपरीषहसहेऽविशम् । उदायनामाऽहमृषिः परित्यज्य निजं वपुः ॥ ३९८ ॥
ततो मामपरिज्ञाय गोशालं मंखलेः सुतम् । स्वशिष्यं कथमाख्यासि न खल्वसि गुरुर्मम ॥ ३९९ ॥
स्वाम्यथोचे यथारक्षैः क्रम्यमाणो मलिम्लुचः[3] । गर्तं दुर्गं वनं वापि स्वान्तर्धानमवाप्नुवन् ॥ ४०० ॥

१ यस्मात्कारणात् ते गौतमादयो यथा तमिहागत गोशालं धर्म्ययापि प्रेरणया न तुदन्ति । २ शिष्यः । ३ चौरः ।

ऊर्णालोम्ना शणलोम्ना तूलांशेन तृणेन वा । मन्यतेऽन्तरदत्तेनात्मानमावृतमल्पधीः ॥ ४०१ ॥
एवं त्वमपि गोशालानन्योऽप्याख्यान् स्वमन्यथा । किमर्थं भाषसेऽलीकं स एवास्यपरो न हि ॥४०२॥
एवं स्वामिगिरा क्रुद्धो गोशालोऽप्यब्रवीत् प्रभुम् । अद्य भ्रष्टोऽसि नष्टोऽसि न भवस्येष काश्यप ४०३
सर्वज्ञशिष्यः सर्वानुभूतिर्गुर्वनुरागतः[1] । अक्षमस्तद्वचः सोढुं गोशालकमभाषत ॥ ४०४॥
गुरुणा दीक्षितोऽनेन शिक्षितोऽस्यमुनैव हि । निह्नुषे हेतुना केन गोशाल त्वं स एव हि ॥ ४०५ ॥
अथ गोशालकः कोपात्तेजोलेश्यामनाहताम् । सर्वानुभूतयेऽमुञ्चद्दृग्ज्वालामिव दृग्विषः ॥ ४०६ ॥
निर्दह्यमानः सर्वानुभूतिर्गोशाललेश्यया । शुभध्यानपरो मृत्वा सहस्रारे सुरोऽभवत् ॥ ४०७ ॥
गोशालोऽपि हि तत्कालं स्वलेश्याशक्तिगर्वितः । निर्भर्त्सयितुमारेभे भगवन्तं पुनः पुनः ॥ ४०८ ॥
स्वामिशिष्यः सुनक्षत्रस्तमथ स्वामिनिन्दकम् । गुरुभक्त्यानुशास्ति स्म भृशं सर्वानुभूतिवत् ॥ ४०९ ॥
गोशालमुक्तया तेजोलेश्यया प्रज्वलत्तनुः । प्रभुं प्रदक्षिणीकृत्यादाय भूयो व्रतानि च ॥ ४१० ॥
आलोच्याथ प्रतिक्रम्य क्षमयित्वाखिलान्मुनीन् । सुनक्षत्रमुनिर्मृत्वाच्युतकल्पे सुरोऽभवत् ॥ ४११ ॥
॥ युग्मम् ॥

जिंतकाशी[2] च गोशालस्ततोऽतिपरुषाक्षरम् । समाक्रोशन्निजगदे स्वामिना करुणाजुषा ॥ ४१२॥
दीक्षितः शिक्षितश्चासि श्रुतभाक् च मया कृतः । ममैवावर्णवादी त्वं कोऽयं ते धीविपर्ययः ॥ ४१३ ॥
स्वामिना स्वयमित्युक्तो गोशालः कुपितो भृशम् । उपेत्य किंचिदमुचत्तेजोलेश्यां प्रभुं प्रति ॥ ४१४ ॥

---

१ गुरावनुरागस्तस्मात् । २ जितेन काशते शोभत इति तथा ।

निष्क्रम्य स्वामिसदसो दस्युवद्वीक्षितो जनैः । हालाहलाकुंभकार्या गोशालोऽगमदापणम् ॥ ४२९ ॥
॥ युग्मम् ॥

अथ स्वामी मुनीनूचे तेजो गोशालकेन यत् । अस्मद्वधाय प्रक्षिप्तं तस्येयं शक्तिरूर्जिता ॥ ४३० ॥
[1]वत्साच्छकुत्समगधवंगमालवकोशलान् । पाटलाटवज्रिमालिमलयाबाधकांगकान् ॥ ४३१ ॥
काशीन् सह्योत्तरान् देशान् निर्दग्धुं पौरुषेश्वरा । तेजोलेश्या गोशालस्य तपसोग्रेण साधिता ॥४३२॥
ते विसिष्मियिरे सर्वे मुनयो गौतमादयः । सन्तः शक्तौ परस्यापि मात्सर्यं न हि बिभ्रति ॥ ४३३ ॥
गोशालकोऽपि स्वेनैव दह्यमानोऽथ तेजसा । तापशान्त्यै पपौ मद्यं दधानो मद्यभाजनम् ॥ ४३४ ॥
मदोन्मत्तो गायति स्म गोशालो नृत्यति स्म च । हालाहलायाः प्रणतिं प्राञ्जलिश्चाकरोन्मुहुः ॥ ४३५॥
[2]अंगरागीचकारांगे भांडार्थं मृदितां मृदम् । लुलोठ च गृहस्रोतोजले [3]तच्चापिबन्मुहुः ॥ ४३६ ॥
असंबद्धविरुद्धानि प्रजजल्प वचांसि च । शिष्यैः सशोकैः स उपचर्यमाणोऽत्यगाद्दिनम् ॥ ४३७ ॥
गोशालोपासकस्तत्रायंपुलो धर्मजागरम् । पूर्व[4]रात्रापररात्रे कुर्वन्नेवं व्यचिन्तयत् ॥ ४३८ ॥
तृणगोपालिका किंसंस्थानेति न हि वेद्म्यहम् । गत्वा पृच्छामि गोशालं सर्वज्ञं गुरुमात्मनः ॥ ४३९ ॥
एवं निश्चित्य गो[5]सर्गेऽनर्घ्यनेपथ्यभृद्ययौ । हालाहलागृहेऽपश्यद्गोशालं च तथा स्थितम् ॥ ४४० ॥
लज्जयाथापचक्राम द्रुतद्रुतमयंपुलः । गोशालशिष्यैः स्थविरैर्दृष्टश्च जगदे च सः ॥ ४४१ ॥

१ एतानि देशनामानि । २ मृत्तिकामगरागं चकारेति च्विः । ३ तद्गृहस्रोतोजलम् । ४ पूर्वरात्रश्चापररात्रश्चानयोः समाहारस्तस्मिन् । ५ तन्नाम्नि स्थाने ।

अयंपुल निशायां ते पश्चिमायामजायत । तृणगोपालिकासंस्थाविषयः संशयः खलु ॥ ४४२ ॥
विस्मितः सोऽप्युवाचैवमेवमेतन्महर्षयः । गोशालचेष्टितं गोमुं ते जूयस्तं बभाषिरे ॥ ४४३ ॥
गायन्नृत्यन् पात्रपाणिरञ्जलिं च करोति यत् । निर्वाणप्राप्तिलिंगानि तदाख्याति गुरुस्तव ॥ ४४४ ॥
यदेतत् पश्चिमं गेयं नृत्यमञ्जलिकर्म च । पानं मृदंगरागादि यदन्यदपि किंचन ॥ ४४५ ॥
गोशालस्य चतुर्विंशस्यार्हतो मोक्षलक्ष्म तत् । गत्वामुं पृच्छ सन्देहं सर्वज्ञो ह्येष ते गुरुः ॥ ४४६ ॥
इत्युक्तस्तैरन्विगन्तुं स प्रावर्तिष्ट तेऽपि हि । तस्यागमं संशयं च गोशालस्य पुरोऽवदन् ॥ ४४७ ॥
तेऽन्यतो मद्यपात्रादि गोशालेन व्यमोचयन् । आसने चासयाञ्चक्रुस्तदा चागादयंपुलः ॥ ४४८ ॥
ततो निषण्णमग्रे तमूचे गोशालकोऽपि हि । तृणगोपालिका किंसंस्थानेति तव संशयः ॥ ४४९ ॥
तृणगोपालिकां विद्धि वंशीमूलसमाकृतिम् । श्रुत्वेति मुदितः सद्योऽयंपुलः स्वाश्रयं ययौ ॥ ४५० ॥
अन्येद्युश्चेतनां लब्ध्वा ज्ञात्वान्तसमयं निजम् । शिष्यानाहूय गोशालो व्याजहारेति सादरः ॥ ४५१ ॥
मृतस्य मे वपुः स्नाप्यं गन्धाम्भोभिर्विलेपनैः । सुगन्धिभिर्विलेप्यं चामोच्यं चोत्कृष्टवाससा ॥ ४५२ ॥
भूष्यं च भूषणैर्दिव्यैरारोप्यं तदनन्तरम् । सहस्रवाह्यां शिविकां ततो निःसार्यमुत्सवात् ॥ ४५३ ॥
अयमत्रावसर्पिण्यां चतुर्विंशो जिनेश्वरः । गोशालः प्रययौ मोक्षमित्युद्घोष्यं पुरेऽखिले ॥ ४५४ ॥
ते तथा प्रत्यपद्यन्त गोशालोऽप्यह्नि सप्तमे । जातशुद्धाशयः पश्चात्तापादेवमचिन्तयत् ॥ ४५५ ॥
अहो पापोऽहमर्हन्तं वीरं धर्मगुरुं निजम् । नितान्तमाशातितवांस्त्रिधाप्यत्यन्तदुर्मतिः ॥ ४५६ ॥

---

१ चरमम् । २ मृदा मृत्तिकयाङ्गरागादि । ३ मोक्षचिह्नम् ।

अभाणयं च सर्वज्ञमात्मानं सर्वतोऽपि हि । मृषोपदेशैः सत्याभैः सर्वं लोकं प्रतारयन् ॥ ४५७ ॥
धिग्महर्षी मया दग्धौ गुरुगृह्यावुभौ च तौ । तेजोलेश्या स्वदाहायामुच्यत स्वामिने च धिक् ॥४५८॥
कृते दिनानां स्तोकानां किमकार्यं मया कृतम् । भूयिष्ठनरकावासविनिवासनिबन्धनम् ॥ ४५९ ॥
न केवलमयं स्वात्मा नरकायातिथीकृतः । किं त्वयं सकलो लोकोऽप्यसन्मार्गोपदेशतः ॥ ४६० ॥
भवत्वियत्यपि गते लोको यातु पथैव[1] हि । विमृश्यैवं समाहूय शिष्यानेवमथावदत् ॥ ४६१ ॥
भो भोः शृणुत सर्वेऽपि नाहमर्हन्न केवली । किं त्वस्मि मंखलिसुतो गोशालो वीरशिष्यकः ॥ ४६२ ॥
आश्रयाशो[2] वह्निरिव प्रत्यनीको[3] गुरोरहम् । मया दंभादियत्कालमात्मा लोकश्च वंचितः ॥ ४६३ ॥
छद्मस्थोऽहं मरिष्यामि दह्यमानः स्वतेजसा । वामांघ्रौ रज्जुभिर्बध्ध्वा कर्षणीयः पुरीह भोः ॥ ४६४ ॥
निष्ठीवद्भिर्मम मुखे मां कर्षद्भिर्मृतश्ववत् । घोषणीयमिदं पुर्यां त्रिकशृंगाटकादिषु[4] ॥ ४६५ ॥
स एष मंखलिसुतो गोशालो दंभितप्रजः[5] । मुनिघात्यजिनो दोषनिधानं गुरुतल्पगः ॥ ४६६ ॥
जिनस्तु भगवान् वीरः सर्वज्ञः करुणानिधिः । हितोपदेष्टा न्यह्नोष्ट गोशालस्तं मुधैव हि ॥ ४६७ ॥
इत्यर्थं शपथं दत्वा व्यथया स व्यपद्यत । तच्छिष्याश्च कुलालौको[6]द्वाराणि पिदधुर्ह्रिया ॥ ४६८ ॥
श्रावस्तीमालिखंस्तत्र शिष्याः शपथमुक्तये । तथा गोशालमाकर्षन् कुर्वन्तो घोषणादिकम् ॥ ४६९ ॥
ततो निष्क्रमयामासुस्तद्गोशालकलेवरम् । ऋद्ध्या महत्या तच्छिष्याश्चक्रुश्च ज्वलनातिथिम् ॥ ४७० ॥

---

१ सन्मार्गेण । २ आश्रयमश्नातीति पक्षद्वये विशेषणम् । ३ शत्रुः । ४ त्रिकचत्वरादिषु । ५ दंभिता प्रजा येन यस्य वा सः । ६ कुलालस्यौको गृहं तस्य द्वाराणि ।

प्रभुः श्रीवर्धमानोऽपि मेंढकग्राममन्यगात् । चैत्ये च समवासार्षीत्तत्र कोष्ठकनामनि ॥ ४७१ ॥
स्वामिनं तत्र चापृच्छत् समये गौतमो मुनिः । गोशालः कां गतिमगात् स्वाम्यूचे सोऽच्युतं गतः ॥४७२॥
भूयोऽपि गौतमोऽपृच्छत् स्वामिन्नीदृग्भिरघैः । स दुरात्मा कथं देवो वभूवाश्चर्यमत्र मे ॥ ४७३ ॥
स्वाम्याचख्यौ निन्दति योऽवसाने दुष्कृतं निजम् । न दूरे तस्य देवत्वं गोशालोऽपि तथाकरोत् ४७४
पप्रच्छ गौतमोऽथैवं काले च्युत्वा तु सोऽच्युतात् । स्वामिन्नुत्पत्स्यते कुत्र कदा सिद्धिं च यास्यति ४७५
स्वाम्युवाचात्रैव जंबूद्वीपे वर्षे च भारते । भाव्युपविन्ध्यं पुंड्रेषु शतद्वारं महापुरम् ॥ ४७६ ॥
तत्र संमुचिभूपस्य भद्राकुक्षिभवः सुतः । गोशालजीवो भविता महापद्मोऽभिधानतः ॥ ४७७ ॥
स च भावी महाराजस्तस्योभौ यक्षपुंगवौ । पूर्णभद्रमाणिभद्रौ सेनापत्यं करिष्यतः ॥ ४७८ ॥
तस्यापरं गुणोद्भूतं देवसेन इति प्रजाः । नामधेयं करिष्यन्ति भागधेयमहानिधेः ॥ ४७९ ॥
तस्योच्चैश्चक्रिण इवोत्पत्स्यतेऽद्भुततेजसः । हस्ती श्वेतश्चतुर्दन्त ऐरावण इवापरः ॥ ४८० ॥
तत्रारूढवतस्तस्य तद्दृष्टिमुदिता जनाः । विमलवाहन इति करिष्यंत्यभिधान्तरम् ॥ ४८१ ॥
तस्यान्यदा पूर्वभवाभ्यस्तार्षिद्वेषकर्मणा । उत्पत्स्यते श्रमणेषु नितान्तं दुष्टबुद्धिता ॥ ४८२ ॥
निन्दनैस्ताडनैर्बन्धैरुद्दाहैर्हननैश्च सः । श्रुतमात्रान् दृष्टमात्रान्मुनीन् विनटयिष्यति ॥ ४८३ ॥
तं च विज्ञापयिष्यन्ति पौरामात्यादयोऽप्यदः । भूभुजां युज्यते दुष्टनिग्रहः साधुपालनम् ॥ ४८४ ॥
अमूंस्त्वनागसः[3] साधून् भिक्षावृत्तींस्तपोधनान् । स्वामिन् न पासि चेन्मा स्म पासीस्तन्निग्रहस्तु किम् ॥

१ पापैः । २ विन्ध्यगिरिसमीप पुंड्रदेशेषु शतद्वार नाम महापुरं भावि । ३ अपराधरहितान् ।

कोपिष्यति चेत्कोऽपि निरागस्ताडनान्मुनिः[1] । स्वतेजसा तदा स त्वां सराष्ट्रमपि धक्ष्यति ॥ ४८६ ॥
तैरित्युक्तो विना भावं तद्वचः प्रतिपत्स्यते । सोऽन्यदा तु रथारूढः क्रीडयोद्यानमेष्यति ॥ ४८७ ॥
स त्रिज्ञानं[2] मुनिं सिद्धतेजोलेश्यं सुमंगलम् । कायोत्सर्गस्थितं तत्र द्रक्ष्यत्यातापनापरम् ॥ ४८८ ॥
सोऽथ निष्कारणक्रुद्धो विरुद्धः साधुदर्शने । तं रथाग्रेण पर्यस्य महर्षिं पातयिष्यति ॥ ४८९ ॥
स उत्थाय मुनिर्भूयः कायोत्सर्गं करिष्यति । तथैव भूपतिर्भूयस्तं पृथ्व्यां पातयिष्यति ॥ ४९० ॥
उत्थाय स्थास्यति पुनः कायोत्सर्गे सुमंगलः । प्रयुज्य चावधिं ज्ञात्वा तद्भवानिति वक्ष्यति ॥ ४९१ ॥
रे रे न देवसेनोऽसि न वा विमलवाहनः । स्मर गोशालकोऽसि त्वं सूनुर्मंखस्य मंखलेः ॥ ४९२ ॥
येन चाशातितो धर्मगुरुश्चरमतीर्थकृत् । तच्छिष्यौ च परिप्लुष्टौ[3] दुर्मदेन तदा त्वया ॥ ४९३ ॥
यथा हितैस्तदा क्षान्तं क्षमिष्येऽहं तथा न हि । भूयः करिष्यसेऽदश्चेद्धक्ष्यामि त्वां क्षणात्तदा ॥४९४॥
तेनेत्युक्तेऽधिकं दीप्तः सर्पिःसिक्त[4] इवानलः । पातयिष्यति भूयोऽपि महापद्मः सुमंगलम् ॥ ४९५ ॥
क्रमानपेत्य[5] सप्ताष्टान् स तेजोलेश्यया मुनिः । निर्धक्ष्यति महापद्मं सरथ्यरथसारथिम्[6] ॥ ४९६ ॥
तत्कर्मालोच्य स मुनिः पालयित्वा चिरं व्रतम् । अन्ते च मासानशनं कृत्वा सर्वार्थमेष्यति ॥ ४९७ ॥
त्रयस्त्रिंशत्सागरस्यायुषोऽन्ते स परिच्युतः । महाविदेहेषूत्पद्य दीक्षया मोक्षमेष्यति ॥ ४९८ ॥
महापद्मोऽपि निर्दग्धः सप्तमोर्वीं गमिष्यति । क्रमादुत्पत्स्यते द्विर्द्विः सर्वेषु नरकेषु सः ॥ ४९९ ॥

---

१ निरपरावेन ताडनात् । २ त्रीणि मतिश्रुतावधिनामानि ज्ञानानि यस्य तम् । ३ दग्धौ । ४ घृतेन सिक्तः । ५ पदानि अपेत्य अपसृत्य । ६ रथ्याः अश्वाः ।

तस्य मोक्षमहिमानं कर्तुमीयुः सुरासुराः । प्रत्यंतवासी तानेकः प्रेक्ष्य जातिस्मरोऽभवत् ॥ ५१५ ॥
प्रत्येकबुद्धः प्राव्राजीत् स तदैव महाशयः । आर्पयद्व्रतिलिंगं च तस्मै शासनदेवता ॥ ५१६ ॥
तप्यमानं तपस्तीव्रं पूज्यमानं जनैश्च तम् । दृष्ट्वोपेत्येश्वरो नाम तं पप्रच्छातिदुर्मतिः ॥ ५१७ ॥
केन त्वं दीक्षितः कुत्रोत्पन्नः किं वा कुलं तव । कुतो वा सूत्रमर्थं च समुपार्जितवानसि ॥ ५१८ ॥
प्रत्येकबुद्धः स महामुनिराख्यदशेषतः । दध्यौ चेतीश्वरो नूनं दंभेनास्ति प्रजामसौ ॥ ५१९ ॥
मन्ये यादृगनेनोक्तं तादृग्वक्ता जिनोऽपि हि । यद्यापमोहो नेदृक्षं स वदेद्यामि तं ततः ॥ ५२० ॥
प्रव्रज्यामभिनन्दामि सर्वदुःखापहामिति । ध्यात्वैवं स ययौ तत्र न चापश्यज्जिनेश्वरम् ॥ ५२१ ॥
पार्श्वे गणधरस्याथ प्रव्रज्यां स उपाददे । मोहगर्जितवैराग्यः कपिवन्मन्दबुद्धिकः ॥ ५२२ ॥
मोक्षप्राप्ते जिने पर्षद्यासीनो गणभृद्धगौ । यावज्जिनोक्तसूत्रार्थमालापस्तावदित्यभूत् ॥ ५२३ ॥
अप्येकं पृथिवीजीवं विनाशयति यः खलु । असंयतः समाख्यातो जैनेन्द्रे स हि शासने ॥ ५२४ ॥
ईश्वरोऽचिन्तयच्चैवं जीवा अवनिकायिकाः । सर्वत्रापि विमृद्यन्ते को हि तान्रक्षितुं क्षमः ॥ ५२५ ॥
अश्रद्धेयमिदं वाक्यं लाघवायास्य केवलम् । श्रुत्वाप्यदोऽनुतिष्ठेत् क उन्मत्तस्येव जल्पितम् ॥ ५२६ ॥
मुक्त्वेदं यद्यसौ किंचिद्भ्रामण्यं मध्यपक्षगम् । समाख्याति तदा नूनं लोकः सर्वोऽपि रज्यति ॥ ५२७ ॥
यद्वा हा हा हतोऽस्मीति नातुतिष्ठाम्यहं यदि । जनोऽपि नानुतिष्ठेत् किं सर्वज्ञैर्जल्पितं ह्यदः ॥ ५२८ ॥
अर्हद्वाक्यान्यथाकारप्रायश्चित्तं मयाधुना । ग्राह्यमित्यगमत्तं प्रत्येकबुद्धं महामुनिम् ॥ ५२९ ॥

---

१ प्रत्यन्ते समीपे वसतीति तथा । २ लघुतायै ।

गोशालतेजसा वीरः षण्मासान्तर्विपत्स्यते । इति लोकप्रवादोऽभूत्तादृगामय[1]दर्शनात् ॥ ५४४ ॥
तं च श्रुत्वा स्वामिशिष्यः सिंहो नामानुरागवान् । गत्वैकान्ते रुरोदोच्चैः क्व धैर्यं तादृशा गिरा ॥५४५॥
केवलेन प्रभुर्ज्ञात्वा तमाहूयेदमब्रवीत् । जनप्रवादात् किं भीतः साधो संतप्यसे हृदि ॥ ५४६ ॥
न ह्यापदा तीर्थकृतो विपद्यन्ते कदाचन । किं न संगमकादिभ्य उपसर्गा वृथाभवन् ॥ ५४७ ॥
उवाच सिंहो भगवन् यद्यप्येवं तथापि हि । आपदा वोऽखिलः स्वामिञ्जनः संतप्यतेतराम्[2] ॥ ५४८ ॥
मादृशां दुःखशांत्यै तत् स्वामिन्नादत्स्व भेषजम् । स्वामिनं पीडितं द्रष्टुं न हि क्षणमपि क्षमाः[3] ॥५४९॥
तस्योपरोधात्स्वाम्यूचे रेवत्या श्रेष्ठिभार्यया । पक्वः कूष्मांडकटाहो यो मह्यं तं तु मा ग्रहीः ॥ ५५० ॥
बीजपूरकटाहोऽस्ति यः पक्वो गृहहेतवे । तं गृहीत्वा समागच्छ करिष्ये तेन वो धृतिम् ॥ ५५१ ॥
सिंहोऽगादथ रेवतीगृहमुपादात्त प्रदत्तं तया । कल्प्यं भेषजमाशु तत्र ववृषे स्वर्णं च हृष्टैः सुरैः ॥५५२॥
सिंहानीतमुपास्य भेषजवरं तद्वर्धमानः प्रभुः । सद्यः संघ[4]चकोरपार्वणशशी प्रापद्वपुःपाटवम् ॥५५३॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि
ऋषभदत्तदेवानन्दाप्रव्रज्या जमालिगोशालकविप्रतिपत्तिविपत्तिभगवदारोग्यवर्णनो नामाष्टमः सर्गः ॥

---

१ आमयो रोगः । २ अतिशयेन सतप्यते । ३ न क्षमा वयमिति शेषः । ४ संघ एव चकोरपक्षी तस्यानन्दजनने पूर्णिमाचन्द्रः ।

प्रभुं प्रेक्ष्य च संक्रुद्धः सिंहादिभववैरतः । सोऽवोचद्गौतममुनिं भगवन् कोऽयमग्रतः ॥ १३ ॥
जगाद गौतमोऽसौ मे धर्माचार्यो जिनेश्वरः । सोऽप्यूचे चेद्गुरुस्तेऽसौ तदा नार्थस्त्वयापि मे ॥ १४ ॥
त्वद्दीक्षयाप्यलमिति स रजोहरणादिकम् । त्यक्त्वा ययौ निजक्षेत्रे सीरादि पुनराददे ॥ १५ ॥
स्वामिनं गौतमो नत्वा पप्रच्छ भगवन्निदम् । आश्चर्यमेष विद्वेषी लोकानन्देऽपि यस्त्वयि ॥ १६ ॥
प्रतिपन्नं स्वयमपि व्रतं प्रोज्झितवानसौ । युष्मदालोकनादेव कारणं तत्र नाथ किम् ॥ १७ ॥
मय्यसौ प्रीतिमान् पूर्वं गुरुर्मेऽसावितीरिते । त्वयि नाथ झगित्येव द्वेष्यजायत मय्यपि ॥ १८ ॥
स्वाम्यथाख्यन्मया सिंहो यस्त्रिपृष्ठेन दारितः । क्रोधात् स्फुरंस्त्वया साम्ना शान्तः सारथिना मम १९
तत्प्रभृत्येष मद्वेषी जज्ञे स्निग्धः पुनस्त्वयि । तत्प्रैषयं गौतम त्वां बोधिबीजकृतेऽस्य हि ॥ २० ॥
एवमाख्याय[1] भगवान् प्रययौ पोतनं पुरम् । मनोरमाभिधोद्याने तद्बहिः समवासरत् ॥ २१ ॥
प्रसन्नचन्द्रो जिनेन्द्रं वन्दितुं पोतनेश्वरः । समाजगामाश्रौषीच्च देशनां मोहनाशिनीम् ॥ २२ ॥
स्वामिदेशनया बुद्धो भवोद्विग्नः स भूपतिः । बालमप्यात्मजं राज्ये निधाय व्रतमाददे ॥ २३ ॥
विहरन् स्वामिना सार्धं तप्यमानस्तपः परम् । अजायत स राजर्षिः क्रमात्सूत्रार्थपारगः ॥ २४ ॥
तेनर्षिणाऽपरैश्चापि ऋषिभिः परिवारितः । विहरन् भगवान् वीरो ययौ राजगृहेऽन्यदा ॥ २५ ॥
तत्र द्रष्टुं जगन्नाथमुत्कः[2] सुतसमावृतः । चचाल श्रेणिकोऽश्वेभश्रेणिमंक्षितभूतलः ॥ २६ ॥
[3]अग्रानीके तस्य चोभौ नरौ सुमुखदुर्मुखौ । मिथ्यादृशावापतन्तौ[4] मिथो नानाकथापरौ ॥ २७ ॥

१ कथिते सति । २ उत्सुकः । ३ अग्रसैन्ये । ४ गच्छन्तौ ।

मार्गे प्रसन्नचन्द्रं तमेकपादप्रतिष्ठितम् । आतापनां प्रकुर्वाणमूर्ध्वबाहुमपश्यताम् ॥ २८ ॥
॥ युग्मम् ॥

तं दृष्ट्वा सुमुखोऽवोचदहो आतापनाजुषः । अस्य स्वर्गोऽपवर्गो वा मुनेर्न खलु दुर्लभः ॥ २९ ॥
कर्मतो नामतश्चापि दुर्मुखः प्रत्यभाषत । प्रसन्नचन्द्रः खल्वेष नृपतिः पोतनेश्वरः ॥ ३० ॥
अस्य धर्मः कुतो येन राज्ये न्यस्तोऽर्भकः सुतः । नियोजितो वत्सतर इवानसि[1] महीयसि ॥ ३१ ॥
स चास्य सूनुः सचिवैर्दधिवाहनभूभुजा । चंपानाथेन संभूय राज्यात्प्रच्यावयिष्यते[2] ॥ ३२ ॥
राज्यधर्मः हतो[3]ऽनेन पत्न्योऽप्यस्य क्वचिद्गताः । अदर्शनीयस्तदसौ धूर्तपाखंडिदर्शनः[4] ॥ ३३ ॥
ध्यानपर्वतदंभोलि[5]मेवमाकर्ण्य तद्वचः । प्रसन्नचन्द्रो राजर्षिः सहसेति व्यचिन्तयत् ॥ ३४ ॥
धिगहो अकृतज्ञास्ते मंत्रिणो ये मया सदा । सत्कृता अपि मत्सूनोर्विभेदमधुना व्यधुः ॥ ३५ ॥
अद्याभविष्यं चेत्तत्राशिक्षयिष्यं भृशं हि तान् । विकल्पैरित्यप्रसन्नः प्रसन्नो[6] व्यस्मरद्व्रतम् ॥ ३६ ॥
स राजमानी[7] मनसा योद्धुं प्रववृते ततः । तत्र च श्रेणिकः प्राप्तो ववन्दे विनयेन तम् ॥ ३७ ॥
अहो प्रसन्नचन्द्रस्य ध्यानावस्थेति चिन्तयन् । श्रेणिकोऽगान्महावीरं नत्वा चैवमभाषत ॥ ३८ ॥
प्रसन्नचन्द्रो राजर्षिर्ध्यानस्थो वन्दितो मया । यदा तदा चेन्म्रियते ततो गच्छेत् क्व शंस मे ॥ ३९ ॥
सप्तमीं भुवमित्याख्यन्नाथोऽथ श्रेणिकोऽपि हि । दध्यौ न साधोर्नरकस्तन्मया साधु न श्रुतम् ॥ ४० ॥

१ अनसि शकटे । २ अधः कारयिष्यते । ३ हतः । ४ धूर्तं पाखंडिना दर्शनं शास्त्रं येन सः । ५ ध्यानमेव पर्वतस्तस्मिन् वज्रसदृशम् । ६ प्रसन्नचन्द्रमुनिः । ७ आत्मानं राजानं मन्यते य. सः ।

क्षणान्तरे च भूयोऽपि पप्रच्छ श्रेणिकः प्रभुम् । विपद्यते प्रसन्नश्चेदधुना तत्क गच्छति ॥ ४१ ॥
सर्वार्थसिद्धे यातीति शशंस भगवानपि । द्विधा किं [1]व्याकरणमित्यपृच्छच्छ्रेणिकोऽप्यथ ॥ ४२ ॥
स्वाम्यूचे ध्यानभेदेन द्विधा व्याकरणं ह्यदः । तदा हि दुर्मुखगिरा प्रसन्नः कुपितः खलु ॥ ४३ ॥
जातामर्षश्च सामन्तामात्याद्यैः सह चेतसा । युध्यमानस्त्वयाऽवन्दि तदा स नरकोचितः ॥ ४४ ॥
[2]त्वय्यायातेऽत्र सोऽमंस्त यत् क्षीणान्यायुधानि मे । हन्मि शत्रुं शि[3]रस्त्रेणेत्य[4]धिमूर्धं न्यधात्करम् ॥ ४५ ॥
कृतलुञ्चं स्पृशन्मौलिं प्रतिबुद्धः स्मरन् व्रतम् । अकार्यं धिङ्मयारब्धमित्यादि स्वं निनिन्द सः ॥ ४६ ॥
आलोचितप्रतिक्रान्तः प्रशस्तध्यानमागतः । सर्वार्थसिद्धयोग्योऽभूत्तव प्रश्ने द्वितीयके ॥ ४७ ॥
तत्रान्तरे च प्रसन्नचन्द्रर्षिसविधेऽभवत् । देवदुन्दुभिनिर्घोषमिश्रः कलकलो महान् ॥ ४८ ॥
स्वामिन् किमिदमित्युक्ते श्रेणिकेनावदद्विभुः । तस्य ध्यानान्तरस्थस्येदानीमजनि केवलम् ॥ ४९ ॥
तस्य केवलिमहिमामिमां कुर्वन्ति नाकिनः । प्रमोदतुमुलस्तेषां दुन्दुभिध्वानवानयम् ॥ ५० ॥
भूयोऽपि श्रेणिकनृपो बभाषे भगवन्निह । कुत्रेदं केवलज्ञानं व्युच्छेदमुपयास्यति ॥ ५१ ॥
तदागाद्ब्रह्मलोकेन्द्रसामानिको महाद्युतिः । विद्युन्माली प्रभुं नन्तुं चतुर्देवीसमन्वितः ॥ ५२ ॥
तं दर्शयन् स्वाम्युवाचोच्छेत्स्यते ह्यत्र केवलम् । भूयोऽपि श्रेणिकोऽपृच्छत् किं स्याद्देवेषु केवलम् ॥५३॥
स्वाम्यथाख्यदसौ च्युत्वा सप्तमेऽह्नि भविष्यति । आढ्यस्यर्षभदत्तस्य सूनुस्त्वत्पुरवासिनः ॥ ५४ ॥

---

१ व्याख्यानमुत्तरमिति यावत् । २ त्वय्यत्रायाते सति । ३ शिरस्त्राणेन मौलिनेति यावत् । ४ मूर्धनीत्यधिमूर्धम् ।

भावी जंबाख्यया शिष्यो मच्छिष्यस्य सुधर्मणः । ततो नाग्रे[1]सरमसावर्जयिष्यति केवलम् ॥ ५५ ॥
राजापृच्छत्पुनर्नाथ[2]मासन्नच्यवनोऽप्यसौ । कस्मान्न मन्दतेजस्को देवा ह्यन्तेऽल्पतेजसः ॥ ५६ ॥
स्वाम्यूचे सांप्रतमयं मन्दतेजाः सुरः खलु । अस्य तेजः पूर्वपुण्यैरत्युत्कृष्टं पुरा ह्यभूत् ॥ ५७ ॥
एवमाख्याय भगवान् सर्वभाषानुषा गिरा । विदधे दुरितप्रत्यादेशनीं धर्मदेशनाम् ॥ ५८ ॥
तदा कुष्ठगलत्कायः कश्चिदेत्य प्रणम्य च । निषसादोपतीर्थेशमल[3]र्क इव कुट्टिमे ॥ ५९ ॥
ततो भगवतः पादौ नि[4]जपूयरसेन सः । निःशंकश्चन्दनेनेव चर्चयामास भूयसा ॥ ६० ॥
तद्वीक्ष्य श्रेणिकः क्रुद्धो दध्यौ वध्योऽयमुत्थितः । पापीयान् यद्भगभर्तर्येवमाशातनापरः ॥ ६१ ॥
अत्रान्तरे जिनेन्द्रेण क्षुते प्रोवाच कुष्ठिकः । म्रियस्वेत्यथ जीवेति श्रेणिकेन क्षुते सति ॥ ६२ ॥
क्षुतेऽभयकुमारेण जीव वा त्वं म्रियस्व वा । कालसौकरिकेणापि क्षुते मा जीव मा मृथाः ॥ ६३ ॥
जिनं प्रति म्रियस्वेति वचसा रु[5]षितो नृपः । इतः स्थानादुत्थितोऽसौ ग्राह्य इत्यादिशद्भटान् ॥ ६४ ॥
देशनान्ते महावीरं नत्वा कुष्ठी समुत्थितः । रुरुधे श्रेणिकभटैः कि[6]रातैरिव सूकरः ॥ ६५ ॥
स तेषां पश्यतामेव दिव्यरूपधरः क्षणात् । उत्पपाताम्बरे कुर्वन्नर्कबिंबविडंबनाम् ॥ ६६ ॥
पत्तिभिः कथिते राज्ञा स कः कुष्ठीति विस्मयात् । श्वो[7] विज्ञसः प्रभुस्तस्मै देवः स इति शस्तवान् ॥ ६७ ॥
पुनर्विज्ञपयामास सर्वज्ञमिति भूपतिः । देवः कथमभूदेष कुष्ठी वा केन हेतुना ॥ ६८ ॥

---

१ नास्ति अग्रेसरः यस्य तत् ततोऽग्रे न कोपि केवल लप्स्यते इत्यर्थः । २ आसन्नं च्यवनं च्युतिर्यस्य सः । ३ अलर्कः तन्नामरोगेण मत्तः श्वा । ४ स्वकुष्ठरसेन । ५ क्रुद्धः । ६ भिल्लैः । ७ आगामिदिने ।

अथोचे भगवानेवमस्ति विश्वेषु विश्रुता । कौशाम्बी नाम पूस्तस्यां शतानीकोऽभवन्नृपः ॥ ६९ ॥
तस्यां नगर्यामेकोऽभून्नामतः सेडुको द्विजः । सीमा सदा दरिद्राणां मूर्खाणामवधिः परः ॥ ७० ॥
गर्भिण्याभाणि सोऽन्येद्युर्ब्राह्मण्या सूतिकर्मणे । भट्टानय घृतं मह्यं सह्या न ह्यन्यथा व्यथा ॥ ७१ ॥
सोऽप्यूचे तां प्रिये नास्ति मम कुत्रापि कौशलम् । येन किंचिद्भजे क्वापि कलाग्राह्या यदीश्वराः[1] ॥७२॥
उवाच सा च तं भट्टं गच्छ याचस्व पार्थिवम् । पृथिव्यां पार्थिवादन्यो न कश्चित् कल्पपादपः ॥ ७३ ॥
तथेति प्रतिपद्यासौ नृपं पुष्पफलादिना । प्रवृत्तः सेवितुं विप्रो रत्नेच्छुरिव सागरम् ॥ ७४ ॥
कदाचिदथ कौशाम्बी चंपेशेनामितैर्बलैः । घनर्तुनेव मेघौघैररुध्यत समन्ततः ॥ ७५ ॥
सानीकोऽपि शतानीको मध्येकौशाम्बि तस्थिवान् । प्रतीक्षमाणः समयमन्तर्बिलमिवोरगः ॥ ७६ ॥
चंपाधिपोऽपि कालेन बहुना सन्नसैनिकः[2] । प्रावृषि स्वाश्रयं यातुं प्रवृत्तो राजहंसवत् ॥ ७७ ॥
तदा पुष्पार्थमुद्याने गतोऽपश्यच्च सेडुकः । तं क्षीणसैन्यं प्रत्यूषे निष्प्रभोडुमिवोडुपम्[3] ॥ ७८ ॥
तूर्णमेत्य शतानीकं व्यजिज्ञपदसाविदम्[4] । याति क्षीणबलस्तेऽरिश्छिन्नदंष्ट्र इवोरगः ॥ ७९ ॥
यद्यद्योत्तिष्ठसे तस्मै तदा ग्राह्यः सुखेन सः । बलीयानपि खिन्नः सन्नखिन्नेनाभिभूयते ॥ ८० ॥
तद्वचः साधु मन्वानो राजा सर्वाभिसारतः । निःससार शरासारसारनासीरदारुणः[5] ॥ ८१ ॥

---

१ यस्मात्कारणादीश्वरा धनाढ्याः कलाभिर्ग्राह्या भवति । २ नष्टसैनिकः । ३ प्रभारहितानि उडूनि नक्षत्राणि यस्य तमुडुपं चन्द्रमिव । ४ इदं व्यजिज्ञपदिति संटंकः । ५ शराणामासारो वृष्टिर्यस्मादेतादृश यत् सारभूतं नासीरमग्रसैन्यं तेन दारुणः ।

ततः पश्चादपश्यन्तो नेशुश्चंपेशसैनिकाः । अचिन्तिततन्निपाते को वीक्षितुमपि क्षमः ॥ ८२ ॥
चंपाधिपतिरेकांगः कांदिशीकः पलायितः । तस्य हस्त्यश्वकोशादि कौशाम्बीपतिरग्रहीत् ॥ ८३ ॥
हृष्टः प्रविष्टः कौशाम्बीं शतानीको महामनाः । उवाच सेडुकं विप्रं ब्रूहि तुभ्यं ददामि किम् ॥ ८४ ॥
विप्रस्तमूचे याचिष्ये पृष्ट्वा निजकुटुम्बिनीम् । पर्यालोचपदं[1] नान्यो गृहिणां गृहिणीं विना ॥ ८५ ॥
नष्टः प्रहृष्टो नष्टिन्यै तदशेषं शशंस सः । चेतसा चिन्तयामास सा चैवं बुद्धिशालिनी ॥ ८६ ॥
यद्यमुना ग्राहयिष्ये नृपाद्ग्रामादिकं तदा । करिष्यत्यपरान् दारान्मदाय विभवः खलु ॥ ८७ ॥
दिनं प्रत्येक[2] आलोचस्तथाग्रासनभोजनम् । दीनारो दक्षिणायां च याच्योऽश्चेत्यन्वशात्पतिम् ॥ ८८ ॥
ययाचे तत्तथा विप्रो राजादात्तद्वदन्निदम्[3] । कॅरकोऽब्धिमपि प्राप्य गृह्णात्यात्मोचितं पयः ॥ ८९ ॥
प्रत्यहं तत्तथा लेभे प्राप संभावनां च सः । पुंसां राजप्रसादो हि वितनोति महार्थताम् ॥ ९० ॥
राजमान्योऽयमित्येष लोकैर्नित्यं न्यमंत्र्यत । यस्य प्रसन्नो नृपतिस्तस्य कः स्यान्न सेवकः ॥ ९१ ॥
अग्रे भुक्तं वमयित्वा बुभुजेऽनेकशोऽपि सः । प्रत्यहं दक्षिणालोभाद्धिग्धिग्लोभो द्विजन्मनाम् ॥ ९२ ॥
उँपाचीयत विप्रः स विविधैर्दक्षिणाधनैः । प्रासरत् पुत्रपौत्राद्यैः पादैरिव वटद्रुमः ॥ ९३ ॥
स तु नित्यमजीर्णान्नवमनादूर्ध्वगै रसैः । आमैरन्नूद्दूषित्वगश्वत्थ इव लाक्षया ॥ ९४ ॥

१ विचारस्थानम् । २ दिन प्रति एक एकवार आलोचो दर्शन तथाऽग्रासन च भोजन चानयोः समाहारोऽग्रासनभोजनम् । ३ इद वदन् तत् विप्रयाचितमदात् । ४ घटः । ५ अवर्धत । ६ दूषिता त्वक् चर्म यस्य सः । ७ पिप्पलः ।

कुष्ठी क्रमेण संजज्ञे शीर्णघ्राणांघ्रिपाणिकः । तथैवान्वभुक्त राजाग्रे सोऽतृप्तो हव्यवाड्[1]िव ॥ ९५ ॥
एकदा मंत्रिभिर्भूपो विज्ञप्तो देव कुष्ठ्यसौ । संचरिष्णुः कुष्ठरोगो नास्य योग्यमिहाशनम् ॥ ९६ ॥
सन्त्यस्य नीरुजः पुत्रास्तेभ्यः कोऽप्यत्र भोज्यताम् । न्यंगित[2]प्रतिमायां हि स्थाप्यते प्रतिमान्तरम् ॥९७॥
एवमस्त्विति राज्ञोक्तेऽमात्यैर्विप्रस्तथोदितः । स्वस्थानेऽस्थापयत्पुत्रं गृहे तस्थौ स्वयं पुनः ॥ ९८ ॥
मधुमंरूकवल्लुभ्रमक्षिकाजालमालितः । पुत्रैर्गृहादपि वहिः कुटीरेऽक्षेपि स द्विजः ॥ ९९ ॥
जग्मुश्च तं भोजयितुं सजुगुप्साः स्नुषा[3] अपि । निष्ठीवुश्च वलद्ग्रीवं मोटनोत्पुटनासिकाः ॥ १०० ॥
वहिःस्थितस्य तस्याज्ञां पुत्रा अपि न चक्रिरे । दारुपात्रे ददुः किं तु शुनकस्येव भोजनम् ॥ १०१ ॥
अथ सोऽचिन्तयद्विप्रः श्रीमन्तोऽमी मया कृताः । एभिर्मुक्तोऽस्म्यनादृत्य तीर्णा[4]भोभिस्तरंडवत्[5] १०२
घोषयन्ति[6] न वाचापि रोपयन्त्येव मामपी । कुष्ठी रुष्टो नसंतुष्टोऽभव्य इत्यपलापितः ॥ १०३ ॥
जुगुप्सन्ते यथैते मां जुगुप्स्याः स्युरमी अपि । यथा तथा करिष्यामीत्यालोच्यावोचदात्मजान् ॥१०४॥
उद्विग्नो जीवितस्याहं कुलाचारस्त्वसौ सुताः । मुमूर्षुभिः कुटुंबस्य देयो मंत्रोक्षितः[7] पशुः ॥ १०५ ॥
पशुरानीयतामेक इत्याकर्ण्यानुमोदिनः । आनिन्यिरे तेऽथ पशुं पशुवन्मन्दबुद्धयः ॥ १०६ ॥
उद्वर्त्योद्वर्त्य च स्वांगमन्नेन व्याधिवर्तिकाः[8] । तेनाचारि पशुस्तावद्यावत् कुष्ठी बभूव सः ॥ १०७ ॥
ददौ विप्रः स्वपुत्रेभ्यस्तं हत्वा पशुमन्यदा । तदाशयमजानन्तो मुग्धा बुभुजिरे च ते ॥ १०८ ॥

---

१ अग्निरिव । २ खडितप्रतिमायाम् । ३ पुत्रवध्वः । ४ तीर्णमंभो जल यैस्तैः । ५ नौकावत् । ६ तोषयन्तीति पाठान्तरम् । ७ मन्त्रेणोक्षितः सिक्त. पवित्रित इति यावत् । ८ व्याधिनिवर्त्तकगात्रानुलेपनानि ।

तच्च द्वास्थभिया स्थानं त्यक्त्वा नागात् प्रपादिषु । स तु वारिचराञ्जीवान् धन्यान्मेने तृषातुरः ॥१२३॥
आरटन् वारि वारीति स तृषार्तो व्यपद्यत । इहैव नगरद्वारवाप्यामजनि दर्दुरः[1] ॥ १२४ ॥
विहरन्तो वयं भूयोऽप्यागमामेह पत्तने । लोकोऽस्मद्वन्दनार्थं च प्रचचाल ससंभ्रमः ॥ १२५ ॥
अस्मदागमनोदन्तं श्रुत्वांभहारिणीमुखात् । स भेकोऽचिन्तयदिदं क्वाप्येवं श्रुतपूर्व्यहम् ॥ १२६ ॥
ऊहापोहं ततस्तस्य कुर्वाणस्य मुहुर्मुहुः । स्वप्नस्मरणवज्जातिस्मरणं तत्क्षणादभूत् ॥ १२७ ॥
स दध्यौ दर्दुरश्चैवं द्वारे संस्थाप्य मां पुरा । द्वाःस्थो यं वन्दितुमगात् स आगाद्भगवानिह ॥ १२८ ॥
यथैते यान्ति तं द्रष्टुं लोका यास्याम्यहं तथा । सर्वसाधारिणी गंगा न हि कस्यापि पैतृकी ॥ १२९ ॥
ततोऽस्मद्वन्दनाहेतोरुत्प्लुत्योत्प्लुत्य सोऽध्वनि । आयांस्ते[2]ऽश्वखुरक्षुण्णो भेकः पंचत्वमाप्तवान् ॥ १३० ॥
दर्दुरांकोऽयमुत्पेदे देवोऽस्मद्भक्तिभावितः । भावना हि फलत्येव विनानुष्ठानमप्यहो ॥ १३१ ॥
इन्द्रः सदस्युवाचेदमुप[3]श्रेणिकमार्हताः । अश्रद्दधानस्तदसौ त्वत्परीक्षार्थमागतः ॥ १३२ ॥
गोशीर्षचन्दनेनायमार्चयच्चरणौ मम । त्वद्दृष्टिमोहनायान्यत्सर्वं व्यधित वैक्रियम् ॥ १३३ ॥
अथोचे श्रेणिकः स्वामिन्नमंगल्यं प्रभोः क्षुते । एषोऽन्येषां तु मंगल्यामंगल्यानि किमभ्यधात् ॥१३४॥
अथाचचक्षे भगवान् किं भवेऽद्यापि तिष्ठसि । शीघ्रं मोक्षं प्रयाहीति मां म्रियस्वेति सोऽवदत्॥१३५॥
स त्वामवोचज्जीवेति जीवतस्ते यतः सुखम् । नरके [4]नरशार्दूल मृतस्य हि गतिस्तव ॥ १३६ ॥

---

१ भेकः । २ आगच्छन् । ३ श्रेणिकाद्धीनाः । ४ हे पुरुषसिंह ।

जीवन् धर्मं विधत्ते स्याद्विमानेऽनुत्तरे मृतः । जीव म्रियस्व वेत्येवं तेनाभयमभाषत ॥ १३७ ॥
जीवन् पापपरो मृत्वा सप्तमं नरकं व्रजेत् । कालसौकरिकस्तेन प्रोक्तो मा जीव मा मृथाः ॥ १३८ ॥
तच्छ्रुत्वा श्रेणिको नत्वा भगवन्तं व्यजिज्ञपत् । त्वयि नाथे जगन्नाथ कथं मे नरके गतिः ॥ १३९ ॥
बभाषे भगवानेवं पुरा त्वमसि भूपते । बद्धायुर्नरके तेन तत्रावश्यं गमिष्यसि ॥ १४० ॥
शुभानामशुभानां वा फलं प्राग्बद्धकर्मणाम् । भोक्तव्यं तद्वयमपि नान्यथा कर्तुमीश्महे ॥ १४१ ॥
आद्यो भाविजिनचतुर्विंशतौ त्वं भविष्यसि । पद्मनाभाभिधो राजन् खेदं मा स्म कृथास्ततः ॥ १४२ ॥
श्रेणिकोऽप्यवदन्नाथ किमुपायोऽस्ति कोऽपि सः । नरकाद्येन रक्ष्येऽहमन्धकूपादिवान्धलः ॥ १४३ ॥
भगवान् व्याजहारेदं साधुभ्यो भक्तिपूर्वकम् । ब्राह्मण्या चेत् कपिलया भिक्षां दापयसे मुदा ॥ १४४ ॥
कालसौकरिकेणाथ सूना[1] मोचयसे यदि । तदा ते नरकान्मोक्षो राजञ्जायेत नान्यथा ॥ १४५ ॥
सम्यगित्युपदेशं स हृदि हारमिवोद्वहन् । प्रणम्य श्रीमहावीरं चचाल स्वाश्रयं प्रति ॥ १४६ ॥
अत्रान्तरे परीक्षार्थं दर्दुरांकेन भूपतेः । अकार्यं विदधत्साधुः कैवर्त[2] इव दर्शितः ॥ १४७ ॥
तं दृष्ट्वा प्रवचनस्य मालिन्यं मा स्म भूदिति । निवार्याकार्यतः साम्ना स्वगृहं प्रत्यगान्नृपः ॥ १४८ ॥
स देवो दर्शयामास साध्वीमुदरिणीं[3] पुनः । नृपः शासनभक्तस्तां जुगोप निजवेश्मनि ॥ १४९ ॥
प्रत्यक्षीभूय देवोऽपि तमूचे साधु साधु भोः । सम्यक्त्वाच्चाल्यसे नैव पर्वतः स्वपदादिव ॥ १५० ॥
नृनाथ यादृशं शक्रः सदसि त्वामवर्णयत् । दृष्टस्तादृश एवासि मिथ्यावाचो न तादृशाः ॥ १५१ ॥

---

१ हिंसा । २ धीवरः । ३ गर्भिणीम् ।

दिवा निर्मितनक्षत्रश्रेणिकं श्रेणिकाय सः । व्यश्राणयत्[1] ततो हारं गोलकद्वितयं तथा ॥ १५२ ॥
योऽमुं संधास्यते हारं त्रुटितं स मरिष्यति । इत्युदीर्य तिरोधत्त स्वप्नदृष्ट इवामरः ॥ १५३ ॥
दिव्यं देव्यै ददौ हारं चेलणायै-मनोहरम् । गोलकद्वितयं तत्तु नन्दायै नृपतिर्मुदा ॥ १५४ ॥
दानस्यास्यास्मि योग्येति सेर्ष्यं नन्दा मनस्विनी । आस्फाल्य स्फोटयामास स्तंभे तद्गोलकद्वयम् ॥१५५॥
एकस्मात् कुंडलद्वंद्वं चन्द्रद्वंद्वमिवामलम् । देदीप्यमानमन्यस्मात् क्षौमयुग्मं च निःसृतम् ॥ १५६ ॥
तानि दिव्यानि रत्नानि नन्दा सानन्दमग्रहीत् । अनभ्रवृष्टिवद्भाग्यो महतां स्यादचिन्तितः ॥ १५७ ॥
राजा ययाचे कपिलां साधुभ्यः श्रद्धयान्विता । भिक्षां प्रयच्छ निर्भिक्षां[2] त्वां करिष्ये धनोच्चयैः ॥१५८॥
कपिलोचे विधत्से मां सर्वां स्वर्णमयीं यदि । हिनस्सि वा तथाप्येतदकृत्यं न करोम्यहम् ॥ १५९ ॥
कालसौकरिकोऽप्यूचे राज्ञा सूनां विमुञ्च यत् । दास्येऽर्थं बहुमर्थस्य लोभात्त्वमसि शौनिकः ॥ १६० ॥
सूनायां ननु को दोषो यया जीवन्ति मानवाः । तां न जातु त्यजामीति कालसौकरिकोऽवदत् ॥१६१॥
सूनाव्यापारमेषोऽत्र करिष्यति कथं न्विति । नृपः क्षिप्त्वान्धकूपे तमहोरात्रमधारयत् ॥ १६२ ॥
अथ विज्ञापयामास गत्वा भगवते नृपः । सोऽत्याजि शौनिकः सूनामहोरात्रमिदं विभो ॥ १६३ ॥
सर्वज्ञोऽभिदधे राजन्नन्धकूपेऽपि सोऽवधीत् । शतान् पञ्च महिषाणां स्वयं निर्माय मृन्मयान् ॥१६४॥
तज्ज्ञात्वा श्रेणिकोऽपश्यत् स्वयमुद्विविजे[3] ततः । धिगहो मे पुराकर्म नान्यथा भगवद्गिरः ॥ १६५ ॥

---

१ अयच्छत् । २ भिक्षावृत्तिरहिता धनाढ्यामिति यावत् नितरा भिक्षा भोजन यस्यास्तामिति वा । ३ उद्वेग प्राप्तः ।

योऽष्टापदे जिनान्नत्वा वसेद्रात्रिं स सिध्यति । भवेऽत्रैवेत्यर्हदुक्तं वक्तून् सोऽथास्मरत्सुरान् ॥ १८१ ॥
देवतावाक्प्रत्ययेन तदानीं गौतमो मुनिः । इयेषाष्टापदं गन्तुं तीर्थकृद्वन्दनाकृते ॥ १८२ ॥
तदिच्छां तापसंबोधं चार्हन् विज्ञाय भाविनम् । आदिदेशाष्टापदेऽर्हद्वन्दनायाथ गौतमम् ॥ १८३ ॥
इच्छानुरूपस्वाम्याज्ञामुदितो गौतमो मुनिः । वायुवच्चारणलब्ध्या क्षणादष्टापदं ययौ ॥ १८४ ॥
इतश्चाष्टापदं मोक्षहेतुं श्रुत्वा तपस्विनः । कौडिन्यदत्तसेवाला आरोढुं समुपस्थिताः ॥ १८५ ॥
चतुर्थकृत्सदाप्याद्य आर्द्रकन्दादिपारणः[1] । प्रापाद्यां मेखलां सार्धं पञ्चशत्या तपस्विनाम् ॥ १८६ ॥
द्वितीयः षष्ठकृत्प्राप शुष्ककन्दादिपारणः । द्वितीयां मेखलां सार्धं पञ्चशत्या तपस्विनाम् ॥ १८७ ॥
तृतीयोऽष्टमकृत्प्राप शुष्कसेवालपारणः । तृतीयां मेखलां सार्धं पञ्चशत्या तपस्विनाम् ॥ १८८ ॥
ऊर्ध्वमारोढुमसहास्ते तस्थुर्यावदुन्मुखाः । ददृशुर्गौतमं तावत् स्वर्णाभं पीवराकृतिम्[2] ॥ १८९ ॥
ते मिथः प्रोचिरे शैलं वयमेतं कृशा अपि । न रोढुमीश्महे स्थूल आरोक्ष्यत्येष तत्कथम् ॥ १९० ॥
एवं तेषु ब्रुवाणेषु गौतमस्तं महाचलम् । समारुरोह जज्ञे चादृश्यः सुर इव क्षणात् ॥ १९१ ॥
तेऽन्योऽन्यं जगदुः शक्तिर्महर्षेरस्य काप्यसौ । यद्यायास्यत्यसौ शिष्यीभविष्यामोऽस्य तद्वयम् ॥१९२॥
निश्चित्यैवं तापसास्ते प्रत्यायान्तं स्वबन्धुवत् । आवद्धरणरणकाः[3] प्रतीक्षन्ते स्म सादरम् ॥ १९३ ॥
गौतमोऽपि ययौ चैत्यं भरतेश्वरकारितम् । नन्दीश्वरस्थचैत्याभं चतुर्विंशज्जिनांकितम् ॥ १९४ ॥
अवन्दिष्टार्हतां तत्र स चतुर्विंशतेरपि । बिंबान्यप्रतिबिम्बानि[4] भक्त्या परमया युतः ॥ १९५ ॥

१ आर्द्रकन्दादिः पारणे यस्य सः । २ पुष्टशरीरम् । ३ आवद्धो रणरणक उद्वेगो यैस्ते । ४ अनुपमानि ।

उपाविशद्वन्द्यमानः सुरासुरनरेश्वरैः ॥ १९६ ॥
निर्गत्य गौतमश्चैत्यात्तलेऽशोकमहातरोः । उपाविशद्वन्द्यमानः सुरासुरनरेश्वरैः केवलीति [2]तैः ॥ १९७ ॥
चक्रे च गौतमस्तेषां [1]यथार्हं धर्मदेशनाम् । संदेहांश्चाछिदत् पृष्टस्तर्कितः केवलीति तैः ॥ १९८ ॥
देशनां कुर्वता तेन प्रस्तावादिदमौच्यत । अस्थिचर्मावशिष्टांगाः किटिकिटितसंधयः ॥ १९९ ॥
ग्लानिभाजो ब्रुवन्तोऽपि जीव[3]सत्त्वेन गामिनः । तपोभिरुग्रैरीदृक्षा भवन्ति खलु साधवः ॥ २०० ॥
तत्तु श्रुत्वा वैश्रवणस्तस्य स्थौल्यं विभावयन् । स्वस्मिन्नपि विसंवादि वचोऽस्येत्यहसन्मनाक् ॥ २०१ ॥
इन्द्रभूतिर्मनोज्ञानी ज्ञात्वा तद्भावमब्रवीत् । नांगका[4]र्श्यं प्रमाणं स्यात् किं त्वहो ध्याननिग्रहः ॥ २०२ ॥
तथाहि जंबूद्वीपेऽस्मिन्महाविदेहभूषणे । विजये पुष्कलावत्यामस्ति पूः पुंडरीकिणी ॥ २०३ ॥
महापद्मो नृपस्तत्र तस्य पद्मावती प्रिया । पुंडरीककंडरीकौ तयोः पुत्रौ बभूवतुः ॥ २०४ ॥
अन्यदा नलिनवनोपवने समुपेयुषाम् । साधूनां सन्निधौ धर्मं महापद्मनृपोऽशृणोत् ॥ २०५ ॥
न्यस्य राज्ये पुंडरीकं महापद्मोऽग्रहीद्व्रतम् । उत्पन्नकेवलः कर्मक्षयान्मोक्षमगात् क्रमात् ॥ २०६ ॥
साधवः पुंडरीकिण्यां तेऽन्यदा पुनराययुः । पुंडरीककंडरीकौ धर्मं शुश्रुवतुस्ततः ॥ २०७ ॥
तत्र भावयतिर्भूत्वा पुंडरीको गृहं ययौ । समक्षं मंत्रिणां चैवं कंडरीकमभाषत ॥ २०८ ॥
इदं वत्स त्वमादत्स्व राज्यं पैतृकमुच्चकैः । भवाद्भीतो ग्रहीष्यामि दीक्षां तद्भयरक्षिणीम् ॥ २०९ ॥
प्रत्यूचे कंडरीकोऽपि किं पातयसि मां भवे । तदहं प्रव्रजिष्यामि तरिष्यामि भवार्णवम् ॥ २०९ ॥

१ यथायोग्यम् । २ तै. सुरादिभिरय गौतमः केवलीति तार्कितः स पृष्टः सन् सदेहानच्छिददितिसबधः । ३ जीवस्यास्तित्वेन गामिनो गतियुक्ताः । ४ कृशस्य भावः कार्श्यम् ।

ततो द्वित्रिश्च राज्यार्थे राज्ञोक्तं नाकरोद्यदा । तदा व्रतेऽनुजज्ञे[1] स शिष्टश्चैवं हितैषिणा ॥ २१० ॥
दुर्जयानीन्द्रियाणीह चंचलं च सदा मनः । विकारधाम तारुण्यं प्रमादः सहजो नृणाम् ॥ २११ ॥
परीषहोपसर्गाश्च दुःसहा वत्स तत्त्वया । नाव्यं दृढप्रतिज्ञेन प्रव्रज्या दुष्करा खलु ॥ २१२ ॥
यदि वा श्रावकधर्मं राज्यं च परिपालय । अतीते यौवने दीक्षामाददीथास्तदोचिताम् ॥ २१३ ॥
कंडरीकोऽप्युवाचैवं सत्यमेतत्तथापि हि । प्रजल्पितं[2] विधातव्यं प्रव्रजिष्यामि निश्चितम् ॥ २१४ ॥
प्राव्राजीत् कंडरीकोऽथ पुंडरीकस्तु नृपतिः । व्रतान्निषिद्धः सचिवैस्तस्थौ भावयतिर्गृहे ॥ २१५ ॥
कंडरीकोऽपि विविधैस्तपोभिः क्लिष्टविग्रहः । सामाचारीपालनतः साधूनामभवत् प्रियः ॥ २१६ ॥
वसन्तसमयेऽन्येद्युर्जृम्भमाणे मनोऽचलत् । महर्षेः कंडरीकस्य चारित्रावरणोदयात् ॥ २१७ ॥
अचिन्तयच्च पर्याप्तं मम प्रव्रज्ययानया । गत्वा राज्यमुपादास्ये भ्रात्रा दत्तं पुरापि यत् ॥ २१८ ॥
इत्यगात्पुंडरीकिण्यां स्थित्वोद्याने तरौ क्वचित् । पात्राद्यालम्ब्य[3] हरितस्रस्तरे[4] शीतलेऽलुठत् ॥ २१९ ॥
उद्यानपालेनात्मानं स[5] राज्ञेऽज्ञापयद्द्रुतम् । सप्रधानो नृपस्तत्राभ्यागत्य तमवन्दत ॥ २२० ॥
वृद्धवस्त्रोपकरणो हरित्कायस्थ[6] एककः । मन्येऽसौ व्रतनिर्विण्ण इति ज्ञात्वाब्रवीन्नृपः ॥ २२१ ॥
भो भोः सर्वे स्मरथ किं यन्मे वारयतोऽमुना । तदा गृहीतं श्रामण्यं बालेन रभसावशात् ॥ ॥ २२२ ॥

१ अनुमेने । २ मया यत्प्रजल्पितं कथितं तद्विधातव्यं कर्तव्यमेवेत्यर्थः । ३ पात्रादि क्वचित्तरावालंब्य संबध्य । ४ आर्द्रतृणसस्तरके । ५ स कंडरीक उद्यानपालेनात्मानं स्वागमनमज्ञापयत् । ६ वनस्पतिकायेषु स्थितः ।

इत्युदित्वा पुंडरीकः कंडरीकं तदर्थिते[1] । राज्ये निवेशयामास राज्यचिह्नानि चार्पयत् ॥ २२३ ॥
पुंडरीकनृपस्तस्माद्यतिलिंगान्युपाददे । स्वयमात्तपरिव्रज्यः शुद्धधीर्व्यहरत्ततः ॥ २२४ ॥
भग्नव्रतः कृशो रंक इवान्नार्थीति सेवकैः । हस्यमानः कंडरीकश्चुकोप हृदयेऽधिकम् ॥ २२५ ॥
भुञ्जेऽहं प्रथमं तावत्पश्चादेषां प्रहासिनाम् । करिष्यामि वधादीति चिन्तयन् स गृहे ययौ ॥ २२६ ॥
जघन्यमध्यमोत्कृष्टस्त्रिधाहारो यदृच्छया । प्रातः कपोतयूनेव तेनाकंठमभुज्यत ॥ २२७ ॥
भोगजागरणान्मात्रावत्याहाराच्च दुर्जरात् । जज्ञे विसूचिका तस्य महत्यरतिरप्यभूत् ॥ २२८ ॥
उत्फुल्लमुदरं तस्य भस्त्रेवानिलपूरिता । निरुद्धः पवनस्तृष्णादाहश्च समभून्महान् ॥ २२९ ॥
भ्रष्टप्रतिज्ञः पापोऽसाविति ध्यात्वा नियोगिभिः । अकारितचिकित्सोऽथ सोऽर्तिमानित्यचिन्तयत् २३०
कथंचिद्यद्यमूं रात्रिमत्येष्यामि तदा प्रगे । सकुटुम्बान् हनिष्यामि सर्वानेतान्नियोगिनः ॥ २३१ ॥
एवं च कृष्णलेश्यावान् रौद्रध्यानी व्यपादि सः । उदपाद्यप्रतिष्ठाने नारकः सप्तमावनौ ॥ २३२ ॥
दिष्ट्या चिरेष्टो लब्धो यो धर्मस्तं गुरुसाक्षिकम् । करोमीति पुंडरीकोऽप्यचालीत् सद्गुरुं प्रति ॥ २३३ ॥
समीपे सुगुरोर्गत्वा पुनरादाय स व्रतम् । पारणामष्टमस्यान्ते पुंडरीकमुनिर्व्यधात् ॥ २३४ ॥
अतिवेलैः[2] शीतरूक्षैराहारैः पीडितो मृदुः । भूचार[3]विगलत्पादासृगुद्भूतपरिश्रमः ॥ २३५ ॥
याचित्वोपाश्रयं ग्रामे निषण्णस्तृणसंस्तरे । गुर्वन्ते प्रव्रजिष्यामि कदा न्विति विचिन्तयन् ॥ २३६ ॥

१ तेन कडरीकेण प्रार्थिते । २ समयातिक्रान्तैः । ३ भुवि चलनेन विगलत्पादाभ्यां निर्गतशोणितेन जातश्रमः ।

विहिताराधनः सम्यक् शुक्लध्यानपरायणः । पीनांगोऽपि विपन्नः सन् स सर्वार्थमुपेयिवान् ॥ २३७ ॥

॥ त्रिभिर्विशेषकम् ॥

तत्पीनत्वं कृशत्वं वा न प्रमाणं तपस्विनाम् । शुक्लध्यानं हि परमपुरुषार्थनिबन्धनम् ॥ २३८ ॥
एतदर्थं पुंडरीकाध्ययनं गौतमोदितम् । जग्राहैकसंस्थयापि[1] श्रीदसामानिकः सुरः ॥ २३९ ॥
प्रतिपेदे स सम्यक्त्वं नत्वा वैश्रवणः पुनः । स्वाभिप्रायपरिज्ञानान्मुदितः स्वाश्रयं ययौ ॥ २४० ॥
एवं देशनया स्वामी गौतमोऽतीत्य तां निशाम् । प्रभाते चोत्तरन् शैलात्तापसैस्तैरदृश्यत ॥ २४१ ॥
तापसास्तं प्रणम्योचुर्महात्मंस्तपसां निधे । तव शिष्यीभविष्यामस्त्वमस्माकं गुरुर्भव ॥ २४२ ॥
तानूचे गौतमस्वामी गुरुर्मे परमेश्वरः । सर्वज्ञोऽर्हन्महावीरः स एव गुरुरस्तु वः ॥ २४३ ॥
अथ तानाग्रहपरान् दीक्षयामास गौतमः । सद्यो देवतया तेषां यतिलिंगं समर्पितम् ॥ २४४ ॥
गौतमेन समं चेलुर्गन्तुं ते स्वामिनोऽन्तिके । सह यूथाधिपतिना विन्ध्याद्रौ कुञ्जरा इव ॥ २४५ ॥
पथ्येकस्मिन् सन्निवेशे भिक्षाकाले गणाग्रणीः । किं वः पारणकायेष्टमानयामीत्युवाच तान् ॥ २४६ ॥
तैश्च पायसमित्युक्ते गौतमो लब्धिसंपदा । स्वकुक्षिपूरणमात्रं पात्रे कृत्वा तदानयत् ॥ २४७ ॥
इन्द्रभूतिर्बभाषे तान्निषीदत महर्षयः । पायसेनामुना यूयं सर्वे कुरुत पारणम् ॥ २४८ ॥
पायसेनेयता किं स्यात्तथापि गुरुरेष नः । एवं विमृश्य ते सर्वे मुनयः समुपाविशन् ॥ २४९ ॥
तान्महानसलब्ध्येन्द्रभूतिः सर्वानभोजयत् । स्वयं तु बुभुजे पश्चात्तेषां जनितविस्मयः ॥ २५० ॥

१ एकनिष्ठया ।

दिष्ट्या धर्मगुरुर्वीरः प्राप्तोऽस्माभिर्जगद्गुरुः । पितृकल्पो मुनिश्चैष बोधिश्चात्यन्तदुर्लभा ॥ २५१ ॥
सर्वथा कृतपुण्याः स्म इति भावयतामभूत् । भुञ्जानानां केवलं प्राक् तत्र सेवालभक्षिणाम् ॥ २५२ ॥
॥ युग्मम् ॥

जज्ञे च प्रातिहार्याणि[1] दत्तादीनां प्रपश्यताम् । कौण्डिन्यादीनां श्रीवीरं केवलज्ञानमुज्ज्वलम् ॥ २५३ ॥
प्रभुं प्रदक्षिणीकृत्य तेऽगुः केवलिपर्षदि । वन्दध्वं स्वामिनमिति तानभाषिष्ट गौतमः ॥ २५४ ॥
केवल्याशातनां मा स्म कार्षीरित्यवदत्प्रभुः । मिथ्यादुष्कृतपूर्वं तान् क्षमयामास गौतमः ॥ २५५ ॥
भूयोऽपि गौतमो दध्यौ सेत्स्याम्यत्र भवे न हि । गुरुकर्माहमेते तु धन्या मद्दीक्षिता अपि ॥ २५६ ॥
उत्पेदे केवलज्ञानं येषामेषां महात्मनाम् । एवं विचिन्तयन्तं तं भगवानित्यभाषत ॥ २५७ ॥
॥ युग्मम् ॥

किं सुराणां वचस्तथ्यं जिनानामथ गौतम । जिनानामिति तेनोक्ते मा कार्षीरधृतिं ततः ॥ २५८ ॥
तृण[2]द्विदलचर्मोर्णाकटतुल्या भवन्ति हि । स्नेहा गुरुषु शिष्याणां तवोर्णाकटसन्निभः ॥ २५९ ॥
अस्मासु चिरसंसर्गात् स्नेहो दृढतरस्तव । तेन रुद्धं केवलं ते तदभावे भविष्यति ॥ २६० ॥
गौतमस्य प्रबोधार्थमन्येषां चानु[3]शिष्टये । व्याकरोद्द्रुमपत्रीयाध्ययनं परमेश्वरः ॥ २६१ ॥
अत्रान्तरे जगद्भर्तुश्चरणोपासकः परः । परिव्राट्स्कंदकस्तत्राययौ छत्री त्रिदंडभृत्॥ २६२ ॥

---

१ प्रातिहार्याणि पश्यतां दत्तादीना श्रीवीर च पश्यता कौंडिन्यादीना केवलज्ञान जज्ञे इत्यन्वयः । २ तृण च द्विदलं च चर्म च उर्णाकट. उर्णानिर्मितकटस्तैस्तुल्याः समानाः । ३ शिक्षायै ।

स त्रिः प्रदक्षिणीकृत्य प्रणम्य च जिनेश्वरम् । रोमाञ्चितवपुर्भक्त्या रचिताञ्जलिरस्तवीत् ॥ २६३ ॥
तव चेतसि वर्तेऽहमिति वार्तापि दुर्लभा । मच्चित्ते वर्तसे चेत्त्वमलमन्येन केनचित् ॥ २६४ ॥
निगृह्य कोपतः कांश्चित् कांश्चित्तुष्ट्यानुगृह्य च । प्रतार्यन्ते मृदुधियः प्रलम्भनपरैः परैः ॥ २६५ ॥
अप्रसन्नात् कथं प्राप्यं फलमेतदसंगतम् । चिन्तामण्यादयः किं न फलन्त्यपि विचेतनाः ॥ २६६ ॥
वीतरागसपर्यापि तवाज्ञापालनं परम् । आज्ञाराद्धा[1] विराद्धा च शिवाय च भवाय च ॥ २६७ ॥
आकाल[2]मियमाज्ञा ते हेयोपादेयगोचरा । आश्रवः सर्वथा हेय उपादेयश्च संवरः ॥ २६८ ॥
आश्रवो भवहेतुः स्यात्संवरो मोक्षकारणम् । इतीयमार्हती मुष्टिरन्यदस्याः प्रपंचनम्[3] ॥ २६९ ॥
इत्याज्ञाराधनपरा अनन्ताः परिनिर्वृताः । निर्वान्ति[4] चान्ये क्वचन निर्वास्यंति तथापरे ॥ २७० ॥
हित्वा प्रसादनादैन्यमेकयैव[5] त्वदाज्ञया । सर्वथैव विमुच्यन्ते जन्मिनः कर्मपञ्जरात् ॥ २७१ ॥
एवं जगद्गुरुं स्तुत्वा यथास्थानं निपद्य च । देशनां स्वामिनोऽश्रौषीत् स्वर्वासीवानिमेषदृक् ॥ २७२ ॥
देशनान्ते प्रभुं नत्वा यावद्राजगृहं प्रति । अचालीदंबडस्तावदित्यूचे स्वामिना स्वयम् ॥ २७३ ॥
तत्र नागरथिपत्न्याः सुलसायास्त्वमादरात् । प्रवृत्तिमस्मदादेशात् पृच्छेः पेशलया[6] गिरा ॥ २७४ ॥
इच्छामीति भणित्वा स व्योम्ना राजगृहं ययौ । सुलसाया गृहद्वारे स्थित्वा चैवमचिन्तयत् ॥ २७५ ॥
सुरासुरनरेन्द्राणां पश्यतां त्रिजगत्पतिः । सुलसापक्षपाती किं करिष्ये तत्परीक्षणम् ॥ २७६ ॥

---

१ आराधिताज्ञा मोक्षाय विराधिता च भवाय भवति। २ कालपर्यन्त यावज्जीवमितियावत्। ३ विस्तारः । ४ निर्वाण यान्ति। ५ प्रभोः प्रसादनाय यद्दैन्यं तत्त्यक्त्वा । ६ कोमलया ।

सुलसापि बभाषे तं न खल्वेष जगद्गुरुः । भगवान् श्रीमहावीरश्चतुर्विंशो जिनेश्वरः ॥ २९२ ॥
सोऽपि च प्रत्युवाचैवं मुग्धे नन्वेष वर्तते । पंचविंशस्तीर्थकरः प्रत्यक्षमपि वीक्ष्यताम् ॥ २९३ ॥
सुलसाप्यब्रवीज्जातु पंचविंशो जिनो न हि । अयं कार्पटिकः कोऽपि लोकं वञ्चयते कुधीः ॥ २९४ ॥
सोऽप्यूचे मा कृथा भेदं शासनस्य प्रभावना । भद्रे भवत्येहि तत्र का ते हानिर्भविष्यति ॥ २९५ ॥
अवदत्सुलसाप्येवं शासनस्य प्रभावना । नैवं भवत्यलीकेन किं त्वप्रभावनैव हि ॥ २९६ ॥
अचालितामेवमपि निरीक्ष्य सुलसां स्थिराम् । अंबडश्चिन्तयामास संजातप्रत्ययो हृदि ॥ २९७ ॥
स्थाने जगद्गुरुरमूं सभायां समभावयत् । अचालि तस्याः सम्यक्त्वं माययापि मया न हि ॥ २९८ ॥
ततः संहृत्य निःशेषं प्रपंचं सुलसागृहे । स्वेनैव रूपेणाविक्षद्वदन्नैषेधिकीति सः ॥ २९९ ॥
अभ्युत्तस्थौ सुलसा तमूचे च स्वागतं तव । धर्मबन्धो जगद्बन्धोर्वीरस्य श्रावकोत्तम ॥ ३०० ॥
पादौ प्रक्षालयामास तस्य मातेव वत्सला । निजानि गृहचैत्यानि वन्दयामास चोच्चकैः ॥ ३०१ ॥
स तच्चैत्यानि वन्दित्वा तामवोचत शुद्धधीः । नित्यानित्यानि चैत्यानि त्वं वन्दस्व गिरा मम ॥३०२॥
ववन्दे भूतलन्यस्तमौलिश्चैत्यानि तानि सा । प्रत्यक्षाणीव पश्यन्ती भक्तिभावितमानसा ॥ ३०३ ॥
स भूयः सुलसामूचे त्वमेका पुण्यवत्यसि । यस्या वार्तां स्वयं स्वामी मन्मुखेनाद्य पृच्छति ॥ ३०४ ॥
आकर्ण्य तद्वचः सापि ववन्दे मुदिता प्रभुम् । रोमाञ्चितशरीराथ तुष्टाव स्पष्टया गिरा ॥ ३०५ ॥
परीक्षितुमना भूयस्तामूचे चतुरोऽथ सः । ब्रह्मादयोऽत्रावतेरुर्धर्मं च व्याचचक्षिरे ॥ ३०६ ॥

---

१ भिक्षुकः । २ युक्तम् ।

## ॥ दशमः सर्गः ॥

इतश्च पुर्याश्चंपायाः सुरासुरसमावृतः । क्रमेण विहरन् प्राप दशार्णविषयं प्रभुः ॥ १ ॥

दशार्णपुरमित्यस्ति नाम्ना तत्र महापुरम् । दशार्णभद्र इत्यासीत्तत्र राजा महर्द्धिकः ॥ २ ॥

सभासीनं तदा सायं तमेत्योचुश्चरा इदम् । वीरो जिनपतिः प्रातः समेष्यति पुरेऽत्र ते ॥ ३ ॥

बभार तद्गिरा हृष्टो राजा रोमाञ्चकंचुकम् । विदूरः[1] स्तनितेनेव रत्नांकुरकदंबकम् ॥ ४ ॥

सभासमक्षमूचे च तथा ऋद्ध्या प्रगे प्रभुम् । वन्दिष्ये न यया कश्चिद्ववन्दे त्रिजगत्यपि ॥ ५ ॥

इत्युदित्वा च मंत्र्यादीन् विसृज्य सकलानपि । जगामान्तःपुरगृहं दशार्णपुरभूपतिः ॥ ६ ॥

वन्दिष्य एवमेवं च स्तोष्ये प्रातर्जगद्गुरुम् । इति चिन्तापरोऽनैषीत् कथंचिद्यामिनीं स ताम् ॥ ७ ॥

रवावनुदयत्येव[2] स पार्थिवरविस्ततः । आहूय नगराध्यक्षप्रभृतीनेवमादिशत् ॥ ८ ॥

मद्धाम्नः स्वामिसमवसरणस्य तथान्तरे । मद्यानयोग्यं कर्तव्यं सर्वर्द्ध्या मार्गभूषणम् ॥ ९ ॥

इतश्च तत्र भगवान् पुराद्बहिरुपाययौ । देवैश्च तत्र समवसरणं च व्यरच्यत ॥ १० ॥

तद्राजशासनं तेऽपि राजायुक्ताः क्षणाद्व्यधुः । वचसा भूभुजां सिद्धिर्मनसेव दिवौकसाम् ॥ ११ ॥

अशामि कुंकुमाम्भोभी[3] रजस्तद्राजवर्त्मनः । अकारि तन्मार्गमही पुष्पप्रकरदन्तुरा ॥ १२ ॥

स्थाने स्थाने व्यधीयन्त काञ्चनस्तंभतोरणाः । मञ्चाश्च सञ्चिताः स्वर्णभाजनश्रेणिशोभिताः ॥ १३ ॥

---

१ विदूरगिरिः स्तनितेन मेघगर्जनया वैदुर्यरत्नाकुरसमूहं बिभर्ति तद्वत् । २ रवौ सूर्येऽनुदयति सति । ३ कुंकुमजलैः ।

विचित्राश्चित्रक[1]त्वग्भिश्चीनवासोभिराचिताः । उद्भामरा[2]श्चामरैश्च रत्नादर्शैः सुदर्शनाः ॥ १४ ॥
उद्गन्धयो गन्धपुट[3]पुटिकाभिः सहस्रशः । स्रग्भिर्वर्त्मान्वितो न्यस्तैरबध्यन्त च मालिकाः ॥ १५ ॥
॥ युग्मम् ॥

उद्दंडैर्मंडपैर्मेघाडंबरश्रीविडंबिभिः । मुक्तो[4]च्चूलवदुल्लोचैरेकच्छायं व्यधीयत ॥ १६ ॥
पदे पदे मुमुचिरे धूपघट्यः सपावकाः[5] । निक्षिप्तागुरुकर्पूरधूमांकुरितमंडपाः ॥ १७ ॥
एवं दिवः[6] खंडमिव कृत्वा मार्गं नियोगिनः । राज्ञे व्यज्ञपयन् स्वामिदर्शनौत्सुक्यधारिणे ॥ १८ ॥
स्नात्वा राजापि दिव्यांगरागः सर्वांगभूषणः । शुचिवस्त्रधरः स्रग्वी गजमारोहदुत्तमम् ॥ १९ ॥
मूर्ध्नि श्वेतातपत्रेण चामराभ्यां च पार्श्वयोः । राजमानो राजवर्यः सुरराज इवाचलत् ॥ २० ॥
महार्घ्यभूषणधरैः सामन्ताद्यैः सहस्रशः । सोऽन्वगम्यत भूपालः स्वै रूपैरिव वैक्रियैः ॥ २१ ॥
सद्यस्तमनुचेलुश्च चलच्चामरराजिताः । परा[7]जितशचीरूपा अन्तःपुरमृगीदृशः ॥ २२ ॥
बन्दिवृन्दैः स्तूयमानो गीयमानश्च गायनैः[8] । दर्श्य[9]मानस्वविज्ञानो मार्गालंकारकारिभिः ॥ २३ ॥
निरन्तरैर्नृपच्छत्रैर्भवन्नूतनमंडपः । क्रमेण प्राप समवसरणं स महीपतिः ॥ २४ ॥
स त्रिः प्रदक्षिणीकृत्य ववन्दे परमेश्वरम् । आसांचक्रे यथास्थानं चास्थाने स्वर्द्धिगर्वितः ॥ २५ ॥

---

१ चित्रकः श्वापदविशेषस्तस्य चर्मभिः । २ उत्कृष्टाः । ३ गंधपुटैर्गंधपुटिकाभिश्च । ४ मुक्तादामवद्भिरुल्लोचैः । ५ अग्निसहिताः । ६ स्वर्गस्य । ७ पराजितं शच्या इन्द्राण्या रूपं याभिस्ताः । ८ गायकैः । ९ दर्श्यमानं स्वविज्ञानं स्वकौशलं यस्मै सः ।

तस्यर्द्धिगर्वं विज्ञाय तत्प्रबोधनहेतवे । अंभोमयं विकृतवान् विमानं पाकशासनः ॥ २६ ॥
[1]स्फटिकाब्जजलप्रान्तविकटांभोजसुन्दरम् । मरालसारसस्वानप्रतिस्वानसमाकुलम् ॥ २७ ॥
सुरद्रुमलताश्रेणिपतत्कुसुमशोभितम् । नीलोत्पलै राजमानमिन्द्र[2]नीलमणीमयैः ॥ २८ ॥
न[3]लिनीषु मरकतमयीषु परिवर्तिभिः । विभ्राजमानमधिकं स्वर्णांभोजैर्विकस्वरैः ॥ २९ ॥
लोलकल्लोलमालाभिः पताकामालभारिणम् । जलकान्तविमानं तं शक्रोऽध्यास्त सुरैः सह ॥ ३० ॥
[4]चामरैरमरस्त्रीभिर्वीज्यमानः सहस्रशः । गन्धर्वारब्धसंगीतदत्तकर्णो मनाग्मनाक् ॥ ३१ ॥
स्वामिपादपवित्रायां दत्तदृष्टिरधो भुवि । मर्त्यलोकमवातारीदमर्त्याधिपतिस्ततः ॥ ३२ ॥
नालेन [5]मारकतेन राजितेष्वम्बुजन्मसु । सौवर्णेषु न्यस्तपादं सपादमिव पर्वतम् ॥ ३३ ॥
मणीमयदन्त[6]कोशैर्दन्तैरष्टभिरूर्जितम् । देवदूष्यच्छन्नपृष्ठं प्र[7]ष्ठं त्रिदशदन्तिनाम् ॥ ३४ ॥
पूर्वारूढसुरस्त्रीभिर्दत्तहस्तावलम्बनः । मर्त्यलोकावतीर्णोऽथाध्यारुरोह पुरन्दरः ॥ ३५ ॥
॥ त्रिभिर्विशेषकम् ॥
आगादथोपसमवसरणं भक्तिभावितः । जिनेन्द्रपादान् वन्दा[8]रुर्वृन्दा[9]रकशिरोमणिः ॥ ३६ ॥
जलकान्तविमानान्तर्लीलापुष्क[10]रिणीषु च । संगीतकानि कमले कमले चात्र जज्ञिरे ॥ ३७ ॥

---

१ स्फटिकवन्निर्मलजलप्रान्ते विकसितैरभोजैः सुन्दरम् । २ इन्द्रनीलमणिमयैरिवेति लुप्तोपमा । ३ पद्मसमूहेषु । ४ चामरैरिति करणे तृतीया । ५ मरकतमणिखचितेन नालेन विराजितेषु । ६ दतकोशो दताभूषणम् । ७ श्रेष्ठम् । ८ वन्दत इत्येवंशीलः वन्दारुः । ९ देवेषु शिरोमणिः । १० पुष्करिणी वापी ।

सामाजिकोऽभवद्दिव्यरूपनेपथ्यसुन्दरः ॥ ३८ ॥
प्रतिसंगीतकं चेन्द्रानुरूपविभवः सुरः । मघोन इव संजज्ञे विश्वविस्मयकारणम् ॥ ३९ ॥
एकैकस्य च देवस्य परिवारो महर्द्धिकः । का कथा पुनरन्येषां तस्मादूनोनसंपदाम् ॥ ४० ॥
विमानर्द्ध्या तया शक्रः स्वयमेव विसिष्मिये । प्रभुं पृथ्वीतुलङ्कारः प्रणनाम पुनः पुनः ॥ ४१ ॥
तत्र स्थितैर्नरसुरैर्विस्मितैर्वीक्षितो हरिः । नगरर्द्ध्या ग्राम्य इव स्तंभितांगोऽभवत् क्षणम् ॥ ४२ ॥
दशार्णभद्रः शक्रस्य तया ऋद्ध्याथ दृष्टया । अहो शक्रविमानस्य शोभेयं भुवनोत्तरा[1] ॥ ४३ ॥
दशार्णभद्रो दध्यौ च विस्मयस्मेरलोचनः । अहो विभवविस्तारः पुरुहूतस्य कोऽप्यसौ ॥ ४४ ॥
अहो रुचिरगात्रत्वं सुरेन्द्रकरिणोऽस्य च । मम शक्रस्य चैतद्धि गोष्पदाब्ध्योरिवान्तरम् ॥ ४५ ॥
स्वसंपदोऽभिमानोऽयं व्यधायि धिगहो मया । कूपभेक इवाभूवं प्रागदृष्टेदृशर्द्धिकः[2] ॥ ४६ ॥
अमुना ऋद्धिगर्वेण स्वात्मा तुच्छीकृतो मया । परिणामः शुभतरो बभूवेत्यल्पकर्मणः ॥ ४७ ॥
एवं भावयतस्तस्य वैराग्यं गच्छतः शनैः । प्रव्रज्याग्रहणादद्य पराजेष्ये तथाप्यमुम् ॥ ४८ ॥
ऋद्ध्या यद्यप्यनेनाहं विजितोऽस्मि बिडौजसा । कर्मारीनपि जेष्यामि भवभ्रमणकारिणः ॥ ४९ ॥
न केवलं विजेष्येऽमुं व्रतादानेन संप्रति । तत्रस्थ एव व्यमुचत् किरीटकटकादिकम् ॥ ५० ॥
विवेकी चिन्तयित्वैवं दशार्णपुरभूपतिः । उच्चखानाथ शिरसः पंचभिर्मुष्टिभिः कचान् ॥ ५१ ॥
दशार्णभद्रः कर्मद्रुमूलानीव समन्ततः । स गत्वा गणभृत्पार्श्वे यतिलिंगमुपाददे ॥ ५२ ॥
शक्रे संपश्यमानेऽथ विस्मयस्मेरचक्षुषि ।

---

१ भुवनेषूत्तरा श्रेष्ठा । २ प्राक् पूर्वमदृष्टा ईदृशी ऋद्धिर्येन सः ।

गत्वा प्रदक्षिणापूर्वमपूर्वोत्साहसाहसः । दशार्णभद्रश्रमणो जगन्नाथमवन्दत ॥ ५३ ॥
शक्रो बभाषे महात्मन्नहो किमपि पौरुषम् । तवेदममुनाजैषीर्मामप्यन्यस्य का कथा ॥ ५४ ॥
इत्युक्त्वा तं नमस्कृत्य शक्रः स्वस्थानमभ्यगात् । मुनिर्दशार्णभद्रोऽपि सम्यग्व्रतमपालयत् ॥ ५५ ॥
जगन्नाथोऽपि भव्यानामुपकारपरायणः । विजहार ततः स्थानादन्येषु नगरादिषु ॥ ५६ ॥
इतश्च राजगृहस्य शालिग्रामे समाययौ । धन्येत्यभिधया योषित् काचिदुच्छिन्नवंशिका[1] ॥ ५७ ॥
बालं संगमकं नाम स्वसुतं सा सहानयत् । कुक्षिजातमपत्यं हि व्यसनेष्वपि दुस्त्यजम् ॥ ५८ ॥
सोऽर्भकस्तत्र पौराणां वत्सरूपाण्यचारयत् । अनुरूपा ह्यसौ रोरबालानां मृदुजीविका ॥ ५९ ॥
अथापरेद्युः संजाते तत्र कस्मिंश्चिदुत्सवे । पायसं संगमोऽपश्यद्भुज्यमानं गृहे गृहे ॥ ६० ॥
गत्वा स्वगेहे जननीं ययाचे सोऽपि पायसम् । साप्युवाच दरिद्रास्मि मद्गेहे पायसं कुतः ॥ ६१ ॥
बालेनाज्ञतया तेन याच्यमाना मुहुर्मुहुः । स्मरन्ती पूर्वविभवं तारं[2] तारं रुरोद सा ॥ ६२ ॥
तस्या रुदितदुःखेनानुविद्धहृदया इव । आगत्य प्रतिवेश्मिन्यः[3] पप्रच्छुर्दुःखकारणम् ॥ ६३ ॥
ताभ्योऽभ्यधत्त सा दुःखकारणं गद्गदाक्षरम् । क्षीराद्यदुश्च तास्तस्यै सापचत् पायसं ततः ॥ ६४ ॥
खंडाज्यपायसैर्भृत्वा स्थालं बालस्य तस्य सा । आर्पयत्प्रययौ चान्तर्गृहं कार्येण केनचित् ॥ ६५ ॥
अत्रान्तरे च कोऽप्यागान्मुनिर्मासमुपोषितः । पारणाय भवोदन्वत्तारणाय[4] स तस्य नौः ॥ ६६ ॥
सोऽचिन्तयदिदं चिन्तामाणिक्यमिव चेतनम् । जंगमः कल्पशाखीव कामधेनुरिवापशुः ॥ ६७ ॥

१ उच्छिन्नो वंशो यस्याः सा । २ उच्चैः । ३ समीपवासिन्यः स्त्रियः । ४ भवसमुद्रतारणाय ।

साधु साधु महासाधुर्मद्भाग्यैरयमाययौ । कुतोऽन्यथा वराकस्य ममेदृक्पात्रसंगमः ॥ ६८ ॥
भाग्योदयेन केनापि ममाद्य समपद्यत । चित्तं वित्तं च पात्रं च त्रिवेणी[1]संगमो ह्ययम् ॥ ६९ ॥
इति स स्थालमुत्पाट्य पायसं साधवे ददौ । जग्राहानुग्रहकृते तस्य कारुणिको मुनिः ॥ ७० ॥
ययौ च स मुनिर्गेहमध्याद्धन्यापि निर्ययौ । मन्ये भुक्तमनेनेति ददौ सा पायसं पुनः ॥ ७१ ॥
तत्पायसमतृप्तः सन्नाकंठं बुभुजेऽथ सः । तदजीर्णेन यामिन्यां स्मरन् साधुं व्यपद्यत ॥ ७२ ॥
तेन दानप्रभावेण सोऽथ राजगृहे पुरे । गोभद्रेभ्यस्य भार्याया भद्राया उदरेऽभवत् ॥ ७३ ॥
शालिक्षेत्रं सुनिष्पन्नं स्वप्नेऽपश्यच्च सा ततः । भर्तुः शशंस तस्याः स[2] सूनुः स्यादित्यचीकथत् ॥ ७४ ॥
चेद्दानधर्मकर्माणि करोमीति बभार सा । दोहदं तच्च गोभद्रः पूरयामास भद्रधीः ॥ ७५ ॥
पूर्णे काले ततो भद्रा द्युतिद्योतितदिग्मुखम् । असूत तनयं रत्नं विदूरगिरिभूरिव ॥ ७६ ॥
दृष्टस्वप्नानुसारेण सूनोस्तस्य शुभे दिने । चक्रतुः पितरौ शालिभद्र इत्यभिधां शुभाम् ॥ ७७ ॥
पाल्यमानः स धात्रीभिः पंचभिर्ववृधे क्रमात् । किंचिदूनाष्टवर्षः सन् पित्राप्यध्यापितः कलाः ॥ ७८ ॥
संप्राप्तयौवनः सोऽथ युवतीजनवल्लभः । सवयोभिः समं रेमे प्रद्युम्न[3] इव नूतनः ॥ ७९ ॥
तत्पुरश्रेष्ठिनोऽथैत्य कन्या द्वात्रिंशतं निजाः । प्रदातुं शालिभद्राय भद्रानाथं ययाचिरे ॥ ८० ॥
अथ प्रहृष्टो गोभद्रः शालिभद्रेण सादरम् । सर्वलक्षणसंपूर्णाः कन्यकाः पर्यणाययत् ॥ ८१ ॥
शालिभद्रस्ततो रम्ये विमान इव मन्दिरे । विललास समं ताभिः पतिर्दिविषदामिव ॥ ८२ ॥

१ गंगायमुनासरस्वतीवत् चित्तादित्रिवेणीसंगमः । २ स भर्त्ता तस्या अचीकथत् तव सूनु स्याद्भविष्यतीति । ३ कामदेवः ।

स विवेदानन्दमग्नो न रात्रिं न च वासरम् । तस्यापूरयतां भोगसामग्रीं पितरौ स्वयम् ॥ ७३ ॥
श्रीवीरपादमूलेऽथ गोभद्रो व्रतमग्रहीत् । विधिनानशनं कृत्वा देवलोकं जगाम च ॥ ७४ ॥
अवधिज्ञानतो ज्ञात्वा शालिभद्रं निजात्मजम् । तत्पुण्यावर्जितः[1] सोऽभूत् पुत्रवात्सल्यतत्परः ॥ ७५ ॥
दिव्यानि वस्त्रनेपथ्यादीनि तस्यानुवासरम् । सभार्यस्यार्पयामास कल्पशाखीव सोऽमरः ॥ ७६ ॥
यद्यन्मर्त्योचितं[2] कार्यं भद्रा तत्तदसाधयत् । पूर्वदानप्रभावेण भोगान् सोऽभुंक्त केवलम् ॥ ७७ ॥
वणिग्भिः कैश्चिदन्येद्युर्गृहीत्वा रत्नकंबलान् । शिश्रिये श्रेणिकस्तांश्च महार्घत्वेन नाग्रहीत् ॥ ७८ ॥
ततस्ते वणिजो जग्मुः शालिभद्रनिकेतनम् । तदुक्तार्घेण तान् भद्राप्यग्रहीद्रत्नकंबलान् ॥ ७९ ॥
मद्योग्यो गृह्यतामेको महामूल्येन कंबलः । इत्यूचे चेलणादेव्या तदा च श्रेणिको नृपः ॥ ८० ॥
राज्ञाप्यथैकं मूल्येन कंबलं वणिजोऽर्थिताः । भद्रा जग्राह तान् सर्वान् कंबलानिति तेऽवदन् ॥ ८१ ॥
श्रेणिकः प्राहिणोदेकं प्रवीणं पुरुषं ततः । भद्रापार्श्वे मूल्यदानात् कंबलादानहेतवे ॥ ८२ ॥
याचिता तेन भद्रोचे छित्वा तान्रत्नकंबलान् । शालिभद्रप्रियापादप्रोञ्छनीकृतवत्यहम् ॥ ८३ ॥
कार्यं निष्पद्यते किंचिज्जीर्णैश्चेद्रत्नकंबलैः । तद्गत्वापृच्छ्य राजानमागच्छामून् गृहाण च ॥ ८४ ॥
आख्यद्गत्वा स तद्राज्ञे राज्ञ्यूचे चेलणाप्यदः । पश्यास्माकं वणिजां च रीतिर्हेम्नोरिवान्तरम्[3] ॥ ८५ ॥
तमेव पुरुषं प्रेष्य श्रेणिकेन कुतूहलात् । आकारिते शालिभद्रे भद्रोपेत्य व्यजिज्ञपत् ॥ ८६ ॥
बहिर्न हि महीनाथ जातु याति मदात्मजः । प्रसादः क्रियतां देव तद्गृहागमनेन मे ॥ ८७ ॥

१ शालिभद्रपुण्येन आवर्जितो वशीभूतः । २ मनुष्योचितं कार्यं व्यवहारकार्यमिति यावत् । ३ पित्तलसुवर्णयोः ।

कौतूहलाच्छ्रेणिकोऽपि तत्तथा प्रत्यपद्यत । तं च क्षणं प्रतीक्ष्याथ साग्रे भूत्वा गृहं ययौ ॥ ९८ ॥
विचित्रवस्त्रमाणिक्यचित्रकत्वङ्मयीं ततः । आराजहर्म्यं स्वगृहादट्टशोभां व्यधत्त सा ॥ ९९ ॥
तयाहूतस्ततो राजा कृतां सद्यः सुरैरिव । विभावयन् हट्टशोभां शालिभद्रगृहं ययौ ॥ १०० ॥
स्वर्णस्तम्भोपरि प्रेङ्खदिन्द्रनीलाश्मतोरणम् । मौक्तिकस्वस्तिकश्रेणिदन्तुरद्वारभूतलम् ॥ १०१ ॥
दिव्यवस्त्रकृतोल्लोचं सुगन्धिद्रव्यधूपितम् । भुवि दिव्यविमानानां प्रतिमानमिव स्थितम् ॥ १०२ ॥
तद्विवेश विशामीशो विस्मयस्मेरलोचनः । भूमिकायां चतुर्थ्यां तु सिंहासन उपाविशत् ॥ १०३ ॥
सप्तम्यां भुवि भद्रेत्य शालिभद्रमभाषत । इहायातः श्रेणिकोऽस्ति तं द्रष्टुं क्षणमेहि तत् ॥ १०४ ॥
अम्ब त्वमेव यं वेत्सि तमर्थं कारय स्वयम् । किं मया तत्र कर्तव्यं स भद्रामित्यवोचत ॥ १०५ ॥
ततो भद्राप्युवाचैवं क्रेतव्यं वस्तु न ह्यदः । किं त्वसौ सर्वलोकानां युष्माकमपि च प्रभुः ॥ १०६ ॥
तच्छ्रुत्वा शालिभद्रोऽपि सविषादमचिन्तयत् । धिक् सांसारिकमैश्वर्यं यन्ममाप्यपरः प्रभुः ॥ १०७ ॥
भोगि[1]भोगैरिवैभिर्मे भोगैरलमतः परम् । दीक्षां मंक्षु ग्रहीष्यामि श्रीवीरचरणान्तिके ॥ १०८ ॥
एवं संवेगयुक्तोऽपि स मातुरुपरोधतः । सभार्योऽभ्येत्य राजानमनमद्विनयान्वितः ॥ १०९ ॥
सस्वजे श्रेणिकेनाथ स्वांके सुत इवासितः[2] । स्नेहाच्छिरसि चाघ्रातः क्षणादश्रूणि सोऽमुचत् ॥ ११० ॥
ततो भद्रा जगादैवं देवायं मुच्यतां यतः । मनुष्यमाल्यगन्धेन मानुषोऽप्येष बाध्यते ॥ १११ ॥
देवभूयं गतः श्रेष्ठी सभार्यस्यास्य यच्छति । दिव्यनेपथ्यवस्त्रांगरागादीन् प्रतिवासरम् ॥ ११२ ॥

---

१ सर्पदेहैः । २ उपवेशितः ।

ततो राज्ञा विसृष्टः स ययौ सप्तमभूमिकाम् । इहैव भोक्तव्यमिति विज्ञप्तो भद्रया नृपः ॥ ११३ ॥
भद्रादाक्षिण्यतो राजा प्रत्यपद्यत तत्तथा । सद्यः सासाधयत्सर्वं श्रीमतां किं न सिध्यति ॥ ११४ ॥
सस्नौ स्नानीयतैलाम्बुचूर्णैस्तूर्णं ततो नृपः । अंगुलीयं तदंगुल्या गृहवाप्यां पपात च ॥ ११५ ॥
यावदन्वेषयामास भूपतिस्तदितस्ततः । तावद्भद्रादिशद्दासीं वाप्यंभोऽन्यत्र नीयताम्[1] ॥ ११६ ॥
तथा कृते तया चित्रदिव्याभरणमध्यगम् । अंगाराभं स्वांगुलीयं दृष्ट्वा राजा विसिष्मिये ॥ ११७ ॥
किमेतदिति राज्ञोक्ता दास्यवोचदिहान्वहम् । निर्माल्यं शालिभद्रस्य सभार्यस्य निधीयते ॥ ११८ ॥
सर्वथा धन्य एवैष धन्योऽहमपि संप्रति । राज्ये यस्येदृशाः सन्ति विममर्शेति भूपतिः ॥ ११९ ॥
बुभुजे सपरीवारो भूभुजामग्रणीस्ततः । चित्रालंकारवस्त्राद्यैरर्चितश्च गृहं ययौ ॥ १२० ॥
इयेष शालिभद्रोऽपि यावत्संसारमोक्षणम् । अभ्येत्य धर्मसुहृदा विज्ञप्तस्तावदीदृशम् ॥ १२१ ॥
आगाच्चतुर्ज्ञानधरः सुरासुरनमस्कृतः । मूर्तो धर्म इवोद्याने धर्मघोषाभिधो मुनिः ॥ १२२ ॥
शालिभद्रस्ततो हर्षादधिरुह्य रथं ययौ । आचार्यपादान् वन्दित्वा साधूंश्चोपाविशत्पुरः ॥ १२३ ॥
स सूरिर्देशनां कुर्वन्नत्वा तेनेत्यपृच्छ्यत । भगवन् कर्मणा केन प्रभुरन्यो न जायते ॥ १२४ ॥
भगवानप्युवाचैवं दीक्षां गृह्णन्ति ये जनाः । अशेषस्यापि जगतः स्वामिभावं भजन्ति ते ॥ १२५ ॥
यद्येवं नाथ तन्नत्वा निजामापृच्छ्य मातरम् । ग्रहीष्यामि व्रतमिति शालिभद्रो व्यजिज्ञपत् ॥ १२६ ॥
न प्रमादो विधातव्य इत्युक्तः सूरिणा ततः । शालिभद्रो गृहं गत्वा भद्रां नत्वेत्यभाषत ॥ १२७ ॥

---

१ अपाक्रियताम् ।

धर्मः श्रीधर्मघोषस्य सूरेरद्य मुखांबुजात् । विश्वदुःखविमोक्षस्योपायभूतो मया श्रुतः ॥ १२८ ॥
अकार्षीः साध्विदं वत्स पितुस्तस्यासि नन्दनः । प्रशशंसेति भद्रापि शालिभद्रं प्रमोदतः ॥ १२९ ॥
सोऽप्यवोचदिदं मातरेवं चेत्तत्प्रसीद मे । ग्रहीष्यामि व्रतमहं ननु तस्य पितुः सुतः ॥ १३० ॥
साप्यवादीदिदं वत्स युक्तस्तेऽसौ व्रतोद्यमः । किं त्वत्र लोहचणकाश्चर्वणीया निरन्तरम् ॥ १३१ ॥
सुकुमारः प्रकृत्यापि दिव्यैर्भोगैश्च लालितः । स्यन्दनं तर्णक[1] इव कथं त्वं वक्ष्यसि[2] व्रतम् ॥ १३२ ॥
शालिभद्रोऽप्युवाचैवं पुमांसो भोगलालिताः । असह्या व्रतकष्टानां कातरा एव नेतरे ॥ १३३ ॥
त्यज भोगान् क्रमान्मर्त्यमाल्यगन्धान् सहस्व च । इत्यभ्यासाद्व्रतं वत्स गृह्णीया इत्युवाच सा ॥१३४॥
शालिभद्रस्ततो भद्रावचनं प्रतिपद्य तत् । भार्यामेकां तूलिकां च मुञ्चति स्म दिने दिने ॥ १३५ ॥
इतश्च तस्मिन्नगरे धन्यो नाम महाधनः । अभवच्छालिभद्रस्य कनिष्ठभगिनीपतिः ॥ १३६ ॥
शालिभद्रस्वसा साश्रुः स्नपयन्ती च तं तदा । किं रोदिषीति तेनोक्ता जगादेति सगद्गदम् ॥ १३७ ॥
व्रतं गृहीतुं मे भ्राता त्यजत्येकां दिने दिने । भार्यां च तूलिकां चाहं हेतुना तेन रोदिमि ॥ १३८ ॥
य एवं कुरुते फेरुरिव[3] भीरुस्तपस्यसौ । हीनसत्त्वस्तव भ्रातेत्यूचे धन्यः सनर्मकम्[4] ॥ १३९ ॥
सुकरं चेद्व्रतं नाथ क्रियते किं न हि स्वयम् । एवं सहासमन्याभिर्भार्याभिर्जगदेऽथ सः ॥ १४० ॥
धन्योऽप्यूचे व्रते[5] विघ्नो भवत्यस्ताश्च पुण्यतः । अनुमंत्र्योऽद्य मेऽभूवन् प्रव्रजिष्यामि तद्द्रुतम् ॥ १४१ ॥

१ वत्सतर. । २ वहधातोर्भविष्यद्रूपम् । ३ शृगालः । ४ सहासम् । ५ व्रते व्रतग्रहणे भवत्य एव विघ्नो विघ्नरूपाः सन्ति, ताश्च भवत्योऽद्य मे पुण्यतोऽनुमन्त्र्योऽनुकूला जातास्तस्माद्द्रुत प्रव्रजिष्यामीति सबन्धः ।

ता अप्यूचुः प्रसीदेदमस्मान्निर्नर्मणोदितम् । मा स्म त्याक्षीः श्रियोऽस्मांश्च मनस्विन्नित्यलालिताः॥ १४२ ॥
अनित्यं स्त्रीधनाद्येतत्प्रोज्झ्य नित्यपदेच्छया[1] । अवश्यं प्रव्रजिष्यामीत्यालपन् धन्य उत्थितः ॥ १४३ ॥
त्वामनु प्रव्रजिष्याम एवमुक्तवतीश्च ताः । अन्वमन्यत धन्योऽपि धन्यंमन्यो महामनाः ॥ १४४ ॥
इतश्च वैभारगिरौ श्रीवीरः समवासरत् । विदाञ्चकार तं सद्यो धन्यो धर्मसुहृद्गिरा ॥ १४५ ॥
दत्तदानः सदारः[2] सोऽप्यारुह्य शिबिकां ततः । भवभीतो महावीरचरणौ शरणं ययौ ॥ १४६ ॥
सदारः सोऽग्रहीद्दीक्षां ततो भगवदन्तिके । तच्छ्रुत्वा शालिभद्रोऽपि जितंमन्यः[3] प्रतत्वरे ॥ १४७ ॥
सोऽन्वीयमानस्तदनु श्रेणिकेन महीभुजा । उपेत्य श्रीमहावीरपादमूलेऽग्रहीद्व्रतम् ॥ १४८ ॥
ततः सपरिवारोऽपि स्वामी सिद्धार्थनन्दनः । विहरन्नन्यतोऽगच्छत् सयूथ इव हस्तिराट् ॥ १४९ ॥
धन्यश्च शालिभद्रश्च तावभूतां बहुश्रुतौ । महत्तपश्च तेपाते खड्गधारासहोदरम् ॥ १५० ॥
पक्षान्मासाद्द्विमासात्त्रिमास्या मासचतुष्टयात् । शरीरनिरपेक्षौ तौ चक्रतुः पारणं मुनी ॥ १५१ ॥
तपसा समजायेतां निर्मांसरुधिरांगकौ । चर्मभस्त्रोपमौ धन्यशालिभद्रमहामुनी ॥ १५२ ॥
अन्येद्युः श्रीमहावीरस्वामिना सहितौ मुनी । आजग्मतू राजगृहं पुरं जन्मभुवं निजाम् ॥ १५३ ॥
ततः समवसरणस्थितं नन्तुं जगत्पतिम् । श्रद्धातिशययोगेनाँभिन्नमीयुर्जनाः पुरात् ॥ १५४ ॥
मासक्षपणके धन्यशालिभद्रावुभावपि । काले विहर्तुं भिक्षार्थं भगवन्तं प्रणेमतुः ॥ १५५ ॥
मातृपार्श्वात्पारणं तेऽद्येत्युक्तः स्वामिना ततः । इच्छामीति भणञ्छालिभद्रो धन्ययुतो ययौ ॥ १५६ ॥

१ नित्यपद मोक्षस्तस्येच्छया । २ भार्यासहितः । ३ आत्मानं जित मन्यत इति तथा । ४ निरन्तरम् ।

गत्वा भद्रागृहद्वारि तावुभावपि तस्थतुः । तपःक्षामतया तौ च न केनाप्युपलक्षितौ ॥ १५७ ॥
श्रीवीरं शालिभद्रं च धन्यमप्यद्य वन्दितुम् । यामीति व्याकुला भद्राप्यज्ञासीदुत्सुका न तौ ॥१५८॥
क्षणमेकमवस्थाय तत्र तौ जग्मतुस्ततः । महर्षी नगरद्वारप्रतोल्याथ निरीयतुः ॥ १५९ ॥
तदायान्ती पुरे तस्मिन् विक्रेतुं दधिसर्पिषी । शालिभद्रस्य प्राग्जन्ममाता धन्याभवत्पुरः ॥ १६० ॥
शालिभद्रं च सा प्रेक्ष्य संजातप्रस्रवस्तनी । वन्दित्वा चरणौ भक्त्या द्वाभ्यामपि ददौ दधि ॥ १६१ ॥
श्रीवीरस्यान्तिके गत्वा तदालोच्य कृताञ्जलिः । शालिभद्रोऽवदत् स्वामिन्मातृतः पारणं कथम् ॥१६२
सर्वज्ञोऽप्याचचक्षेऽथ शालिभद्रमहामुनेः । प्राग्जन्ममातरं धन्यामन्यदप्यन्यजन्मजम् ॥ १६३ ॥
कृत्वा पारणकं दध्नापृच्छ्य च स्वामिनं ततः । वैभाराद्रिं ययौ शालिभद्रो धन्यसमन्वितः ॥ १६४ ॥
शिलातले शालिभद्रः सधन्यः प्रतिलेखिते । पादपोपगमं नाम तत्रानशनमाश्रयत् ॥ १६५ ॥
तदा च भद्रा तन्माता श्रेणिकश्च महीपतिः । आजग्मतुर्भक्तियुक्तौ श्रीवीरचरणान्तिके ॥ १६६ ॥
ततो भद्रावदद्धन्यशालिभद्रौ क्व तौ मुनी । भिक्षार्थं नागतौ कस्मादस्मद्वेश्म जगत्पते ॥ १६७ ॥
सर्वज्ञोऽपि बभाषे तौ त्वद्वेश्मनि मुनी गतौ । ज्ञातौ न तु भवत्येहागमनव्यग्रचित्तया ॥ १६८ ॥
प्राग्जन्ममाता त्वत्सूनोर्धन्या यान्ती पुरं प्रति । ददौ दधि तयोस्तेन पारणं चक्रतुश्च तौ ॥ १६९ ॥
उभावपि महासत्त्वौ सत्वरौ भवमुज्झितुम् । वैभारपर्वते गत्वानशनं तौ प्रचक्रतुः ॥ १७० ॥
श्रेणिकेन समं भद्रा वैभाराद्रिं ययौ ततः । तथा स्थितावपश्यच्च तावश्मघटिताविव ॥ १७१ ॥

---

१ अन्यजन्मज पूर्वजन्मनि जातमन्यमपि वृत्तान्तमाचचक्ष इति संटक. । २ त्वरासहितौ ।

तत्कष्टमथ पश्यन्ती स्मरन्ती तत्सुखानि च । सारोदीद्रोदयन्तीव वैभाराद्रिं प्रतिस्वनैः ॥ १७२ ॥
आयातोऽपि गृहं वत्स मयका स्वल्पभाग्यया । न ज्ञातोऽसि प्रमादेनाप्रसादं मा कृथा मयि ॥ १७३ ॥
यद्यपि त्यक्तवानस्त्वं तथापि निजदर्शनात् । आनन्दयिष्यसि दृशौ पुरेत्यासीन्मनोरथः ॥ १७४ ॥
आरम्भेणामुना पुत्र शरीरत्यागहेतुना । मनोरथं तमपि मे भंक्तुमस्युद्यतोऽधुना ॥ १७५ ॥
प्रारब्धं यत्तपस्तत्र न ते विघ्नीभवाम्यहम् । किं त्वेतत्कर्कशतरं शिलातलमिवाभवम् ॥ १७६ ॥
अथोचे श्रेणिको हर्षस्थाने किं नाम रोदिषि । ईदृग्यस्याः सुतः स्त्रीषु सैका त्वं पुत्रवत्यसि ॥ १७७ ॥
तत्त्वज्ञोऽयं महासत्त्वस्त्यक्त्वा तृणमिव श्रियम् । प्रपेदे स्वामिनः पादान् साक्षादिव परं पदम् ॥१७८॥
असौ जगत्स्वामिशिष्यानुरूपं तप्यते तपः । मुधानुतप्यते मुग्धे किं त्वया स्त्रीस्वभावतः ॥ १७९ ॥
भद्रैवं बोधिता राज्ञा वन्दित्वा तौ महामुनी । विमनस्का निजं धाम जगाम श्रेणिकस्तथा ॥ १८० ॥
उभौ तौ मुनीन्द्रौ प्रपन्नावसानौ विमानेऽथ सर्वार्थसिद्धाभिधाने ।
अभूतां प्रभूतप्रमोदाब्धिमग्नौ त्रयस्त्रिंशदब्ध्यायुषौ देववर्यौ ॥ १८१ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि दशार्णभद्रशालिभद्रधन्यक-

चरितवर्णनो नाम दशमः सर्गः ॥

## ॥ एकादशः सर्गः ॥

इतश्च भगवान् वीरो लोकानुग्रहकाम्यया । व्यहार्षीन्नगरग्रामाकरद्रोणमुखादिषु ॥ १ ॥
इतश्च राजगृहस्य वैभारगिरिकन्दरे । चौरो लोहखुराख्योऽभूद्रौद्रो रस इवांगवान् ॥ २ ॥
स तु राजगृहे नित्यं पौराणामुत्सवादिषु । लब्ध्वा छिद्राणि विदधे पिशाचवदुपद्रवम् ॥ ३ ॥
आददानस्ततो द्रव्यं भुञ्जानश्च परस्त्रियः । भांडागारं निशान्तं[1] वा निजं मेने स तत्पुरम् ॥ ४ ॥
चौर्यमेवाभवत्तस्य प्रीत्यै वृत्तिर्न चापरा । अपास्य क्रैव्यं[2] क्रव्यादा[3] भक्ष्यैस्तृप्यन्ति नापरैः ॥ ५ ॥
तस्यानुरूपो रूपेण चेष्टया च सुतोऽभवत् । भार्यायां रोहिणीनाम्न्यां रौहिणेयोऽभिधानतः ॥ ६ ॥
स्वमृत्युसमये प्राप्ते पित्राहूयेत्यभाषि सः । यद्यवश्यं करोषि त्वमुपदेशं ददामि तत् ॥ ७ ॥
अवश्यमेव कर्तव्यमादिष्टं भवता मया । कः पितुः पातयेदाज्ञां पृथिव्यामित्युवाच सः ॥ ८ ॥
प्रहृष्टो वचसा तेन चौरो लोहखुरस्ततः । पाणिना संस्पृशन् पुत्रमभाषिष्टेति निष्ठुरम् ॥ ९ ॥
योऽसौ समवसरणे स्थितः सुरविनिर्मिते । विधत्ते देशनां वीरो मा श्रौषीस्तस्य भाषितम् ॥ १० ॥
अन्यत्तु स्वेच्छया वत्स कुर्यास्त्वमनियंत्रितः । उपदिश्येति पंचत्वं प्राप लोहखुरस्ततः ॥ ११ ॥
मृतकार्यं पितुः कृत्वा रौहिणेयो निरन्तरम् । चकार चौरिकां लोहखुरोऽपर इवोद्गतः ॥ १२ ॥
पालयन् पितुरादेशं जीवितव्यमिवात्मनः । स्वदासेर[4]मिवामुष्णात् स राजगृहपत्तनम् ॥ १३ ॥

१ गृहम् । २ मासम् । ३ राक्षसा । ४ स्वसेवकमिव ।

तदा च नगरग्रामाकरेषु विहरन् क्रमात् । चतुर्दशमहासाधुसहस्रपरिवारितः ॥ १४ ॥
सुरैः सञ्चार्यमाणेषु स्वर्णाम्भोजेषु चारुषु । न्यस्यन् पदानि तत्रागाद्वीरश्चरमतीर्थकृत् ॥ १५ ॥ युग्मम् ॥
वैमानिकैर्ज्योतिषिकैरसुरैर्व्यन्तरैरपि । सुरैः समवसरणं चक्रे जिनपतेस्ततः ॥ १६ ॥
आयोजनविसर्पिण्या सर्वभाषानुयातया । भारत्या भगवान् वीरः प्रारेभे धर्मदेशनाम् ॥ १७ ॥
तदानीं रौहिणेयोऽपि गच्छन् राजगृहं प्रति । मार्गान्तराले समवसरणाभ्यर्णमाययौ ॥ १८ ॥
स एवं चिन्तयामास पथानेन व्रजामि चेत् । शृणोमि वीरवचनं तदाज्ञा भज्यते पितुः ॥ १९ ॥
न चान्यो विद्यते पन्था भवत्वेवं विमृश्य सः । कर्णौ पिधाय पाणिभ्यां द्रुतं राजगृहं ययौ ॥ २० ॥
तस्यैवमन्वहमपि यातायातकृतोऽन्यदा । उपसमवसरणं पादेऽभज्यत कंटकः ॥ २१ ॥
औत्सुक्यगमनाद्गाढभग्नं पादे स कंटकम् । अनुद्धृत्य समुद्धर्तुं न शशाक क्रमोत्क्रमम् ॥ २२ ॥
नास्त्युपायोऽपरः कोऽपीत्याकृष्य श्रवणात्करम् । कर्षन् कंटकमश्रौषीदिति विश्वगुरोर्गिरम् ॥ २३ ॥
[3]महीतलास्पर्शिपादा निर्निमेषविलोचनाः । अम्लानमाल्या निःस्वेदनीरजोऽङ्गाः सुरा इति ॥ २४ ॥
बहु श्रुतमिदं धिग्धिगित्याशूद्धृतकंटकः । पिधाय पाणिना कर्णं तथैवापससार सः ॥ २५ ॥
अथान्वहं मुष्यमाणे पत्तने तेन दस्युना । उपेत्य श्रेणिकं श्रेष्ठिश्रेष्ठा व्यज्ञपयन्निति ॥ २६ ॥
त्वयि शासति देवान्यत्र भयं द्रविणं तु नः । आकृष्य गृह्यते चौरैरदृष्टैश्चेटकैरिव ॥ २७ ॥
बन्धूनामिव तेषां तु गृहीतः पीडया ततः । सकोपाटोपमित्यूचे नृपतिर्दंडपाशिकम् ॥ २८ ॥

---

१ वाण्या । २ पदात्पद समुद्धर्तुमुत्थापयितुं न शशाक । ३ महीतलं स्पर्शमकुर्वाणाः पादा येषा ते । ४ दासैरिव ।

किं चौरीभूय दायादीभूय वा मम वेतनम् । गृह्णासि चौरैर्गृह्यन्ते यदेते त्वदुपेक्षितैः ॥ २९ ॥
सोऽप्यूचे देव कोऽप्येष चौरः पौरान् विलुंटति । रौहिणेयाह्वयो धर्तुं दृष्टोऽपि न हि शक्यते ॥ ३० ॥
विद्युदुत्क्षिप्तकरणेनोत्प्लुत्य[1] स प्लवंगवत्[2] । गेहाद्गेहं ततो वप्रमुल्लंघयति हेलया ॥ ३१ ॥
मार्गेण यामस्तन्मार्गं यावत्तावत्स नेक्ष्यते । त्यक्तो ह्येकैकमेणापि[3] शतेन त्यज्यते क्रमैः ॥ ३२ ॥
न तं हन्तुं न वा धर्तुमहं शक्नोमि तस्करम् । गृह्णातु तदिमां देवो दांडपाशिकतां निजाम् ॥ ३३ ॥
नृपेणोल्लासितैकभ्रूसंज्ञया भाषितस्ततः । अमात्योऽभयकुमारस्तमूचे दंडपाशिकम् ॥ ३४ ॥
चतुरंगचमूं सज्जीकृत्य मुञ्च बहिः पुरात् । यदान्तः प्रविशेच्चौरः पत्तनं वेष्टयेस्तदा ॥ ३५ ॥
अन्तश्च त्रासितो विद्युदुत्क्षिप्तकरणेन सः । पतिष्यति बहिः सैन्ये वागुरायां[4] कुरंगवत् ॥ ३६ ॥
प्रतिभूभिरिवानीतो[5] निजपादैस्ततश्च सः । ग्रहीतव्यो महादस्युरप्रमत्तैः पदातिभिः ॥ ३७ ॥
तथेत्यादेशमादाय निर्ययौ दांडपाशिकः । तथैव च चमूं सज्जां प्रच्छन्नं निर्ममे सुधीः ॥ ३८ ॥
तद्दिने रौहिणेयोऽपि ग्रामान्तरसमागमात् । अजानानः पुरीं रुद्धां वारीं[6] गज इवाविशत् ॥ ३९ ॥
तैरुपायैस्ततो धृत्वा बद्ध्वा च स मलिम्लुचः । आनीय नृपतेर्दांडपाशिकेन समर्पितः ॥ ४० ॥
यथान्याय्यं[7] सतां त्राणमसतां निग्रहस्तथा । निगृह्यतामसौ तस्मादित्यादीक्षन्महीपतिः ॥ ४१ ॥
अलोप्त्रः[8] प्राप्त इत्येष न हि निग्रहमर्हति । विचार्य निग्रहीतव्य इत्युवाचाभयस्ततः ॥ ४२ ॥

---

१ विद्युदिव यदुत्क्षिप्तकरणं ऊर्ध्वोत्पतन तेन । २ कपिवत् । ३ एकपदेनापि त्यक्तः सन् । ४ जाले । ५ साक्षिभिः । ६ हस्तिबन्धनरज्जुम् । ७ न्यायादनपेत न्याय्य तदनतिक्रम्य । ८ स्तैन्यधनरहितः ।

अथ पप्रच्छ तं राजा कस्त्वं कीदृशजीविकः । कुतो हेतोरिहायातो रौहिणेयः स चासि किम् ॥ ४३ ॥
स्वनामशंकितः सोऽपि प्रत्युवाचेति भूपतिम् । शालिग्रामे दुर्गचंडाभिधानोऽहं कुटुंबिकः ॥ ४४ ॥
प्रयोजनवशेनेहायातः सञ्जातकौतुकात् । एकदेवकुले रात्रिं महतीमस्मि च स्थितः ॥ ४५ ॥
स्वधाम गच्छन्नारक्षैराक्षिप्तो राक्षसैरिव । अलंघयमहं वप्रं प्राणभीर्महती हि भीः ॥ ४६ ॥
मध्यारक्षविनिर्यातो बाह्यारक्षगणेष्वहम् । कैवर्तहस्तविस्रस्तो जाले मत्स्य इवापतम् ॥ ४७ ॥
ततो निरपराधोऽपि बद्ध्वा चौर इवाधुना । अहमेभिरिहानीतो नीतिसारं विचारय ॥ ४८ ॥
ततस्तं भूपतिर्गुप्तौ प्रेषयामास तत्क्षणात् । तत्प्रवृत्तिज्ञानहेतोस्तत्र ग्रामे च पूरुषम् ॥ ४९ ॥
सोऽग्रेऽपि ग्राहितो ग्रामः संकेतं तेन दस्युना । चौराणामपि केषांचिच्चित्रमायतिचिन्तनम् ॥ ५० ॥
तत्स्वरूपं राजपुंसा पृष्टो ग्रामोऽब्रवीदिदम् । दुर्गचंडोऽत्र वास्तव्यः परं ग्रामान्तरं गतः ॥ ५१ ॥
तत्रायातेन विज्ञप्ते दध्यौ श्रेणिकसूरिदम् । दंभस्य सुकृतस्याहो ब्रह्माप्यन्तं न गच्छति ॥ ५२ ॥
अभयोऽसजायदथ प्रासादं सप्तभूमिकम् । महार्घ्यरत्नखचितं विमानमिव नाकिनाम् ॥ ५३ ॥
श्रियाप्सरायमाणाभी रमणीभिरलंकृतः । दिवोऽमरावतीखंडमिव भ्रष्टमतर्कि सः ॥ ५४ ॥
गन्धर्ववर्गप्रारब्धसंगीतकमहोत्सवः । सोऽधादकस्मादुद्भूतगन्धर्वनगरश्रियम् ॥ ५५ ॥
ततोऽभयो मद्यपानमूढं चौरं विधाय तम् । परिधाप्य देवदूष्ये अधितल्पमशाययत् ॥ ५६ ॥

---

१ क भवः । २ ग्राममध्यस्थितारक्षपुरुषेभ्यो मुक्तः । ३ धीवरहस्ताद्भ्रष्टः । ४ कारागृहे । ५ आयतेः परिणामस्य चिन्तन चित्र विचित्रं भवति । ६ प्रासादः ।

मदे परिणते यावदुदस्थात्तावदैक्षत । सोऽकस्माद्विस्मयकरीमपूर्वां दिव्यसंपदम् ॥ ५७ ॥
अत्रान्तरेऽभयादिष्टैर्नरनारीगणैस्ततः । उदचारि जय जगन्नन्देत्यादिकमंगलम् ॥ ५८ ॥
अस्मिन्महाविमाने त्वमुत्पन्नस्त्रिदशोऽधुना । अस्माकं स्वामिभूतोऽसि त्वदीयाः किंकरा वयम् ॥५९॥
अप्सरोभिः सहैताभी रमस्व स्वैरमिन्द्रवत् । इत्यादि चतुरं चाटुगर्भमूचे स तैस्ततः ॥ ६० ॥
जातः सुरः किमस्मीति दध्यौ यावत्स तस्करः । संगीतकार्थं तावत्तैः प्रदत्तः समहस्तकः ॥ ६१ ॥
उपेत्य पुंसा केनापि स्वर्णदंडभृता ततः । सहसा भोः किमारब्धमेतदेवमभाष्यत ॥ ६२ ॥
ततः प्रतिबभाषे तैः प्रतीहार निजप्रभोः । प्रदर्शयितुमारब्धं स्वकं विज्ञानकौशलम् ॥ ६३ ॥
सोऽप्युवाच स्वनाथस्य दर्श्यतां निजकौशलम् । देवलोकसमाचारः किं त्वसौ कार्यतामिति ॥ ६४ ॥
तैरुक्तं कीदृगाचार इति श्रुत्वा स पूरुषः । साक्षेपमित्यभाषिष्ट किमेतदपि विस्मृतम् ॥ ६५ ॥
य इहोत्पद्यते देवः स स्वे सुकृतदुष्कृते । आख्याति प्राक्तने स्वर्गभोगाननुभवेत्ततः ॥ ६६ ॥
विस्मृतं स्वामिलाभेन सर्वमेतत्प्रसीद नः । देवलोकस्थितिर्देव कार्यतामिति तेऽवदन् ॥ ६७ ॥
स रौहिणेयमित्यूचे निजे हन्त शुभाशुभे । प्राक्तने शंस नः स्वर्गभोगान् भुंक्ष्व ततः परम् ॥ ६८ ॥
ततः सोऽचिन्तयद्दस्युः किमेतत्सत्यमीदृशम् । मां ज्ञातुमभयेनैष प्रपंचो रचितोऽथ वा ॥ ६९ ॥
ज्ञेयं कथमिदमिति ध्यायता तेन संस्मृतम् । कंटकोद्धरणकालाकर्णितं भगवद्वचः ॥ ७० ॥
देवस्वरूपं श्रीवीराख्यातं चेत् संवदिष्यति । तत्सत्यं कथयिष्यामि करिष्याम्यन्यथोत्तरम् ॥ ७१ ॥

१ युगपत् हस्ततालः ।

इति बुध्ध्या स तानीक्षांचक्रे क्षितितलस्पृशः । प्रस्वेदमलिनान्म्लानमाल्यान्निमिषदीक्षणान् ॥ ७२ ॥
तत्सर्वं कपटं ज्ञात्वाचिन्तयद्दस्युरुत्तरम् । तेनोचे[1] कथ्यतां देवलोकः सर्वोयमुत्सुकः ॥ ७३ ॥
रौहिणेयस्ततोऽवादीन्मया पूर्वत्र जन्मनि । अदीयत सुपात्रेभ्यो दानं चैत्यानि चक्रिरे ॥ ७४ ॥
प्रत्यष्ठाप्यन्त बिम्बानि पूजितान्यष्टधार्चया । विहितास्तीर्थयात्राश्च गुरवः पर्युपासिताः ॥ ७५ ॥
इत्यादि सदनुष्ठानं मया कृतमिति ब्रुवन् । ऊचे दंडभृता शंस दुश्चरित्रमपि स्वकम् ॥ ७६ ॥
रौहिणेयोऽप्युवाचैवं साधुसंसर्गशालिना । कदाचिदप्याचरितं किंचिन्नाशोभनं मया ॥ ७७ ॥
व्याजहार प्रतीहारो जन्म नैकस्वभावतः । याति तत्कथ्यतां चौर्यपारदारिकतादिकम्[2] ॥ ७८ ॥
रौहिणेयोऽभ्यधत्तैवं किमेवंविधचेष्टितः । स्वर्लोकं प्राप्नुयादन्धः किमारोहति पर्वतम् ॥ ७९ ॥
गत्वा ततस्तैस्तत्सर्वमभयाय निवेदितम् । अभयेन च विज्ञप्तं श्रेणिकस्य महीपतेः ॥ ८० ॥
एवंविधैरुपायैर्यश्चौरो ज्ञातुं न शक्यते । स चौरोऽपि विमोक्तव्यः शक्या नीतिर्न लंघितुम् ॥ ८१ ॥
इति राजगिरामुञ्चद्रौहिणेयमथाभयः । वंच्यन्ते वंचनादक्षैर्दक्षा अपि कदाचन ॥ ८२ ॥
ततः सोऽचिन्तयच्चौरो धिगादेशं पितुर्मम । वंचितोऽस्मि चिरं येन भगवद्वचनामृतात् ॥ ८३ ॥
नागमिष्यत् प्रभुवचो यदि मे कर्णकोटरम् । तदा विविधमारेणागमिष्यं यमगोचरम् ॥ ८४ ॥
अनिच्छयापि हि तदा गृहीतं भगवद्वचः । मम जीवातवे[3] जातं भैषज्यमिव रोगिणः ॥ ८५ ॥
त्यक्त्वार्हद्वचनं हा धिक् चौरवाचि रतिर्मया । आम्राण्यपास्य निंबेषु काकेनेव चिरं कृता ॥ ८६ ॥

---

१ तेन दंडभृता । २ पारदारिकता जारत्वम् । ३ जीवनाय ।

उपदेशैकदेशोऽपि यदीयः फलतीदृशम् । तस्योपदेशः सामस्त्यात् सेवितः किं करिष्यति ॥ ८७ ॥
एवं विमृश्य मनसा ययौ भगवतोऽन्तिके । प्रणम्य चरणौ भक्त्या रौहिणेयो व्यजिज्ञपत् ॥ ८८ ॥
भवाब्धौ प्राणिनां घोर[1]विपन्नक्रकुलाकुले । महापोतायते ते गीरायोजनविसर्पिणी ॥ ८९ ॥
निषिद्धस्त्वद्वचः श्रोतुमनाप्तेनाप्तमानिना । इयत्कालमहं पित्रा वंचितस्त्रिजगद्गुरो ॥ ९० ॥
त्रैलोक्यनाथ ते धन्याः श्रद्दधानाः पिबन्ति ये । भवद्वचनपीयूषं कर्णाञ्जलिपुटैः सदा ॥ ९१ ॥
अहं तु पापोऽशुश्रूषुर्भवतो भगवन् वचः । पिधाय कर्णौ हा कष्टमिदं स्थानमलंघयम् ॥ ९२ ॥
एकदानिच्छताप्येकं श्रुतं युष्मद्वचो मया । तेन मंत्राक्षरेणेव रक्षितो राजराक्षसात् ॥ ९३ ॥
यथाहं मरणात्त्रातस्तथा त्रायस्व नाथ माम् । संसारसागरावर्ते निमज्जन्तं जगत्पते ॥ ९४ ॥
ततस्तत्कृपया स्वामी निर्वाणपददायिनीम् । विशुद्धां विदधे तस्य साधुधर्मस्य देशनाम् ॥ ९५ ॥
ततः प्रबुद्धः प्रणमन् रौहिणेयोऽब्रवीदिदम् । यतिधर्मस्य योग्योऽस्मि न वेत्यादिश्यतां प्रभो ॥ ९६ ॥
योग्योऽसीति स्वामिनोक्तो ग्रहीष्यामि विभो व्रतम् । परं किंचिद्वदिष्यामि श्रेणिकेनेत्युवाच सः ॥९७॥
निर्विकल्पं निर्विशंकं स्ववक्तव्यमुदीरय । इत्युक्तः श्रेणिकनृपेणोचे लोहखुरात्मजः ॥ ९८ ॥
इह देव भवद्भिर्यः श्रुतोऽहं लोकवार्तया । स एष रौहिणेयोऽस्मि भवत्पत्तनमोषकः ॥ ९९ ॥
भगवद्वचसैकेन दुर्लंघ्या लंघिता मया । प्रज्ञाभयकुमारस्य तेरंडेनेव निम्नगा[3] ॥ १०० ॥
अशेषमेतन्मुषितं पत्तनं भवतो मया । नान्वेषणीयः कोऽप्यन्यस्तस्करो राजभास्कर ॥ १०१ ॥

१ घोरा विपद एव नक्रा मकरास्तेषा कुलेनाकुले । २ नावा । ३ नदी ।

कमपि प्रेषय यथा तल्लोप्त्रं दर्शयाम्यहम् । करिष्ये सफलं जन्म ततः प्रव्रज्यया निजम् ॥ १०२ ॥
अभयोऽपि समुत्थाय श्रेणिकादेशतः स्वयम् । कौतुकात्पौरलोकश्च सहागात्तेन दस्युना ॥ १०३ ॥
ततो गिरिणदीकुञ्जस्मशानादिषु तद्धनम् । स्थगितं[1] दर्शयामास चौरः श्रेणिकसूनवे ॥ १०४ ॥
अभयोऽपि हि यद्यस्य तत्तस्य धनमार्पयत् । नीतिज्ञानामलोभानां मंत्रिणां नापरा स्थितिः ॥ १०५ ॥
परमार्थं कथयित्वा प्रबोध्य निजमानुषान् । श्रद्धालुर्भगवत्पार्श्वे रौहिणेयः समाययौ ॥ १०६ ॥
अथ श्रेणिकराजेन कृतनिष्क्रमणोत्सवः । स जग्राह परिव्रज्यां पार्श्वे श्रीवीरपादयोः ॥ १०७ ॥
ततश्चतुर्थादारभ्य षण्मासीं यावदुज्ज्वलम् । विनिर्ममे तपःकर्म कर्मनिर्मूलनाय सः ॥ १०८ ॥
तपोभिः कशितः कृत्वा भावसंलेखनां च सः । श्रीवीरमापृच्छ्य गिरौ पादपोपगमं व्यधात् ॥ १०९ ॥
शुभध्यानः स्मरन् पंचपरमेष्ठिनमस्क्रियाम् । त्यक्त्वा देहं जगाम द्यां रौहिणेयो महामुनिः ॥ ११० ॥
ततोऽपि भगवान् कर्तुं तीर्थकृत्कर्मनिर्जराम् । विजहार वृतो देवैः कोटिसंख्यैर्जघन्यतः ॥ १११ ॥
कानपि श्रावकीचक्रे यतीचक्रे च कानपि । धर्मदेशनया राजामात्यप्रभृतिकान् प्रभुः ॥ ११२ ॥
इतश्च श्रेणिको राजा तस्मिन्राजगृहे पुरे । सम्यक्त्वं धारयन् सम्यङ्नीत्या राज्यमपालयत् ॥ ११३ ॥
अन्यदोज्जयिनीपुर्याश्चंडप्रद्योतभूपतिः । चलितः सर्वसामग्र्या रोद्धुं राजगृहं पुरम् ॥ ११४ ॥
प्रद्योतो बद्धमुकुटाश्चान्ये भूपाश्चतुर्दश । तत्रायान्तो जनैर्दृष्टाः परमाधार्मिका इव ॥ ११५ ॥
पाटूपटप्लुतैरश्वैः[2] पाटयन्निव मेदिनीम् । आगच्छन् प्रणिधिभ्योऽथ[3] शुश्रुवे श्रेणिकेन सः ॥ ११६ ॥

१ आच्छादितम् । २ चारुगतिकैः । ३ गूढचरेभ्यः ।

असंयतलुलत्केशैश्छत्रशून्यैश्च मौलिभिः । राजानमनुयान्तस्तेऽप्यायुरुज्जयिनीं पुरीम् ॥ १३२ ॥
अभयस्यैव मायेयं वयं नेदृशकारिणः । प्रत्यायितः सशपथं तैरथोज्जयिनीपतिः ॥ १३३ ॥
कदाचिदूचेऽवन्तीशो मध्येसभममर्षणः । योऽर्पयत्यभयं बध्ध्वा मम संपत्स्यते स किम् ॥ १३४ ॥
पताकं हस्तमुत्क्षिप्य काप्येका गणिका ततः । व्यजिज्ञपदवन्तीशमलमस्मीह कर्मणि ॥ १३५ ॥
तामादिदेशावन्तीशो यद्येवमनुतिष्ठ तत् । करोम्यर्थादिसाहाय्यं ब्रूहि किं तव संप्रति ॥ १३६ ॥
सा च दध्यौ यदभयो नोपायैर्गृह्यतेऽपरैः । धर्मछद्म तदादाय साधयामि समीहितम् ॥ १३७ ॥
अयाचत ततश्च द्वे द्वितीयवयसौ स्त्रियौ । ते तदैवार्पयद्राजा ददौ द्रव्यं च पुष्कलम् ॥ १३८ ॥
कृतादराः प्रतिदिनमुपास्योपास्य संयतीः । बभूवुरुत्कटप्रज्ञास्तास्तिस्रोऽपि बहुश्रुताः ॥ १३९ ॥
तास्तिस्रोऽपि ततो जग्मुः श्रेणिकालंकृतं पुरम् । जगत्त्रयीं वंचयितुं मायाया इव मूर्तयः ॥ १४० ॥
बाह्योद्याने कृतावासा सा पणस्त्रीमतल्लिका । पत्तनान्तर्ययौ चैत्यपरिपाटीचिकीर्षया ॥ १४१ ॥
सा विभूत्यातिशायिन्या चैत्ये नृपतिकारिते । प्रविवेश समं ताभ्यां कृत्वा नैषेधकीत्रयम् ॥ १४२ ॥
मालवकौशिकीमुख्यग्रामरागजुषा गिरा । देवं वन्दितुमारेभे सपर्यां विरचय्य सा ॥ १४३ ॥
तत्राभयकुमारोऽपि ययौ देवं विवन्दिषुः । अग्रे चात्मतृतीयां तां वन्दमानामुदैक्षत ॥ १४४ ॥
देवदर्शनविघ्नोऽस्या मा भूत्प्रविशता मया । द्वार्यैवेत्यभयस्तस्थौ मंडपान्तर्विवेश न ॥ १४५ ॥
प्रणिधानस्तुतिं कृत्वा सा मुक्ताशुक्तिमुद्रया । यावदुत्तस्थुषी तावदभयोऽभ्याजगाम ताम् ॥ १४६ ॥

१ विश्वास प्रापित. । २ पताकासदृशम् । ३ सेवित्वा सेवित्वा । ४ पणस्त्रीषु वेश्यासु मतल्लिका श्रेष्ठा । ५ पूजाम् ।

तादृशीं भावनां तस्यास्तं वेषं प्रशमं च तम् । अभयो वर्णयामास सानन्दं च जगाद ताम् ॥ १४७ ॥
दिष्ट्या भद्रेऽधुना त्वादृक्साधर्मिकसमागमः । साधर्मिकात्परो बन्धुर्न संसारे विवेकिनाम् ॥ १४८ ॥
का त्वं किमागमः का वावासभूरिमके[1] च के । यकाभ्यां स्वातिराधा[2]भ्यामिन्दुलेखेव शोभसे ॥ १४९ ॥
व्याजहाराथ सा व्याज[3]श्राविकावन्तिवासिनः । महेभ्यवणिजः पाणिगृहीती[4] विधवा त्वहम् ॥ १५० ॥
इमे च मम पुत्रस्य कलत्रे कालधर्मतः । विच्छाय्यभूतां[5] विधवे भग्नवृक्षलते इव ॥ १५१ ॥
व्रतार्थं पृच्छतः स्मैते उभे अपि तदैव माम् । विपन्नपतिकानां हि सतीनां शरणं व्रतम् ॥ १५२ ॥
मयाप्युक्ते ग्रहीष्यामि निर्वीरा[6]हमपि व्रतम् । गार्हस्थ्यस्य फलं किं तु गृह्यतां तीर्थयात्रया ॥ १५३ ॥
व्रते हि भावतः पूजा युज्यते द्रव्यतो न तु । इत्यहं तीर्थयात्रार्थमेताभ्यां सह निर्गता ॥ १५४ ॥
अथेत्थमभयोऽवोचदतिथी भवताद्य नः । आतिथेयं सतीर्थ्यानां[7] तीर्थादप्यतिपावनम् ॥ १५५ ॥
प्रत्युवाचाभयं सापि युक्तमाह भवान् परम् । कृततीर्थोपवासाहं भवाम्यद्यातिथिः कथम् ॥ १५६ ॥
अथ तन्निष्ठया[8] हृष्टोऽभयस्तामवदत् पुनः । अवश्यं मम तत्प्रातरागन्तव्यं निकेतनम् ॥ १५७ ॥
साप्यूचे यत्क्षणेनापि जन्मिनो जन्म पूर्यते । अहं प्रातरिदं कर्तास्मीति जल्पेत्कथं सुधीः ॥ १५८ ॥
अस्त्विदानीमियं भूयः श्वो निमंत्र्येति चिन्तयन् । तां विसृज्याभयश्चैत्यं वन्दित्वा स्वगृहं ययौ ॥ १५९ ॥
तां निमंत्र्याभयः प्रातर्गृहचैत्यान्यवन्दयत् । भोजयामास च प्राज्यवस्त्रदानादि च व्यधात् ॥ १६० ॥

---

१ इमे एवेमके । २ राधा अनुराधानक्षत्रम् । ३ व्याजेन मायया श्राविका । ४ विवाहिता भार्या । ५ विच्छाये कान्तिरहिते न विच्छाये अविच्छाये अभूतामिति विच्छाय्यभूताम् । ६ निर्गतो वीरः पतिर्यस्या सा विधवेति यावत् । ७ समानधर्माणाम् । ८ तस्या धर्मनिष्ठया ।

निमंत्रितस्तयान्येद्युर्मितीभूयाभयोऽप्यगात्[1] । साधर्मिकोपरोधेन किं न कुर्वन्ति तादृशाः ॥ १६१ ॥
तया च विविधैर्भोज्यैरभयोऽकारि भोजनम् । चन्द्रहासंसुरामिश्रपानकानि च पायितः ॥ १६२ ॥
भुक्तोत्थितश्च सुष्वाप तत्कालं श्रेणिकात्मजः । आदिमा मद्यपानस्य निद्रा सहचरी खलु ॥ १६३ ॥
तं रथेन स्थाने स्थाने स्थापितैश्चापरै रथैः । अवन्तीं प्रापयामास दुर्लक्ष्यछद्मसद्म[2] सा ॥ १६४ ॥
ततोऽभयान्वेषणाय श्रेणिकेन नियोजिताः । स्थाने स्थाने मार्गयन्तस्तत्रोपेयुर्गवेषकाः ॥ १६५ ॥
किमिहाभय आयात इत्युक्ता तैरुवाच सा । इहाभयः समायातः परं यातस्तदैव हि ॥ १६६ ॥
वचनप्रत्ययात्तस्या अन्यत्रेयुर्गवेषकाः । स्थाने स्थाने स्थापिताश्वैः साप्यवन्तीं समाययौ ॥ १६७ ॥
सा प्रचंडाभयं चंडप्रद्योतायापर्यत्ततः । अभयानयनोपायस्वरूपं च व्यजिज्ञपत् ॥ १६८ ॥
तां प्रद्योतोऽप्युवाचैवं न साधु विहितं त्वया । यदमुं धर्मविश्रब्धं त्वं धर्मछद्मनानयः ॥ १६९ ॥
कथासप्ततिसंशंसी[3] मार्जार्येव शुकोऽनया । नीतिज्ञोपि गृहीतोऽसि जगादेत्यभयं च सः ॥ १७० ॥
अभयोऽप्यब्रवीदेवं त्वमेव मतिमानसि । यस्यैवंविधया बुद्ध्या राजधर्मः प्रवर्धते ॥ १७१ ॥
लज्जितः कुपितश्चाथ चंडप्रद्योतभूपतिः । राजहंसमिवाक्षैप्सीदभयं काष्ठपञ्जरे ॥ १७२ ॥
अग्निभीरुरथो[4] देवी शिवा नलगिरिः करी । लोहजंघो लेखवाहो राज्ये रत्नानि तस्य तु ॥ १७३ ॥
लोहजंघं नृपः प्रैषीद्भृगुकछे मुहुर्मुहुः । तद्गतागतसंक्लिष्टास्तत्रत्या इत्यसूत्रयन् ॥ १७४ ॥
आयात्ययं दिनेनापि पंचविंशतियोजनीम् । असकृद्व्याहरत्यस्मान्[5] हन्मः संप्रत्यमुं ततः ॥ १७५ ॥

---

१ अमितः परिवारयुक्तत्वात् मितः एकाकीभूत्वा । २ दुर्लक्ष्यं यच्छद्म कपटं तस्य सद्म स्थानभूता सा । ३ सप्ततिकथानां सम्यक् कथयिता । ४ अग्निभीरुर्नाम रथः । ५ कथयति वारवारं आज्ञादानेन क्लेशयतीत्यर्थः ।

श्रूयते तस्य गान्धर्वकला काप्यतिशायिनी । गीतेन मोहयित्वा यो वने बध्नाति सिन्धुरान् ॥ १९१ ॥
स गायति वने गत्वा गजास्तद्गीतमोहिताः । अपि बन्धं न जानन्ति पीतस्वाद्वरसा इव ॥ १९२ ॥
गीतोपायेन स यथा वने बध्नाति सिन्धुरान् । तथा तस्याप्युपायोऽस्ति बन्धेऽत्रानयनेऽपि च ॥ १९३ ॥
कार्यस्तत्र किलिञ्जैश्च वने सत्य इव द्विपः । कुर्वन् यंत्रप्रयोगेण क्रिया गत्यासनादिकाः ॥ १९४ ॥
किलिञ्जहस्तिमध्ये च नराः स्थास्यन्ति शस्त्रिणः । ते गजं चालयिष्यन्ति न्नंस्यन्ति च त एव तम् ॥ १९५ ॥
बध्ध्वा चैवं वत्सराज इहानीतस्तवाज्ञया । कन्यां वासवदत्तां ते गान्धर्वं शिक्षयिष्यति ॥ १९६ ॥
साधु साध्विति राज्ञानुमतो मंत्र्यपि तं तथा । अकारयद्गजं सत्यगजादप्यधिकं गुणैः ॥ १९७ ॥
दन्तघातकरोत्क्षेपबृंहितप्रसरादिभिः । तं कुञ्जरं वनचरा विदाङ्कुरकृत्रिमम् ॥ १९८ ॥
वनेचरास्तं करिणमाख्यन्नुदयनाय ते । तद्बन्धार्थं वने तस्मिन् ययावुदयनोऽपि हि ॥ १९९ ॥
दूरे मुक्त्वा परीवारं परिक्रामञ्छनैः शनैः । शकुनान्वेषक इव वनान्तः प्रविवेश सः ॥ २०० ॥
मायाकरटिनस्तस्य समीपमुपसृत्य च । जगावुदयनस्तारमधरीकृतकिन्नरः ॥ २०१ ॥
जगावुदयनो गीतं सुधास्वादु यथा यथा । तथा तथान्तःपुरुषाः स्तिमितांगं गजं व्यधुः ॥ २०२ ॥
कौशाम्बीशोऽपि तं नागं मन्वानो गीतमोहितम् । शनैः शनैरभ्यसर्पत्तिमिरे संचरन्निव ॥ २०३ ॥
मूढोऽयं मम गीतेनेत्युपसृत्य स पार्थिवः । उत्प्लुत्येभं तमारोहद्विहंग इव पादपम् ॥ २०४ ॥
प्रद्योतायुक्तसुभटा निःसृत्य द्विरदोदरात् । पातयित्वा गजस्कंधाद्वत्सराजमबन्धयन् ॥ २०५ ॥

---

१ काष्ठैः । २ बन्धं करिष्यन्ति । ३ पसरो गतिः । ४ मायागजस्य । ५ स्तब्धांगम् । ६ पक्षी ।

एकाकी च निरस्त्रश्च विश्वस्तश्च शतैर्नरैः । नाकार्षीत् पौरुषं रुद्धः कुक्कुरैरिव सूकरः ॥ २०६ ॥
ऊचे च चंडप्रद्योतो वत्सराजं नतार्पितम् । मत्पुत्रीं शिक्षयैकाक्षीं तां गान्धर्वकलां निजाम् ॥ २०७ ॥
मत्कन्याध्यापनेन त्वं सुखं तिष्ठ मदोकसि । अन्यथा तव बद्धस्य मदधीनं हि जीवितम् ॥ २०८ ॥
दध्यावुदयनोऽप्येवं कन्यामध्यापयन्नहम् । कालं क्षिपामि जीवन् हि नरो भद्राणि पश्यति ॥ २०९ ॥
इति चेतसि निश्चित्य तत्प्रद्योतस्य शासनम् । अनुमेने वत्सराजः स पुमान् यो हि कालवित् ॥ २१० ॥
ऊचे च चंडप्रद्योतः काणा हि दुहिता मम । मा जातु तां निरीक्षेथाः सा हि लज्जिष्यतेऽन्यथा ॥२११॥
इत्युक्त्वान्तःपुरे गत्वा तनयामप्युवाच सः । गान्धर्वगुरुरायातो न वीक्ष्यः कुष्ठ्ययं यतः ॥ २१२ ॥
वत्सराजोऽपि गान्धर्वं तां तथैवाध्यजीगपत् । प्रद्योतवंचितौ तौ तु मिथो ददृशतुर्न तु ॥ २१३ ॥
पश्याम्यमुमिति ध्यायन्त्यन्यदावन्तिनाथसूः । [1]मनःशून्यान्यथापाठीन्मनोऽधीनं हि चेष्टितम् ॥ २१४ ॥
वत्सराजस्तदावन्तिराजपुत्रीमतर्जयत् । विनाशयसि किं शास्त्रं काणे दुःशिक्षितासि किम् ॥ २१५ ॥
सा तिरस्कारकुपिता वत्सराजमदोऽवदत् । किं काणमभिधत्से मां कुष्ठिनं स्वं न पश्यसि ॥ २१६ ॥
दध्यौ चैवं वत्सराजः कुष्ठभाग् यादृगस्म्यहम् । काणापि तादृगेवैषा पश्यामि तदिमां खलु ॥ २१७ ॥
इत्यपासारयत् [2]कांडपटं स [3]धिषणापटुः । ददर्श मेघनिर्मुक्तामिन्दुलेखामिवाथ ताम् ॥ २१८ ॥
तं च वासवदत्तापि सद्यः स्फारितलोचना । सर्वांगसुभगं साक्षादिवाक्षाक्षीन्मनोभुवम् ॥ २१९ ॥
दृष्ट्वा वासवदत्ता तं वत्सराजोऽपि तां तदा । परस्परानुरागर्द्धिसूचकं चक्रतुः स्मितम् ॥ २२० ॥

---

१ शून्यचित्ता सती विपरीतमपठत् । २ जवनिकापटम् । ३ बुद्धिचतुरः ।

प्रद्योतपुत्री प्रोवाच धिग्धिक् पित्रास्मि वंचिता । कुहू[1]तमिस्रेन्दुमिव यापश्यं त्वां न सुन्दर ॥ २२१ ॥
कलाचार्य कलाः सम्यग्मयि संक्रमितास्त्वया । तास्तवैवोपयोगिन्यः सन्तु भर्ता त्वमेधि[2] मे ॥ २२२ ॥
वत्सराजोऽवदद्भद्रे त्वत्पित्रैवास्मि वंचितः । काणेत्यन्तरितां कृत्वा त्वां पश्यन्नस्मि वारितः ॥ २२३ ॥
कान्ते तदावयोर्योगो भवत्वत्रैव तस्थुषोः । समये त्वां हरिष्यामि वैनतेयः[3] सुधामिव ॥ २२४ ॥
स्वयंदूत्येन वैदग्धीबन्धुरं जल्पतोरिति । मनोयोगस्पर्द्धयेव वपुर्योगोऽप्यभूत्तयोः ॥ २२५ ॥
दासी वासवदत्ताया धात्री विश्रं[4]भभाजनम् । एका काञ्चनमालैव विवेद चरितं तयोः ॥ २२६ ॥
एकयैवोपास्यमानौ दास्या काञ्चनमालया । केनाप्यज्ञातदाम्पत्यौ तौ कालमतिनिन्यतुः ॥ २२७ ॥
अन्यदालानमुन्मूल्य पातयित्वा निषादिनौ[5] । स्वैरं नलगिरिर्भ्राम्यन् क्षोभयामास नागरान् ॥ २२८ ॥
असाववशगो हस्ती वशं नेयः कथं न्विति । राज्ञा पृष्टोऽभयोऽशंसद्गायतूदयनो नृपः ॥ २२९ ॥
गीतं नलगिरेरग्रे कुर्वित्युक्तोऽथ भूभुजा । जगावुदयनस्तत्र समं वासवदत्तया ॥ २३० ॥
तद्गीताकर्णनाक्षिप्तो बद्धो नलगिरिः करी । पुनर्ददौ वरं राजा न्यासीचक्रेऽभयस्तथा ॥ २३१ ॥
अन्यदोद्यापनिक[6]योद्यानं प्रत्यचलन्नृपः । सान्तःपुरपरीवारः पौरैः सह महर्द्धिभिः ॥ २३२ ॥
तदा च वत्सराजस्य मोक्षोपायं विचिन्तयन् । मार्गे परिभ्रमन्नासीन्मंत्री योगन्धरायणः ॥ २३३ ॥
स्वबुद्धिविभवोष्माणं हृदन्तर्धर्तुमक्षमः । स पपाठ यन्मनसि प्रायस्तद्धि वचस्यपि ॥ २३४ ॥

---

१ अमावास्यायुक्ता या प्रतिपत् सा कुहूशब्देनोच्यते तस्यास्तमिस्रेऽधकारे स्थितचद्रमिव । २ त्व मे भर्ता एधि भव । ३ गरुडः । ४ विश्वासपात्रम् । ५ गजरक्षकौ । ६ उद्यापनिका उजाणीति प्रसिद्धा तया ।

वासवदत्ता काञ्चनमाला चैव वसन्तकः । वेगवती घोषवती वत्सराजश्च यान्त्यमी ॥ २५० ॥
प्रेरयन् वारणवधूं[1] वत्सराजोऽतिरंहसा । आत्मानं ज्ञापयन्नेवं नालुंपत्क्षत्रियव्रतम् ॥ २५१ ॥
प्रद्योतोऽपि गतं ज्ञात्वोदयनं पंचभिः सह । करी जघर्षाद्द्यूते पाशकान् पातयन्निव ॥ २५२ ॥
अवन्तीशो नलगिरिं सन्नाह्यासह्यविक्रमः । निषादिभिर्महायोधैरास्थितं पृष्ठतोऽमुचत् ॥ २५३ ॥
पञ्चविंशतियोजन्यामतीतायां स कुञ्जरः । अदवीयान्[2]उदयनेनादृश्यत भयंकरः ॥ २५४ ॥
ततो मूत्रघटीमेकां स्फोटयित्वा महीतले । तथैव प्रेरयामासोदयनस्तां करेणुकाम् ॥ २५५ ॥
गजोऽपि तद्घटीमूत्रं जिघ्रन् क्षणमिवास्थित । कष्टेन प्रेर्यमाणस्तु प्रससार पुनस्तथा ॥ २५६ ॥
मार्गे मूत्रघटीरन्या अपि तावति तावति । स्फोटं[3] स्फोटं नलगिरेर्वत्सराजोऽरुणद्गतिम् ॥ २५७ ॥
योजनानां शतं गत्वा कौशाम्बीं प्रविवेश सः । परिश्रान्ता तदा सा च व्यपद्यत करेणुका ॥ २५८ ॥
यावच्च मूत्रमाजिघ्रन् प्रससार न वारणः । कौशाम्बीपतिसेनापि तावद्योद्धुमढौकत ॥ २५९ ॥
निषादिनो नलगिरिं वालयित्वा ततश्च ते । पथा यथागतेनैव पुनरुज्जयिनीं ययुः ॥ २६० ॥
कटकोपक्रमं[4] कुर्वन् प्रद्योतः कुलमंत्रिभिः । भक्तैः कोपकृतान्तोऽपि युक्तिपूर्वमवार्यत ॥ २६१ ॥
वराय यस्मै कस्मैचिद्देयावश्यं हि कन्यका । तद्वत्सराजादधिकं कं जामातरमाप्स्यसि ॥ २६२ ॥
भेजे वासवदत्ता तं स्वयमेव स्वयंवरा । स्वामिंस्त्वद्दुहितुः पुण्यैरुचितः सोऽभवद्वरः ॥ २६३ ॥
तदलं कटकारंभेणानुमन्यस्व तं वरम् । यतो वासवदत्तायाः स कौमारहरोऽभवत् ॥ २६४ ॥

१ हस्तिनीम् । २ अनतिदूरः । ३ स्फोटयित्वा स्फोटयित्वा । ४ सैन्यारभम् ।

इति तैर्बोधितो राजा वत्सराजाय संमदात्[1] । प्रैषीज्जामातृवत्सावार्हं वस्तुजातं[2] विधेयवित् ॥ २६५ ॥
अभूदवन्त्यामन्येद्युर्निर्विच्छेदं प्रदीपनम् । पृष्टश्च तत्प्रतीकारं प्रद्योतेनाभयोऽवदत् ॥ २६६ ॥
विषस्येव विषं वह्नेर्वह्निरेव तदौषधम् । तदन्यः क्रियतां वह्निर्यथा शाम्येत्प्रदीपनम् ॥ २६७ ॥
तत्तथा विदधे राज्ञाशाम्यत्तच्च प्रदीपनम् । तृतीयं च वरं सोऽदान्न्यासीचक्रेऽभयश्च तम् ॥ २६८ ॥
तत्तथा विदधे राज्ञाशाम्यत्तच्च प्रदीपनम् । तृतीयं च वरं सोऽदान्न्यासीचक्रेऽभयश्च तम् ॥ २६८ ॥
अशिवं महदन्येद्युरुज्जयिन्यां समुत्थितम् । तत्प्रशान्त्यै नरेन्द्रेण पृष्ट इत्यभयोऽब्रवीत् ॥ २६९ ॥
आगच्छंस्त्वन्तरास्थानं देव्यः सर्वा विभूषिताः । युष्माञ्जयति या दृष्ट्या कथनीया तु सा मम ॥ २७० ॥
आगच्छंस्त्वन्तरास्थानं देव्यः सर्वा विभूषिताः । युष्माञ्जयति या दृष्ट्या कथनीया तु सा मम ॥ २७१ ॥
तथैव विदधे राज्ञा राज्ञ्योऽन्या विजिता दृशा । देव्या तु शिवया राजा कथितं चाभयाय तत् ॥२७१॥
तथैव विदधे राज्ञा राज्ञ्योऽन्या विजिता दृशा । देव्या तु शिवया राजा कथितं चाभयाय तत् ॥ २७२ ॥
अभाषताभयोऽप्येवं महाराज्ञी शिवा स्वयम् । करोतु कूर[3]बलिना भूतानामर्चनं निशि ॥ २७२ ॥
यद्यद्भूतं शिवारूपेण[4]ोत्तिष्ठत्यथवास्यते[5] । तस्य तस्य मुखे देव्या देयः कूरबलिः स्वयम् ॥ २७३ ॥
विदधे शिवया तच्चाशिवशान्तिर्बभूव च । तुर्यं चादाद्वरं राजा ययाचे चाभयोऽप्यदः ॥ २७४ ॥
स्थितो नलगिरौ मेडीभूते[6] त्वयि शिवांकगः[7] । अहं विशाम्यग्निभीरुरथदारुकृतां चिताम् ॥ २७५ ॥
ततो विषण्णः प्रद्योतो वरं दातुमशक्नुवन् । विससर्जाञ्जलिं कृत्वा कुमारं मगधेशितुः ॥ २७६ ॥
आशुश्रावा[8]भयोऽप्येवं त्वयानीतश्छलादहम् । दिवा रटन्तं पूर्मध्ये त्वां तु नेष्याम्यसावहम् ॥ २७७ ॥
ततोऽभयकुमारोऽगात् क्रमाद्राजगृहे पुरे । कथमप्यवतस्थे च कंचित्कालं महामतिः ॥ २७८ ॥

१ हर्षात् । २ वस्तुसमूहम् । ३ कूरो धान्यविशेषः । ४ शृगालीरूपेण । ५ उपविशति । ६ निषादीभूते । ७ शिवादेव्या उत्सगे स्थितः । ८ प्रतिज्ञा चकार ।

गृहीत्वा गणिकापुत्र्यौ रूपवत्यावथाभयः । वणिग्वेषोऽगादवन्त्यां राजमार्गेऽग्रहीद्गृहम् ॥ २७९ ॥
प्रद्योतेनेक्षिते ते च दारिके पथि गच्छता । ताभ्यां च सविलासाभ्यां प्रद्योतोऽपि निरीक्षितः ॥ २८० ॥
प्रद्योतेन गृहे गत्वा प्रेषिता रागिणा ततः । दूत्यनुनयन्ती ताभ्यां क्रुद्धाभ्यामपहस्तिता[1] ॥ २८१ ॥
द्वितीयस्मिन्नपि दिनेऽर्थयमाना नृपाय सा । ताभ्यां शनैः सरोपाभ्यामवामन्यत[2] दूतिका ॥ २८२ ॥
तृतीयेऽप्यहन्यनिर्वेदादेत्य ते याचिते तया । अवोचतां सदाचारो भ्राता नावेष रक्षति ॥ २८३ ॥
ततो बहिर्गतेऽमुष्मिन् सप्तमेऽह्नि समागते । इहायातु नृपश्छन्नस्ततः संगो भविष्यति ॥ २८४ ॥
अथाभयेन प्रद्योतसदृगेकः पुमान्निजः । उन्मत्तो विदधे तस्य प्रद्योत इति नाम च ॥ २८५ ॥
ईदृशोऽयं मम भ्राता भ्राम्यतीतस्ततस्ततः । रक्षितव्यो मया हा किं करोमीत्यवदज्जने ॥ २८६ ॥
तं वैद्यसद्मनयनच्छद्मना प्रत्यहं बहिः । रटन्तं मञ्चकारूढं निनायार्तमिवाभयः ॥ २८७ ॥
नीयमानश्च तेनोच्चैः स उन्मत्तश्चतुःपथे । प्रद्योतोऽहं ह्रियेऽनेनेत्युदश्रुवदनोऽरटत् ॥ २८८ ॥
सप्तमेह्नि नृपोऽप्यागात्तत्र प्रच्छन्नमेककः । कामान्धः सिन्धुर इव बद्धश्चाभयपूरुषैः ॥ २८९ ॥
नीयतेऽसौ वैद्यवेश्मेत्यभयेनाभिलापिणा । पर्यंकेन समं जह्रे पुरान्तः स रटन् दिवा ॥ २९० ॥
क्रोशे क्रोशे पुरो मुक्तै रथैरथ सुवाजिभिः । पुरे राजगृहेऽनैषीत् प्रद्योतमभयोऽभयः[3] ॥ २९१ ॥
ततो निनाय प्रद्योतं श्रेणिकस्य पुरोऽभयः । दधावे खड्गमाकृष्य तं प्रति श्रेणिको नृपः ॥ २९२ ॥
अथाभयकुमारेण बोधितो मगधेश्वरः । संमान्यवस्त्राभरणैः प्रद्योतं व्यसृजन्मुदा ॥ २९३ ॥

१ निर्वासिता । २ अवगणिता । ३ भयरहितः ।

वहिरंगान्यथाजैषीद्दुर्जयानपि विद्विषः । अन्तरंगानपि तथा स लोकद्वयसाधकः ॥ २०८ ॥
तमूचे श्रेणिकोऽन्येद्युर्वत्स राज्यं त्वमाश्रय । अहं श्रयिष्ये श्रीवीरशुश्रूषासुखमन्वहम् ॥ २०९ ॥
पित्राज्ञाभंगसंसारभीरुरित्यभयोऽब्रवीत् । यदादिशथ तत्साधु प्रतीक्षध्वं क्षणं परम् ॥ २१० ॥
इतश्च भगवान् वीरः प्रव्राज्योदायनं नृपम् । मरुमंडलतस्तत्राभ्यागत्य समवासरत् ॥ २११ ॥
दिष्ट्याद्य भगवानागादिति हृष्टोऽभयोऽपि हि । गत्वा नत्वा भगवन्तं भक्तिमानेवमस्तवीत् ॥ २१२ ॥
सत्त्वस्यै[1]कान्तनित्यत्वे कृतनाशाकृतागमौ । स्यातामेकान्तनाशेऽपि कृतनाशाकृतागमौ ॥ २१३ ॥
आत्मन्येकान्तनित्ये स्यान्न भोगः सुखदुःखयोः । एकान्तानित्यरूपेऽपि न भोगः सुखदुःखयोः ॥२१४॥
पुण्यपापे बन्धमोक्षौ न नित्यैकान्तदर्शने । पुण्यपापे बन्धमोक्षौ नानित्यैकान्तदर्शने ॥ २१५ ॥
क्रमाक्रमाभ्यां नित्यानां युज्यतेऽर्थक्रिया न हि । एकान्तक्षणिकत्वेऽपि युज्यतेऽर्थक्रिया न हि ॥२१६॥
यदा तु नित्यानित्यत्वरूपता वस्तुनो भवेत् । यथात्थ[2] भगवन्नैव तदा दोषोऽस्ति कश्चन ॥ २१७ ॥
गुडो हि कफहेतु· स्यान्नागरं[3] पित्तकारणम् । द्व्यात्मनि[4] न दोषोऽस्ति गुडनागरभेषजे ॥ २१८ ॥
द्वयं विरुद्धं नैकत्रासत्प्रमाणप्रसिद्धितः । विरुद्धवर्णयोगो हि दृष्टो मेचक[5]वस्तुषु ॥ २१९ ॥
विज्ञानस्यैकमाकारं नानाकारकरंबितम् । इच्छंस्तथागतः[6] प्राज्ञो[7] नानेकान्तं प्रतिक्षिपेत् ॥ २२० ॥
चित्रमेकमनेकं च रूपं प्रामाणिकं वदन् । यौगो वैशेषिको वापि नानेकान्तं प्रतिक्षिपेत् ॥ २२१ ॥
इच्छन् प्रधानं सत्त्वाद्यैर्विरुद्धैर्गुंफितं गुणैः । सांख्यः संख्यावतां मुख्यो नानेकान्तं प्रतिक्षिपेत् ॥२२२॥

---

१ जीवस्य । २ ब्रवीषि । ३ नागर भाषाया " सठी " इति ख्यातम् । ४ उभयात्मके । ५ श्यामवस्तुषु । ६ बौद्धः । ७ पंडितानाम् ।

विमतिः संमतिर्वापि चार्वाकस्य न मृग्यते । परलोकात्ममोक्षेषु यस्य मुह्यति शेमुषी[1] ॥ ३२३ ॥
तेनोत्पादव्ययस्थेम[2]संभिन्नं गोरसादिवत् । त्वदुपज्ञं कृतधियः प्रपन्ना वस्तु वस्तु सत् ॥ ३२४ ॥
इति स्तुत्वा पुनर्नत्वा पप्रच्छ परमेश्वरम् । राजर्षिः कोऽन्तिमोऽथाख्यत् स्वामी नृपमुदायनम् ॥ ३२५ ॥
अपृच्छदभयो भूयः कोऽयं स्वामिन्नुदायनः । उदायनस्य चरितं ततश्चाकथयत्प्रभुः ॥ ३२६ ॥
सिन्धुसौवीरदेशेऽस्ति पुरं वीतभयाह्वयम् । तत्रोदायननामाभूदवनीशो महाभुजः ॥ ३२७ ॥
वीतभयादिनगरत्रिषष्टित्रिशतीप्रभुः । सिन्धुसौवीरप्रभृतिनीवृत्[3]षोडशकेश्वरः ॥ ३२८ ॥
महासेनादिकदशकरीटिनृपनायकः । अन्येषामपि विनेता विजय्यासीन्महीतले ॥ ३२९ ॥
सम्यग्दर्शनपूतात्मा कृततीर्थप्रभावना । प्रभावतीति तस्याभूत् पत्नी नाम्ना प्रभावती ॥ ३३० ॥
तस्य प्रभावतीजन्मा[4] यौवराज्यधुरंधरः । जज्ञेऽभीचिः सुतः श्रेष्ठो भागिनेयश्च केश्यभूत् ॥ ३३१ ॥
इतश्च पुरि चंपायामाजन्म[5] स्त्रीषु लंपटः । नाम्ना कुमारनन्दीति स्वर्णकारोऽभवद्धनी ॥ ३३२ ॥
यां यां कन्यां चारुरूपामपश्यदशृणोदपि । स्वर्णपंचशतीं दत्वा तां तां परिणिनाय सः ॥ ३३३ ॥
शतानि पंच पत्नीनां बभूवुस्तस्य च क्रमात् । स ईर्ष्यालुरेकस्तंभे सौधे ताभिररंस्त च ॥ ३३४ ॥
नागिलो नामधेयेन सुहृत्तस्यातिवल्लभः । श्रमणोपासकः शुद्धपंचाणुव्रतधार्यभूत् ॥ ३३५ ॥
एकदा तु पंचशैलद्वीपस्थे व्यन्तरस्त्रियौ । प्रास्थिषातां नन्दीश्वरयात्रायै शक्रशासनात् ॥ ३३६ ॥
तत्पतिः पंचशैलेशो विद्युन्माली तदा च्युतः । ते दध्यतुश्च व्युद्ग्राह्यः कोऽद्य नौ यः पतिर्भवेत् ॥३३७॥

१ बुद्धिः । २ ध्रुवसहितम् । ३ नीवृद्देशः । ४ प्रभावत्या जन्म यस्य स । ५ जन्मत आरभ्य ।

ततस्ताभ्यां प्रयान्तीभ्यां पत्नीनां पंचभिः शतैः । कुमारनन्दी विलसंश्चंपापुर्यामदृश्यत ॥ ३३८ ॥
तत्समीपेऽवतीर्णे ते व्युद्राहार्थं पतीच्छया । कुमारनन्द्यपि प्रोचे ते दृष्ट्वा के युवामिति ॥ ३३९ ॥
कथयामासतुस्ते च देव्यावावां मनुष्यक । नाम्ना हासा प्रहासा च ते पश्यन्मोहमाप सः ॥ ३४० ॥
लब्धसंज्ञोऽर्थयांचक्रे ते रिरंसुः स हेमकृत् । ते चोचतुः समागच्छेर्द्वीपे त्वं पंचशैलके ॥ ३४१ ॥
इत्युक्त्वोत्पतिते ते तु स्वर्णकारोऽपि भूभुजे । दत्वा सुवर्णं पटहाघोषणामित्यकारयत् ॥ ३४२ ॥
नेता यः पंचशैले मां द्रव्यकोटिं स लप्स्यते । एकश्च स्थविरो धृत्वा पटहं धनमाददे ॥ ३४३ ॥
स्थविरः कारयित्वा च यानपात्रमपूरयत् । भूयसा पथ्यदनेन पुत्रेभ्यस्तु धनं ददौ ॥ ३४४ ॥
कुमारनन्दिना सार्धं यानारूढोऽब्धिवर्त्मनि । गत्वा स दूरमित्यूचे स्थविरः पश्य न भितः ॥ ३४५ ॥
[1]अब्धिकूले शैलपादजातोऽयं दृश्यते वटः । तदस्मिन् विलगेर्याति यानपात्रमधो यदा[2] ॥ ३४६ ॥
पंचशैलादिहैष्यन्ति भारुंडास्त्रिपदाः खगाः[3] । तेषु सुप्तेषु चैकस्य कस्याप्यंघ्रौ तु मध्यमे ॥ ३४७ ॥
गाढं बद्धा पटेन स्वं विलगेर्दृढमुष्टिना । प्रातरुड्डीनभारुंडैः पंचशैलं त्वमाप्स्यसि ॥ ३४८ ॥
॥ युग्मम् ॥
ततः परं यानपात्रं महावर्ते विनंक्ष्यति । अविलग्नो वटे हन्त त्वमप्येवं विनंक्ष्यसि ॥ ३४९ ॥
स स्वर्णकृत्तथा चक्रे निन्ये तत्र च पक्षिणा । दृष्टस्ताभ्यां तदृष्ट्या च स विशेषमरज्यत ॥ ३५० ॥
ताभ्यां चोचेऽमुनांगेन नावां भोग्ये तवानघ । अग्निप्रवेशादिना तत् पंचशैलाधिपो भव ॥ ३५१ ॥

---

१ समुद्रतीरे । २ यदा यानपात्र वटस्याधो याति तदा तस्मिन् वटे विलगे. । ३ पक्षिणः ।

किं करोमि क्व यामीति भाषमाणः स हेमकृत् । ताभ्यां पाणिपुटे कृत्वा चंपोद्याने व्यमुच्यत ॥ ३५२॥
स चोपलक्ष्य लोकेन पृष्ट आख्यन्निजां कथाम् । स्मरन् हासां प्रहासां च प्रारेभेऽथाग्निसाधनम् ॥३५३॥
स नागिलेन सुहृदा तदैवं प्रत्यबोध्यत । मरणं युज्यते नैवं तव कापुरुषोचितम् ॥ ३५४ ॥
दुःप्रापं मानुषं जन्म तुच्छभोगफलार्जनात् । मा नैषीस्तन्मुधा प्रे[१]सेत् को रत्नेन वराटिकाम् ॥ ३५५ ॥
भोगार्थो वासि चेद्धर्मं तथाप्यार्हतमाश्रयेः । स ह्यर्थकामयोः कामधेनुः स्वर्मोक्षदोऽपि सः ॥ ३५६ ॥
स एवं वार्यमाणोऽपि नागिलेन निदानतः । इंगिनीमरणं कृत्वा पंचशैलाधिपोऽभवत् ॥ ३५७ ॥
नागिलोऽपि स्वमित्रस्य तेनापंडितमृत्युना । आसाद्य सद्यो निर्वेदं परिव्रज्यामुपाददे ॥ ३५८ ॥
प्रव्रज्यां पालयन्मृत्वा देवोऽभूदच्युते च सः । ददर्शावधिना तं च सुहृदं पंचशैलगम् ॥ ३५९ ॥
श्रीनन्दीश्वरयात्रायां प्रस्थितानां दिवौकसाम् । हासाप्रहासे चलिते पुरो गातुं तदाज्ञया ॥ ३६० ॥
पटहग्रहणे ताभ्यां विद्युन्माली प्रवर्तितः । ऊचे ममापि किं नाम कश्चिदादेशदः प्रभुः ॥ ३६१ ॥
इत्यहंकारहुंकारमुखरास्यस्य तस्य तु । मूर्तं कर्मेवाभियोग्यं पटहो व्यलगद्गले ॥ ३६२ ॥
हस्तपादादिवदंगे पटहः सह[२]भूरिव । तेनोत्तारयितुं शेके ह्रीमता न कथंचन ॥ ३६३ ॥
ऊचे हासाप्रहासाभ्यां कर्मेदमि[३]हजन्मनाम् । मा त्रपिष्ठाः प्रतिष्ठस्व वाद्योऽवश्यं त्वयानकः ॥ ३६४ ॥
ततो हासाप्रहासाभ्यां गायन्तीभ्यां समन्वितः । पटहं वादयन् सोऽगात् पुरतस्त्रिदिवौकसाम् ॥३६५॥
स नागिलवरो देवो यात्रायां यान् ददर्श च । हासाप्रहासयोर्वृन्दे तमानकधरं सुरम् ॥ ३६६ ॥

१ इच्छेत् । २ सहजातः । ३ इहजातानाम् ।

तं विद्युन्मालिनं दृष्ट्वा पुरः पटहवादकम् । अवधेः सुहृदं ज्ञात्वाभिज्ञापितुमुपासरत् ॥ ३६७ ॥
तस्य चांगप्रभालोकमुलूक इव भास्वतः । सोढुं दूरादप्यशक्तः पलायनमनाटयत् ॥ ३६८ ॥
सायाह्नार्क इव तेजः स्वं संहृत्याच्युतामरः । विद्युन्मालिनमित्यूचे पश्य जानासि मां न किम् ॥ ३६९ ॥
देवः पाटहिकोऽप्येवमुवाच ननु कोऽस्म्यहम् । यन्महर्द्धीन्न जानामि देवानिन्द्रादिकानपि ॥ ३७० ॥
अथ श्रावकरूपं तद्विरचय्याच्युतामरः । हासाप्रहासारमणं तमेवं प्रत्यबोधयत् ॥ ३७१ ॥
सखे मदुपदेशेनार्हतं धर्ममनाश्रयन् । अग्निमृत्युं तदाकार्षीः पतंग इव मूढधीः ॥ ३७२ ॥
अहं तु जिनधर्मज्ञः प्रव्रज्यां पालयन्मृतः । तदावयोरभूदीदृगुदर्कः[1] स्वस्वकर्मणः ॥ ३७३ ॥
ततो निर्वेदमापन्नं पंचशैलेश्वरं सुरम् । वदन्तं किं करोमीति नागिलस्त्रिदशोऽवदत् ॥ ३७४ ॥
गार्हस्थ्यचित्रशालायां कायोत्सर्गेण तस्थुषः । प्रभोर्भावयतेर्मूर्तिं महावीरस्य कारयेः ॥ ३७५ ॥
अर्हतः प्रतिमायां हि कारितायां सखे तव । उत्पत्स्यते भवेऽन्यस्मिन् बोधिबीजं महाफलम् ॥ ३७६ ॥
रागद्वेषमोहजितां प्रतिमां श्रीमदर्हताम् । यः कारयेत्तस्य हि स्याद्धर्मः स्वर्गापवर्गदः ॥ ३७७ ॥
जिनार्चाकारकाणां न कुजन्म कुगतिर्न च । न दारिद्र्यं न दौर्भाग्यं न चान्यदपि कुत्सितम् ॥ ३७८ ॥
विद्युन्माल्यपि तस्याज्ञामुररीकृत्य सत्वरः । क्षत्रियकुंडग्रामेऽस्मानपश्यत् प्रतिमास्थितान् ॥ ३७९ ॥
गत्वा महाहिमवति छित्वा गोशीर्षचन्दनम् । अस्मन्मूर्तिं तथा दृष्टां सालंकारां चकार सः ॥ ३८० ॥
जात्येन चन्दनेनाथ स्वयंघटितसंपुटे । प्रतिमां तां स चिक्षेप निधानमिव तद्धनः[2] ॥ ३८१ ॥

१ परिणामः । २ सा प्रतिमैव धनं यस्य सः ।

ततश्च संपुटं यक्षकर्दमेनाभिषिच्य तम् । पुष्पाञ्जलिक्षेपपूर्वं प्रणम्योचे प्रभावती ॥ ३९७ ॥
गतरागद्वेषमोहः प्रातिहार्याष्टकावृतः । देवाधिदेवः सर्वज्ञोऽर्हन् देयाद्दर्शनं मम ॥ ३९८ ॥
इति देव्यां ब्रुवाणायां प्रतिमास्थानसंपुटः । स व्यदालीत् स्वयमपि प्रगे कमलकोशवत् ॥ ३९९ ॥
गोशीर्षचन्दनमयी तदन्तर्देवनिर्मिता । अम्लानमाल्या सर्वांगसंपूर्णा प्रतिमैक्ष्यत ॥ ४०० ॥
तदार्हद्भासनस्याभूदतिमात्रं प्रभावना । प्रभावत्यपि तां नत्वा प्रतिमामस्तवीदिति ॥ ४०१ ॥
सौ[1]म्यदर्शन सर्वज्ञापुनर्भव जगद्गुरो । अर्हन् भव्यजनानन्द विश्वचिन्तामणे जय ॥ ४०२ ॥
सांयात्रिकं च सत्कृत्य प्रभावत्यपि बन्धुवत् । अन्तरन्तःपुरं निन्ये प्रतिमां रचितोत्सवा ॥ ४०३ ॥
कारयित्वा चैत्यगृहं प्रतिमां न्यस्य तत्र च । त्रिसंध्यं पूजयामास स्नानपूर्वं प्रभावती ॥ ४०४ ॥
तामन्यदार्चा[2]मर्चित्वा प्रमोदेन प्रभावती । पत्या समेता संगीतम[3]विगीतं प्रचक्रमे ॥ ४०५ ॥
[4]तानौघानुगतश्रव्यं व्यक्तव्यंजनधातुकम् । व्यक्तस्वरं व्यक्तरागं राजा वीणामवादयत् ॥ ४०६ ॥
[5]व्यक्तांगहारकरणं सर्वांगाभिनयोज्ज्वलम् । ननर्त देव्यपि प्रीता ला[6]स्यं ताण्डवपूर्वकम् ॥ ४०७ ॥
राजान्यदा प्रभावत्या न ददर्श शिरः क्षणात् । नृत्यंतं तत्कब[7]न्धं तु ददर्शाजिकबन्धवत् ॥ ४०८ ॥
अरिष्टदर्शनेन प्राक् क्षुभितस्य महीपतेः । तदो[8]पसर्पन्निद्रस्येवागलत् [9]कंबिका करात् ॥ ४०९ ॥
अकांडतांडवच्छेदकुपिता राज्यथावदत् । तालच्युतास्मि किमहं वादनाद्विरतोऽसि यत् ॥ ४१० ॥

---

१ चन्द्रवद्दर्शन यस्य तत्संबुद्धौ । २ प्रतिमाम् । ३ निर्दोषम् । ४ तानाना तालाना समूहेनानुगतं श्रव्यं गेयं यस्मिन् कर्मणि यथा स्यात् तथा । ५ व्यक्तमगहारस्य करण यथा तथा । ६ गानपूर्वनृत्यम् । ७ शिरोरहितो देहः कबन्धः । ८ उपसर्पन्त्यागच्छन्ती निद्रा यस्य तस्य । ९ वीणा ।

इत्थं पुनः पुनः पृष्टः कंचिकापातकारणम् । तत्तथाख्यन्महीपालो बलीयान् [1]स्त्रीग्रहः खलु ॥ ४११ ॥
राज्यूचे दुर्निमित्तेनामुनाल्पायुरहं प्रिय । आजन्मार्हद्धर्मवत्या मृत्युरप्यस्तु नास्ति भीः ॥ ४१२ ॥
प्रत्युतानन्दहेतुर्मे दुर्निमित्तस्य दर्शनम् । तज्ज्ञापनाय भवति [2]यत्सर्वविरतौ मम ॥ ४१३ ॥
इत्युक्त्वान्तःपुरं राज्ञी ययावविकृताशया । [3]अर्हद्धर्माविद्धकर्णो राजा तु व्यमनायत ॥ ४१४ ॥
अन्यदा च कृतस्नानशौचा देवी प्रभावती । देवार्चावसरेऽर्हाणि दास्या वासांस्यनाययत् ॥ ४१५ ॥
भाव्यनिष्टवशात्तानि राज्ञी रक्तान्युदैक्षत । समयेऽस्मिन्ननर्हाणि ह्यमूनीति चुकोप च ॥ ४१६ ॥
कोपात्प्रभावती दासीमादर्शेन जघान ताम् । तावतापि विपेदे सा मृत्योर्हि विषमा गतिः ॥ ४१७ ॥
तत्कालमुज्ज्वलान्येव वसनानि प्रभावती । ददर्शाचिन्तयच्चैवं धिङ्मया खण्डितं व्रतम् ॥ ४१८ ॥
पंचेन्द्रियस्यान्यस्यापि वधो नरककारणम् । किं पुनः स्त्रीविघातोऽयं श्रेयस्तस्माद्व्रतं मम ॥ ४१९ ॥
दुर्निमित्तं तदाचख्यौ साक्षे राज्ञी प्रभावती । दासीवधमहापापवैराग्यं च कृताञ्जलिः ॥ ४२० ॥
इति चाभ्यर्थयांचक्रे स्वामिन्नल्पायुरस्म्यहम् । अनुजानीहि मां सर्वविरत्यै नाथ संप्रति ॥ ४२१ ॥
आमौलिं मां त्वमज्ञासीरज्ञासमधुना त्वहम् । वस्त्रवर्णपरावर्तमनिमित्तद्वयं ह्यदः ॥ ४२२ ॥
अनिमित्तव्याख्यातात्पायुषः समयोचिते । प्रव्रज्याग्रहणे मेऽद्य प्रत्यूहं नाथ मा कृथाः ॥ ४२३ ॥
एवमुक्तः सनिर्बन्धमन्वधाद्वसुधाधवः । अनुतिष्ठ महादेवि यत्तुभ्यमभिरोचते ॥ ४२४ ॥

---

१ स्त्रिया ग्रहः आग्रहः स्त्री एव ग्रहो वा । २ यस्मात्कारणात्तद्दर्शनं मम सर्वविरतौ ज्ञापनाय भवति । ३ अर्हद्धर्मेणाविद्धौ कर्णौ यस्य सः अश्रुतार्हद्धर्म इत्यर्थः । ४ विभ्रम् ।

देवत्वमाप्तया देवि बोधनीयस्त्वयान्वहम् । स्वर्गसौख्यान्तरायोऽपि सोढव्यो मत्कृते क्षणम् ॥ ४२५ ॥
ततश्च सर्वविरतिं प्रपद्यानशनं तथा । साभूत्विपद्य प्रथमे कल्पे देवो महर्द्धिकः ॥ ४२६ ॥
देवाधिदेवप्रतिमां तामन्तःपुरचैत्यगाम् । तथैव देवदत्ताख्या कुब्जिका दास्यपूजयत् ॥ ४२७ ॥
प्रभावत्यमरेणाथ बोध्यमानोऽप्युदायनः । नाबुध्यताबधेर्ज्ञात्वा तूपायोऽयं व्यधीयत ॥ ४२८ ॥
तापसीभूय सोऽन्येद्युर्द्युसद्मोदायनं नृपम् । दिव्यामृतफलापूर्णपात्रपाणिरुपाययौ ॥ ४२९ ॥
तापसश्चोपदाभूच्च सुवर्णं सुरभीति तम् । राजा तापसभक्तत्वात्तापसं बहुमानयत् ॥ ४३० ॥
पक्विमाण्यति कर्पूरगन्धानीष्टाहृतानि च । फलान्यादं परानन्दबीजानीवावनीपतिः ॥ ४३१ ॥
त्वया प्राप्तान्यपूर्वाणि क्वेदृशानि फलान्यहो । स्थानं दर्शय तन्मह्यमपृच्छदिति तं नृपः ॥ ४३२ ॥
तपस्व्यूचे पुरस्यास्य विद्यते नातिदूरतः । आश्रमो दृष्टिविश्रामः स ईदृक्फलजन्मभूः ॥ ४३३ ॥
तमाश्रमं दर्शयेति ब्रुवाणं नृपतिं सुरः । स्वशक्त्यैकाकिनं कृत्वा विद्यां दातुमिवानयत् ॥ ४३४ ॥
किंचिद्गत्वा विचक्रे च तादृक्फलमनोरमम् । अनेकतापसाकीर्णमुद्यानं नन्दनोपमम् ॥ ४३५ ॥
तापसानां वनमिदं भक्तस्तेष्वस्मि तेन मे । पूरिष्यते फलेच्छेति दधावे कपिवन्नृपः ॥ ४३६ ॥
सक्रोधमथ धावद्भिस्तैर्मायातापसैर्नृपः । कुट्यमानस्तस्करवत् पलायिष्टाविनष्टधीः ॥ ४३७ ॥
पलायमानश्चापश्यदग्रे साधूनवस्थितान् । शरणं प्रतिपेदे तान्मा भैषीरिति भाषिणः ॥ ४३८ ॥
आश्वासितस्तैर्नृपतिः स्वस्थीभूयेत्यचिन्तयत् । वंचितोऽस्मि धिगाजन्म तापसैः क्रूरकर्मभिः ॥ ४३९ ॥

---

१ द्युसद्मा देवः । २ पक्वानि । ३ इष्टेनानीतानि । ४ अभक्षयत् ।

पितेव मेऽयं नृपतिः पत्तयोऽस्यापरे नृपाः । तच्चंडशासनश्चंरूप्रद्योतोऽस्तु पतिर्मम ॥ ४५५ ॥
प्रद्योताग्रे च तद्रूपं वर्णयामास देवता । प्रद्योतोऽपि हि कुब्जायाः प्रार्थने दूतमादिशत् ॥ ४५६ ॥
गत्वा तामर्थयांचक्रे दूतस्तं साप्यदोऽवदत् । प्रद्योतं दर्शयाथाख्यात्प्रद्योताय तथैव सः ॥ ४५७ ॥
तदैवैरावणारूढवासवश्रियमाश्रयन् । आरूढोऽनिलवेगेऽत्रं निशि प्रद्योत आययौ ॥ ४५८ ॥
तस्मै यथा सा रुरुचे तस्यै सोऽपि तदा तथा । प्रद्योतोऽथावदत्कुब्जामब्जाक्ष्येह्येहि[1] मत्पुरीम् ॥ ४५९ ॥
कुब्जाब्रवीन्न जीवामि यां विना क्षणमप्यहम् । देवाधिदेवप्रतिमां तां मुक्त्वा यामि न क्वचित् ॥४६०॥
प्रतिमायाः प्रतिकृतिरमुष्यास्तन्नृप त्वया । आनेतव्या यथा सेह मुच्यते नीयते त्वसौ ॥ ४६१ ॥
इति तत्प्रतिमारूपं निरूप्यावन्तिपार्थिवः । रजनीं तां निनायाथ रजन्यंते पुनर्ययौ ॥ ४६२ ॥
प्रद्योतोऽथ गतोऽवन्त्यां यथादृष्टामकारयत् । देवाधिदेवप्रतिमां जात्यश्रीखंरूदारुणा ॥ ४६३ ॥
अपृच्छच्च महामात्यान् कारितेयं मया नवा । देवाधिदेवप्रतिमा प्रतिष्ठास्यति को न्विमाम् ॥ ४६४ ॥
अवोचन्मंत्रिणः स्वामिन् कौशाम्बीत्यस्ति पूर्वरा । तत्रान्वर्थाभिधानोऽभूज्जितशत्रुर्महीपतिः ॥ ४६५ ॥
पुरोधास्तस्य निःशेषविद्यास्थानाब्धिपारगः । काश्यपो नाम विप्रोऽभूत्तस्य जाया पुनर्यशाः ॥ ४६६ ॥
कपिलो नाम पुत्रोऽभूत्तयोस्तस्मिञ्छिशावपि । काश्यपः प्राप पंचत्वमनाथः कपिलोऽभवत् ॥ ४६७ ॥
राजानादृत्य तं बालं काश्यपस्य पदेऽपरम् । द्विजन्मानं न्यधात् कीदृगाम्नायो योग्यतां विना ॥४६८॥
आदित्यकिरणास्पृष्टशरीरश्छत्रसंपदा । नृत्यत्तुरंगारूढोऽथ पुरे बभ्राम स द्विजः ॥ ४६९ ॥

---

[1] हे कमलाक्षि ।

तं दृष्ट्वा कपिलमाता स्मरन्ती पतिसंपदम् । रुरोद मन्दभाग्यानां ह्यसुखे रोदनं सखा ॥ ४७० ॥
कपिलोऽपि रुरोदोच्चै रुदतीं प्रेक्ष्य मातरम् । शोकः संक्रामति ह्यासे दर्पणे प्रतिबिंबवत् ॥ ४७१ ॥
नेत्राभ्यामश्रुमुग्वक्त्रं द्विधारमिव वारकम्[1] । उन्नम्या[2]स्य मातुः कपिलोऽवदत् किमिति रोदिषि ॥ ४७२ ॥
जगाद सा यथा ह्येष द्विजन्मा संपदोदयी । तथाभवत्तव पिता स्मृत्वा तज्जात रोदिमि ॥ ४७३ ॥
त्वत्पितुः श्रीर्ह्यनेनास्मानुपार्जितगुणे त्वयि[3] । पितुः श्रियो न रक्ष्यन्ते तनयैरपि निर्गुणैः ॥ ४७४ ॥
जजल्प कपिलो मातस्तदधीये गुणार्थ्यहम् । सावदन्मत्सरी[4] सर्वोऽप्यत्र कोऽध्यापयिष्यति ॥ ४७५ ॥
यद्येवमपि ते बुद्धिः श्रावस्तीं व्रज तत्पुरीम् । तत्रास्ति त्वत्पितुर्मित्रमिन्द्रदत्त इति द्विजः ॥ ४७६ ॥
विद्यार्थिनं पुत्रमिव त्वामायातं स सर्ववित् । प्रीतः पितृसमं वत्स कलापूर्णं करिष्यति ॥ ४७७ ॥
गत्वेन्द्रदत्तं कपिलो नत्वा च स्वमजिज्ञपत् । उवाच चाध्यापय मां तातान्यः शरणं न मे ॥ ४७८ ॥
उपाध्यायोऽप्यभिदधे भ्रातुष्पुत्रोऽसि मे खलु । विद्यामनोरथेनैवं न पिता[5] ह्रेपितस्त्वया ॥ ४७९ ॥
वच्मि किं त्वहमातिथ्येऽप्यशक्तो निष्परिग्रहः । [6]अध्यस्मच्चागतस्येह क्व नु ते नित्यभोजनम् ॥ ४८० ॥
अभोजनस्य च व्यर्थ एव पाठमनोरथः । विना हि भोजनं वत्स मुरजो[7]ऽपि न गुंजति ॥ ४८१ ॥
कपिलोऽप्यवदत्तात भोजनं भावि भिक्षया । भिक्षां देहीति सिद्धं हि मौञ्जीबन्धाद्द्विजन्मनाम् ॥४८२॥
हस्त्यारूढोऽप्यग्रजन्मा[8] भिक्षमाणो न लज्जते । भिक्षाचरश्च राजेव नाधीनः कस्यचित् क्वचित् ॥४८३॥

---

१ पात्रविशेषः । २ उन्नमय्य । ३ त्वयि अनुपार्जिता गुणा येन तस्मिन् सति । ४ ईर्ष्यावान् । ५ तत्र पिता त्वया न ह्रेपितः न लज्जा प्रापितः । ६ अस्मास्वित्यध्यस्मत् अस्मत्समीपे इति यावत् । ७ मुरजो वाद्यविशेषः । ८ ब्राह्मणः ।

इन्द्रदत्तोऽवदद्वत्स भिक्षा श्रेष्ठा तपस्यताम् । तवैकदाप्यधन्यायां तस्यामध्ययनं कुतः ॥ ४८४ ॥
इत्युक्त्वा स द्विजो बालं तमालम्ब्य स्वबाहुना । शालिभद्रमहेभ्यस्य सद्यः सदनमासदत् ॥ ४८५ ॥
ॐ भूर्भुवः स्वरित्यादि गायत्रीमुच्चकैः पठन् । अजिज्ञपद्द्विजन्मानमात्मानं स बहिः स्थितः ॥ ४८६ ॥
इभ्योऽप्याहूय तं विप्रमूचे किं याचसे ननु । स ययाचे बटोरस्य प्रत्यहं देहि भोजनम् ॥ ४८७ ॥
इभ्योऽपि प्रतिपेदे तद्भुक्त्वा भुक्त्वाऽथ तद्गृहे । उपेन्द्रदत्तं कपिलोऽधिजगे प्रतिवासरम् ॥ ४८८ ॥
शालिभद्रगृहे भोक्तुं कपिलस्य गतस्य तु । सर्वदा युवदास्येका विशिष्टं पर्यवेषयत् ॥ ४८९ ॥
युवा च हासशीलश्च स तस्यामन्वरज्यत । स्त्रीसन्निधानं यूनां हि मन्मथद्रुमदोहदम् ॥ ४९० ॥
सापि तस्मिन्नद्भूक्ता रेमाते च क्रमेण तौ । दास्यप्यन्यमनिच्छन्ती रहस्यूचे तमन्यदा ॥ ४९१ ॥
त्वमेव प्राणनाथो मे किं तु निःस्वोऽस्यतो नरम् । प्राणयात्रार्थमपरं भजे सोऽप्यन्वमन्यत ॥ ४९२ ॥
अन्येद्युश्च पुरे तस्मिन् दासीनामुत्सवोऽभवत् । सापि दास्याप निर्वेदं[4] पुष्पपत्रादिचिन्तया ॥ ४९३ ॥
तां निर्वेदवतीं दृष्ट्वा कपिलः स्माह सुन्दरि । किं दृश्यसे विवर्णास्या हिमालीढेव पद्मिनी ॥ ४९४ ॥
साख्यन्महोऽद्य दासीनां पुष्पपत्रादि नास्ति मे । विगोपिष्यामि मध्ये च दासीनां का गतिर्मम ॥४९५॥
तद्दुःखव्यन्तरावेशविवशः कपिलोऽपि हि । अधृत्या मौनमालम्ब्य तस्थौ दास्यप्यदोऽवदत् ॥ ४९६ ॥
मा विषीद धनोऽत्रास्ति श्रेष्ठी तं च निशात्यये । प्रबोधयति यस्तस्मै स्वर्णमाषौ ददाति सः ॥ ४९७ ॥

---

१ अध्ययन चकार । २ युवती चासौ दासी चेति तथा । ३ निर्धनः । ४ खेदम् । ५ विवर्णमुखी । ६ उत्सवः ।

गच्छेस्त्वमविज्ञातायां विभावर्यां तदोकसि । कल्याणिनेय कल्याणं पठेरकठिनोक्तिभिः ॥ ४९८ ॥
तथेति प्रतिपेदानं कपिलं प्रैजिघाय सा । तस्यामेव तमस्विन्यां निशीथे धनसद्मनि ॥ ४९९ ॥
आरक्षैः स व्रजन् वेगात् पुरवर्त्मन्यसंचरे । धृत्वा चोरधियाबन्धि चोरचर्या हि तादृशी ॥ ५०० ॥
स प्रसेनजितो राज्ञः पुरः प्रातरनीयत । पृष्टश्च कथयामास स्वर्णमापकथां तथा ॥ ५०१ ॥
राजापि तत्तथा श्रुत्वा कृपावारितरंगितः । तं स्माह हं हो याचस्वा यच्छाम्येव यदिच्छसि ॥ ५०२ ॥
विमृश्य मार्गयिष्यामीत्युक्त्वाशोकवनान्तरे । गत्वा योगीवैकमना भूत्वा चाचिन्तयद्द्विजः ॥ ५०३ ॥
द्विमाष्या स्यान्न वस्त्रादि तत्सुवर्णशतं नृपात् । याचे याचितदातृत्वे हि याचना किं तनीयसी ॥ ५०४ ॥
न स्यात्स्वर्णशतेनापि प्रक्रिया वाहनादिका । याचे स्वर्णसहस्रं तदिष्टार्थप्राप्तिवेतनम् ॥ ५०५ ॥
सहस्रेणापि मेऽपत्यविवाहाद्युत्सवः कुतः । इति लक्षमहं याचे याचनाचतुरोऽस्मि हि ॥ ५०६ ॥
लक्षेणापि सुहृद्बन्धुदीनाद्युद्धरणं कुतः । कोटिं कोटिशतं कोटिसहस्रं वा तदर्थये ॥ ५०७ ॥
एवं चिन्तयतस्तस्य शुभकर्मोदयादभूत् । इति धीः सुपरीणामा धीर्हि कर्मानुसारिणी ॥ ५०८ ॥
अपि माषद्वयप्राप्तौ यः संतोषोऽभवन्मम । सोऽद्य कोटेरपि प्राप्तौ मां तन्नीत इवामुचत् ॥ ५०९ ॥
विद्यार्थमागतस्येह मम दुर्व्यसनं ह्यदः । सागरं गन्तुकामस्य हिमवद्गमनोपमम् ॥ ५१० ॥
ज्ञानदानं मयि गुरोः स्थले कमलरोपणम् । यद्दास्यामपि दासत्वमकार्षमकुलोचितम् ॥ ५११ ॥
तदलं विषयैरेभिरिति संवेगमासवान् । उत्पन्नजातिस्मरणः स्वयंबुद्धो बभूव सः ॥ ५१२ ॥

---

१ कल्याणिन्याः श्वश्र्वाः पुत्रस्तत्संबोधनम् । २ प्राहिणोत् । ३ मध्यरात्रे ।

मूर्धजान्[1] मूर्ध्न उत्कृत्य स्वयं देवतयार्पितम् । रजोहरणवदनवस्त्रिकादिकमाददे ॥ ५१३ ॥
राजानं स गतो राज्ञापृच्छीति किमचिन्तयः । स्वमनोरथविस्तारमथाख्यायाब्रवीदिति ॥ ५१४ ॥
यथा लाभस्तथा लोभो लाभाल्लोभः प्रवर्धते । द्विमाष्या चिन्तितं कार्यं कोट्यापि न हि निष्ठितम् ॥५१५॥
राजापि विस्मितः प्रोचे कोटीरपि ददाम्यहम् । भुंक्ष्व भोगान् व्रतं मुंच न व्रते प्रतिभूस्तव[2] ॥ ५१६ ॥
कपिलोऽप्यब्रवीदर्थं राजन्नलमनर्थदैः । निर्ग्रन्थो भूतवानस्मि धर्मलाभोऽस्तु भद्र ते ॥ ५१७ ॥
इत्युक्त्वा कपिलमुनिस्ततो निर्गत्य निर्ममः । निरीहो निरहंकारो विजहार वसुन्धराम् ॥ ५१८ ॥
एवं व्रतं पालयतः कपिलस्य महामुनेः । षण्मासपर्ययेणाभूत् केवलज्ञानमुज्ज्वलम् ॥ ५१९ ॥
इतश्चासीद्राजगृहनगरस्यान्तरालगा । अष्टादशयोजनानुप्रमाणा दारुणाटवी ॥ ५२० ॥
तत्र च कडदासाख्या बलभद्रादयोऽभवन् । शतानि पञ्च चौरास्तान् बोधार्हान् कपिलोऽबुधत् ॥५२१॥
चौराणामुपकाराय तेषां च स महामुनिः । अभ्यागात्तामरण्यानीं[3] शरण्यः सर्वजन्मिनाम् ॥ ५२२ ॥
एकश्च चौरो वृक्षाग्रमधिरूढः प्लवंगवत् । ददर्श दूरादायातं कपिलं श्रमणोत्तमम् ॥ ५२३ ॥
स चौरोऽचिन्तयत् कोऽयमागच्छत्यभिभूय नः । तमाख्यदिति सेनान्ये सेनान्यं सोऽभ्युपाययौ ॥५२४॥
दिष्ट्या क्रीडनमायातमिति सेनापतिर्ब्रुवन् । नृत्य नृत्य श्रमणकेत्यज्ञ आज्ञापयन्मुनिम् ॥ ५२५ ॥
कपिलर्षिरदोऽवादीद्वादको नास्ति कश्चन । वाद्यं विना कुतो नृत्तं न कार्यं कारणं विना ॥ ५२६ ॥
तालैर्[4]वाद्यमथाकार्षुश्चौराः पञ्च शतान्यपि । कपिलोऽपि ननर्तोच्चैर्जगौ च श्रुतिशर्मदम्[5] ॥ ५२७ ॥

१ केशान् । २ साक्षी । ३ महदरण्यमरण्यानी ताम् । ४ तालिकैव वाद्यम् । ५ कर्णसुखकरम् ।

अन्यदा भायलोऽद्राक्षीत्तेजोराशी इवांगिनौ । हस्तविन्यस्तपूजोपकरणौ पुरुषावुभौ ॥ ५४२ ॥
तौ दृष्ट्वा दृष्टिसुखदावाजन्मसुहृदाविव । कौ युवामिति पप्रच्छ भायलोऽशंसतां च तौ ॥ ५४३ ॥
आवां नागकुमारौ भोः पातालभवनालयौ । नाम्ना कंबलशबलौ धरणेन्द्रस्य शासनात् ॥ ५४४ ॥
देवाधिदेवप्रतिमां विद्युन्मालिकृतामिमाम् । आयावोऽर्चयितुं चैत्यमेवमर्चोपहारिणौ ॥ ५४५ ॥
॥ युग्मम् ॥

अस्या हि विदिशानद्या ह्रदमध्येन वर्त्मना । मज्जनोन्मज्जने नित्यमावां कुर्वोऽत्र हंसवत् ॥ ५४६ ॥
भायलः स्माह पाताले युवां स्वभवनानि मे । गृहीतभगवन्निश्रस्याद्य दर्शयतं सुरौ ॥ ५४७ ॥
शाश्वतीः प्रतिमास्तत्र वन्दितुं मे मनोरथः । स पूर्यतां प्रसादाद्वां न मुधा देवदर्शनम् ॥ ५४८ ॥
ताभ्यां प्रपद्य च तथा तत्र तेनैव वर्त्मना । औत्सुक्यादर्धरचितपूजोऽनीयत भायलः ॥ ५४९ ॥
ववन्दे शाश्वतीरर्हत्प्रतिमास्तत्र भायलः । तं चोचे धरणस्तोषात् प्रसादो याच्यतामिति ॥ ५५० ॥
भायलः स्माह मन्नाम सर्वत्र ज्ञायते यथा । तथास्तु नामस्थेमैव पुरुषाणां हि पौरुषम् ॥ ५५१ ॥
धरणेन्द्रोऽप्युवाचैवं चंडप्रद्योतभूपतिः । देवकीयपुरं तत्र त्वन्नाम्ना कारयिष्यति ॥ ५५२ ॥
कृतार्धपूजस्त्वायासीरिति कालेन गच्छता । गुप्तैव मिथ्यादृग्भिः सा प्रतिमा पूजयिष्यते ॥ ५५३ ॥
तस्याः प्रतिकृतिस्तैश्च बहिः संस्थापयिष्यते । आदित्यो भायलस्वामिनामायमिति वादिभिः ॥ ५५४ ॥
ततश्च भायलस्वामिसूर्य इत्यखिलो जनः । पूजयिष्यति दंभोऽपि सुप्रयुक्तो न निष्फलः ॥ ५५५ ॥

१ गृहीतभगवदाश्रयस्य । २ नामस्थैर्यम् ।

अन्यथाज्ञायतोऽप्येवमाः पापोऽस्मि धिगेव माम् । अत्याहितं ह्यापतितमशिवं मत्कृतं ह्यदः ॥ ५५६ ॥
देवाधिदेवप्रतिमाप्रतिकृत्या दुराशयैः । मन्नाम्नादित्य इति कृत्वा यत्पूजयिष्यते ॥ ५५७ ॥
धरणोऽप्यन्यधान्मा गाः शुचं किं क्रियतेऽनघ । एतद्धि दुःषमाकाललीलायितमनुज्ज्वलम् ॥ ५५८ ॥
ततो नागकुमाराव्यां पथा तेनैव तत्क्षणम् । नीत्वामुच्यत तत्रैव स्वप्नदर्शीव जायलः ॥ ५५९ ॥
इतश्च नगरे वीतभये राजाप्युदायनः । नित्यकर्मरतः प्रातर्देवतावसथं ययौ ॥ ५६० ॥
ददर्श चाग्रे प्रतिमां म्लानमाल्यामुदायनः । अचिन्तयच्च काप्यन्या प्रतिमेयं न सा पुनः ॥ ५६१ ॥
आरोपितानि तस्यां हि पुष्पाण्यहन्यपरेऽपि हि । तत्कालावचितानीवादृश्यन्त किमिदं हहा ॥ ५६२ ॥
स्तंभलग्ना सदैवास्थादिह पाञ्चालिकेव या । सा दासी देवदत्तापि विलीनेव न दृश्यते ॥ ५६३ ॥
निदाघे मरुवारीव नष्टश्च करिणां मदः । तदागादनिलवेगो नियतं गन्धसिन्धुरः ॥ ५६४ ॥
आगत्यानिलवेगेन नूनं प्रद्योतभूपतिः । प्रतिमां देवदत्तां च निशि चौर इवाहरत् ॥ ५६५ ॥
उदायनोऽपि प्रद्योतं तत्क्षणादन्वपेणयत् । वादयन् क्ष्मां हयखुरैर्जयभंभामिवापराम् ॥ ५६६ ॥
दशाथ बद्धमुकुटा राजानोऽपि तमन्वगुः । एकादशापि ते चाभान् रुद्रा इव महौजसः ॥ ५६७ ॥
अथोदायनसैन्यानां प्रत्यक्षा जांगलक्षितौ । आसन् पयायमानार्करोचिर्मय्यो मरीचिकाः ॥ ५६८ ॥
आस्फलन्तो मिथो भूमौ लुठन्तोऽपि च सैनिकाः । तृषा न किंचिदद्राक्षुर्दिवसेऽपि हि घूकवत् ॥ ५६९ ॥
सद्यः प्रभावतीदेवं तदास्मार्षीदुदायनः । स्मरति व्यसने प्राप्ते को वा नैवेष्टदेवताम् ॥ ५७० ॥

---

१ देवालयम् । २ जागलदेशभूमौ । ३ जलमिवाचरन्त्यो या सूर्यस्य रोचिषस्तन्मय्यो मरीचिका मृगतृष्णिकाः प्रत्यक्षा अभवन् ।

स्मृतमात्रोपस्थितेन तेन देवेन वारिणा । त्रिपुष्कराण्यपूर्यन्त प्रमोदेन च सैनिकाः ॥ ५७१ ॥
कटकं सुस्थितं चाभूत् पायं[1] पायं पयस्तदा । विनाप्यन्नेन जीव्येत जीवनीयं[2] विना न तु ॥ ५७२ ॥
ततः प्रभावतीदेवो जगाम निजमालयम् । राजा वीतभयेशोऽपि प्रापदुज्जयिनीं पुरीम् ॥ ५७३ ॥
तत्रोदायनराजस्यावन्तिनाथस्य चाचिरात् । मिथो दूतमुखेनाभूद्[3]रथसंगरसंगरः ॥ ५७४ ॥
उदायनोऽथारुरोह धन्वी सांग्रामिकं रथम् । वादयामास मौर्वीं च रणतूरमिवापरम् ॥ ५७५ ॥
प्रद्योतोऽपि हि विज्ञाय रथाजय्यमुदायनम् । आरूढोऽनिलवेगेभं का प्रतिज्ञा बलीयसि ॥ ५७६ ॥
उदायनोऽपि तं दृष्ट्वा गजारूढमदोऽवदत् । पाप्म[4]न्नसत्यसंधोऽसि तथापि न भवस्यरे ॥ ५७७ ॥
इत्युक्त्वा मंडलिकया भ्रमयन् स्वरथं रयात् । प्रद्योतेन समं दोष्मानुदायनोऽभ्यढौकत ॥ ५७८ ॥
शिलीमुखैः[5] सूचिमुखैर्धनुर्धरधुरन्धरः । विव्याधानिलवेगस्य विष्वक् पादतलानि सः ॥ ५७९ ॥
बहिः[6] शलाकासंपूर्णपतद्ग्रहमुखोपमैः । चरणैर्गन्तुमसहस्तद्द्विपोऽपि पपात च ॥ ५८० ॥
उदायनेन प्रद्योतः पातयित्वाथ कुञ्जरात् । हस्तेन जगृहे बद्ध्वा यशोराशिरिवोच्चकैः ॥ ५८१ ॥
ललाटेऽङ्कं व्यधाद्दासीपतिरित्यक्षरैरथ । उदायनोऽवन्तिपतेः स्वां प्रशस्तिं नवामिव ॥ ५८२ ॥
तमंकितं दासमिव कृत्वा वीतभयेश्वरः । तद्दिव्यप्रतिमारत्नमानेतुं विदिशां ययौ ॥ ५८३ ॥
पूजयित्वा च नत्वा च तां दिव्यां प्रतिमां नृपः । उपादातुमुपाक्रंस्त गिरिवन्न चचाल सा ॥ ५८४ ॥

---

१ पीत्वा पीत्वा । २ जलम् । ३ रथयुद्धप्रतिज्ञा । ४ हे पाप । ५ बाणैः । ६ बहिर्भागे शलाकाभिः सपूर्णं यत् पतद्ग्रह निष्ठीवनपात्र तस्य मुखमुपमा येषा तैः ।

देवाधिदेवमर्चित्वा सविशेषमुदायनः । उवाच किमन्नाग्यं मे यन्नेति परमेश्वरः ॥ ५८५ ॥
देवोऽप्युवाच मा शोचीर्यद्वीतभयपत्तनम् । पांशुवृष्ट्या स्थलं भावि तन्नैष्यामि महाशय ॥ ५८६ ॥
देवतादेशमासाद्योदायनोऽपि न्यवर्तत । प्रयाणवारणी प्रावृडन्तराले वभूव च ॥ ५८७ ॥
तत्रैव शिबिरं राजा न्यधात्पत्तनसन्निभम् । निवसन्ति हि राजानो यत्र तत्रापि पत्तनम् ॥ ५८८ ॥
तस्थुः कृत्वा धूलिवप्रं तद्रक्षार्थं नृपा दश । ततस्तच्छिबिरं जज्ञे नाम्ना दशपुरं पुरम् ॥ ५८९ ॥
उदायनोऽपि प्रद्योतं रणात्तं भोजनादिना । अपश्यदात्मानमिव क्षत्रधर्मोऽयमीदृशः ॥ ५९० ॥
जाते पर्युषणापर्वण्यन्यदोदायनोऽकृत । उपवासं महाश्राद्धस्तस्य देवस्य शासनात् ॥ ५९१ ॥
सूदोऽथापृच्छत्प्रद्योतं किमद्य नृप भोक्ष्यसे । तच्छ्रुत्वावन्तिनाथोऽपि क्षोभादिदमचिन्तयत् ॥ ५९२ ॥
प्रश्नो ह्यकृतपूर्वोऽयमद्य क्षेमावहो न मे । उपहासवचो ह्येतद्वधबन्धादिसूचकम् ॥ ५९३ ॥
सूपकारमपृच्छच्च किमद्य प्रश्नकारणम् । विद्याकृष्टेवरसवत्यागाद्धि समये सदा ॥ ५९४ ॥
सूदोऽप्यकथयद्राजन्नद्य पर्युषणोत्सवः । उपोषितोऽस्मि नः स्वामी सान्तःपुरपरिच्छदः ॥ ५९५ ॥
राजार्थं या रसवती भोजितोऽसि सदा तया । अधुना तु त्वदर्थं तां करिष्यामीति पृच्छ्यसे ॥ ५९६ ॥
प्रद्योतः स्माह हे सूदोपवासोऽद्यास्तु मेऽपि हि । ज्ञापितं साधु पर्वेदं श्रावकौ पितरौ मम ॥ ५९७ ॥
सूदोऽप्युदायनायाख्यत्तत्प्रद्योतस्य भाषितम् । उदायनोऽवददसौ धूर्तो जानासि वैशिकम्[3] ॥ ५९८ ॥
यादृशे तादृशे वास्मिन् कारागारनिवासिनि । न मे साध्वी पर्युषणेत्यमुंचत्तमुदायनः ॥ ५९९ ॥

---

१ रजोवृष्ट्या । २ सङ्ग्रामे गृहीतम् । ३ वेश्यायां प्रसूतो वैशिकस्तम् वेश्यानुरक्त त जानासि किम् ।

प्रद्योतं क्षमयामास पर्वोचितमुदायनः । पट्टबन्धं च विदधे तस्य ज्ञालांकगोपनम् ॥ ६०० ॥
पट्टबन्धस्तदाद्यासीन्नाज्ञां वैजवसूचकः । किरीटमेव ते पूर्वं बबन्धुर्मौलिमंडनम् ॥ ६०१ ॥
प्रद्योतायावन्तिदेशमुदायननृपो ददौ । वर्षारात्रे त्वतिक्रान्ते स्वयं वीतभयं ययौ ॥ ६०२ ॥
शिबिरे तत्र वणिजस्तस्थिवांसस्तथैव हि । तैरेव वसमानं तज्जातं दशपुरं भुवि ॥ ६०३ ॥
प्रद्योतोऽपि वीतभयप्रतिमायै विशुद्धधीः । शासनेन दशपुरं दत्वावन्तिपुरीमगात् ॥ ६०४ ॥
अन्येद्युर्विदिशां गत्वा भायलस्वामिनामकम् । देवकीयं पुरं चक्रे नान्यथा धरणोदितम् ॥ ६०५ ॥
विद्युन्मालिकृतायै तु प्रतिमायै महीपतिः । प्रददौ द्वादश ग्रामसहस्रान् शासनेन सः ॥ ६०६ ॥
अत्रान्तरे वीतभयस्थितं नृपमुदायनम् । एत्य प्रभावतीदेवः स्नेहेन प्रत्यबोधयत् ॥ ६०७ ॥
इहापि यास्ति प्रतिमा जीवंतस्वामिनो नवा । सापि राजन्नसामान्यप्रभावात्तीर्थमुत्तमम् ॥ ६०८ ॥
ब्रह्मर्षिणा केवलिना कपिलेन महात्मना । श्वेताम्बरेण प्रतिमा ह्यसौ राजन् प्रतिष्ठिता ॥ ६०९ ॥
अग्रेतनी च प्रतिमा प्रतिमेयमपि त्वया । पूज्याथ सर्वविरतिरपि ग्राह्या महाफला ॥ ६१० ॥
उदायनोऽपि तद्वाचं प्रतिपेदे तथैव ताम् । तन्मनःकदलीमेघः स देवोऽपि तिरोदधे ॥ ६११ ॥
ततश्चान्येद्युरुद्युक्तो धर्मे राजाप्युदायनः । जग्राह पौषधौकस्थः पाक्षिकं पौषधव्रतम् ॥ ६१२ ॥
रात्रिजागरणे तस्य शुभध्यानेन तस्थुषः । ईदृगध्यवसायोऽभूद्विवेकस्य सहोदरः ॥ ६१३ ॥
धन्यास्ते नगरग्रामा ये श्रीवीरेण पाविताः । राजादयोऽपि ते धन्या यैर्धर्मोऽश्रावि तन्मुखात् ॥ ६१४ ॥

## ॥ अथ द्वादशः सर्गः ॥

अपृच्छदभयो भूयः प्रणम्य परमेश्वरम् । उदायनस्य राजर्षेः क उदर्को[1] भविष्यति ॥ १ ॥
प्रकृष्टतीर्थकृत्कर्मनिर्जरानिरतस्ततः । कथयामास भगवानिति श्रीज्ञातनन्दनः ॥ २ ॥
एकदोदायनमुनेः पृथ्व्यां विहरतः सतः । उत्पत्स्यते महाव्याधिरकालापथ्यभोजनैः[2] ॥ ३ ॥
अनवद्याशयैर्वैद्यैः सोऽन्यदा वक्ष्यते मुनिः । भुंक्ष्व देहनिरीहोऽपि गुणरत्नोदधे दधि ॥ ४ ॥
विहरिष्यत्यथो गोष्ठेषूदायनमहामुनिः । सुलभा दधिभिक्षा हि तत्र दोषविवर्जिता ॥ ५ ॥
अन्यदोदायनो वीतभयं यास्यति पत्तनम् । भूभुजा भागिनेयेन केशिना समधिष्ठितम् ॥ ६ ॥
ज्ञात्वोदायनमायातं केश्यमात्यैर्भणिष्यते । निर्विण्णस्तपसामेष नियतं तव मातुलः ॥ ७ ॥
ऋद्धं[3] राज्यं ह्यैन्द्रपदं तत्त्यक्त्वानुशयं[4] दधत् । नूनं राज्यार्थमेवागाद्विश्वसीर्मा स्म सर्वथा ॥ ८ ॥
केशी वक्ष्यत्यसौ राज्यं गृह्णात्वद्यापि कोऽस्म्यहम् । गोपालस्य हि कः कोपो धनं गृह्णाति चेद्धनी ॥९॥
वक्ष्यन्ति मंत्रिणः पुण्यैस्तव राज्यमुपस्थितम् । प्रदत्तं न हि केनापि राजधर्मोऽपि नेदृशः[5] ॥ १० ॥
पितुर्भ्रातुर्मातुलाद्वा सुहृदो वापरादपि । प्रसह्याप्याहरेद्राज्यं तद्दत्तं को हि मुञ्चति ॥ ११ ॥
तैरेवमुदितोऽत्यर्थं त्यक्त्वा भक्तिमुदायने । केशी प्रक्ष्यति[6] किं कार्यं दापयिष्यन्ति ते विषम् ॥ १२ ॥

---

१ परिणामः । २ अकालेऽपथ्यभोजनैः । ३ ऋद्धिमत् महदिति यावत् । ४ पश्चात्तापम् । ५ ईदृशस्त्वदुक्तप्रकारो राजधर्मो नास्ति । ६ प्रश्नं करिष्यति ।

विषेण संस्कृत्य दधि पशुपालिकयैकया । केशी दापयिता तस्मै परप्रेर्यस्य का मतिः ॥ १३ ॥
तद्विषं देवता हृत्वा मुनिमेवं भणिष्यति । सविषो दधिलाभस्ते मा कृथास्तद्दधिस्पृहाम् ॥ १४ ॥
ततः परिहृते दध्नि रोगो वर्धिष्यते मुनेः । व्याधयो हि विजृंभन्ते छलमासाद्य भूतवत् ॥ १५ ॥
रोगनिग्रहणार्थं स पुनरादास्यते दधि । विषापहारं त्रीन् वारान् देवता सा करिष्यति ॥ १६ ॥
अन्यदा तु प्रमादेन तद्विषं देवतापि सा । न हरिष्यत्यथ मुनिः सविषं दधि सोऽत्स्यति ॥ १७ ॥
ततश्चैतन्यचौरीभिर्विषवीचीभिरात्मनः । ज्ञातावसानोऽनशनं महर्षिः स प्रपत्स्यते ॥ १८ ॥
त्रिंशद्दिनीमनशनं पालयित्वा समाधिना । उत्पन्नकेवलज्ञानो विपद्य शिवमेष्यति ॥ १९ ॥
उदायने शिवगते देवता पुनरेयुषी । ज्ञात्वा तादृक्कालरात्रिरिव कोपमुपेष्यति ॥ २० ॥
कोपाच्च सा वीतभयं पूरयिष्यति पांशुभिः । तदादि पांशुवृष्टिं च करिष्यति निरन्तरम् ॥ २१ ॥
तदैव प्रतिमा सापि कपिलर्षिप्रतिष्ठिता । भविष्यति महाभाग निधानमिव भूगता ॥ २२ ॥
शय्यातरं कुंभकारमुदायनमहामुनेः । अनागसं ततो हर्त्री देवता पांशुवर्षिणी ॥ २३ ॥
सिनपल्ल्यां च तं नीत्वा तन्नाम्नैव हि देवता । कुंभकारकृतमिति तत्र स्थानं करिष्यति ॥ २४ ॥
पुनरप्यभयोऽपृच्छत् प्रणम्य परमेश्वरम् । उदायनकुमारस्याभीचेः का भाविनी गतिः ॥ २५ ॥
स्वाम्याख्यत् केशिने राज्यं प्रदत्तवति वप्तरि । स हि प्रभावतीसूनुरभीचिश्चिन्तयिष्यति ॥ २६ ॥
मयि सत्यपि भक्तेऽपि पुत्रे राज्याधिकारिणि । तातोऽदात् केशिने राज्यं राज्यर्णमिव धारयन् ॥ २७ ॥

१ त्रिंशतः दिनानां समाहारस्त्रिंशद्दिनी ताम् । २ आगता सती । ३ पितरि । ४ राज्यमेव ऋणम् ।

विवेको मत्पितुः कोऽयं भगिनीनन्दनाय यत् । केशिनेऽदाददो राज्यं हन्त कारा[1]धिकारिणे ॥ २८ ॥
तातः प्रभुर्मे तत्स्वैरं यदिच्छति करोतु तत् । केशिनोऽद्य कथं सेवां करिष्ये तत्सुतोऽस्मि हि ॥ २९ ॥
इति पित्राभिभूतः सोऽभिगमिष्यति कूणिकम् । अभिमानवतां श्रेयान् विदेशो हि पराभवे ॥ ३० ॥
अथ मातृष्वसेयेन कूणिकेन सगौरवम् । वीक्ष्यमाणः सदाभीचिः सुखं स्थास्यति तत्र च ॥ ३१ ॥
श्रमणोपासकः सम्यग्जीवाजीवादितत्त्ववित् । अभीचिः श्रावकधर्मं यथावत् पालयिष्यति ॥ ३२ ॥
गृहिधर्मं समा[2] बह्वीः पालयन्नप्यखंडितम् । पराभवं स्मरन् वैरं न स हास्यत्युदायने ॥ ३३ ॥
कृत्वा संलेखनां सम्यक् पाक्षिकानशनेन सः । पितृवैरमनालोच्य मृत्वा भाव्यसुरोत्तमः ॥ ३४ ॥
एवं पल्योपमं तत्र परिपाल्यायुरात्मनः । महाविदेहेषूत्पद्याभीचिजीवः शिवंगमी ॥ ३५ ॥
पृच्छति स्माभयोऽथैवं कपिलर्षिप्रतिष्ठिता । प्रकाशमेष्यति कदा प्रतिमा पारमेश्वरी ॥ ३६ ॥
स्वाम्याख्याति स्म सौराष्ट्रलाटगुर्जरसीमनि । क्रमेण नगरं भावि नाम्नाणहिलपाटकम् ॥ ३७ ॥
आर्यभूमेः शिरोरत्नं कल्याणानां निकेतनम् । एकातपत्रार्हद्धर्मं तद्धि तीर्थं भविष्यति ॥ ३८ ॥
चैत्येषु रत्नमय्योऽर्हत्प्रतिमास्तत्र निर्मलाः । नन्दीश्वरादिप्रतिमाकथां नेष्यन्ति सत्यताम् ॥ ३९ ॥
भासुर[3]स्वर्णकलशश्रेण्यलंकृतमौलिभिः । रोचिष्यते च तच्चैत्यैर्विश्रान्ततपनै[4]रिव ॥ ४० ॥
श्रमणोपासकस्तत्र प्रायेण सकलो जनः । कृतातिथिसंविभागो भोजनाय यतिष्यते ॥ ४१ ॥

१ कारागृहस्याधिकारिणे । २ वर्षाणि । ३ भासुराणां दीप्तानां स्वर्णकुम्भानां श्रेणिभिरलंकृता मौलयः शिखराणि येषां तानि तैः ।
४ तपनः सूर्यः ।

लोको भविष्यति ॥ ४२ ॥
परसंपद्यनीर्ष्यालुः[1] संतुष्टश्च स्वसंपदा । पात्रेषु दानशीलश्च तत्र लोको भविष्यति ॥ ४३ ॥
आढ्याश्च धनिनस्तत्रालकायामिव[2] गुह्यकाः । वप्स्यन्ति द्रविणं सप्तक्षेत्र्यामत्यन्तमार्हताः ॥ ४४ ॥
परस्वपरदारेषु[3] सर्वः कोऽपि पराङ्मुखः । भावी तस्मिन् पुरे लोकः सुषमाकालभूरिव ॥ ४५ ॥
अस्मन्निर्वाणतो वर्षशतान्यभय षोडश । नवषष्टिश्च यास्यन्ति यदा तत्र पुरे तदा ॥ ४६ ॥
कुमारपालो भूपालश्चौलुक्यकुलचन्द्रमाः । भविष्यति महाबाहुः प्रचंडाखंडशासनः ॥ ४७ ॥
स महात्मा धर्मदानयुद्धवीरः प्रजां निजाम् । ऋद्धिं नेष्यति परमां पितेव परिपालयन् ॥ ४८ ॥
ऋजुरप्यतिचतुरः शान्तोऽप्याज्ञादिवस्पतिः[4] । क्षमावानप्यधृष्यश्च स चिरं क्षामविष्यति ॥ ४९ ॥
स आत्मसदृशं लोकं धर्मनिष्ठं करिष्यति । विद्यापूर्णमुपाध्याय इवान्तेवासिनं[5] हितः ॥ ५० ॥
शरण्यः शरणेच्छूनां परनारीसहोदरः । प्राणेभ्योऽपि धनेभ्योऽपि स धर्मं बहु मंस्यते ॥ ५१ ॥
पराक्रमेण धर्मेण दानेन दययाज्ञया । अन्यैश्च पुरुषगुणैः सोऽद्वितीयो भविष्यति ॥ ५२ ॥
स कौबेरीमातुरुष्कमैन्द्रीमात्रिदशापगाम्[6][7] । याम्यामाविन्ध्यमावार्धिं[8][9] पश्चिमां साधयिष्यति ॥ ५३ ॥
अन्यदा वज्रशाखायां मुनिचन्द्रकुलोद्भवम् । आचार्यं हेमचन्द्रं स द्रक्ष्यति क्षितिनायकः ॥ ५४ ॥
तद्दर्शनात्प्रमुदितः केकीवाम्बुददर्शनात् । तं मुनिं वन्दितुं नित्यं स भद्रात्मा त्वरिष्यते ॥ ५५ ॥
तस्य सूरेर्जिनचैत्ये कुर्वतो धर्मदेशनाम् । राजा सश्रावकामात्यो वन्दनाय गमिष्यति ॥ ५६ ॥

---

१ ईर्ष्यारहित. । २ अलका कुबेरपुरी । ३ परधनेषु परदारेषु च । ४ आज्ञया दिवस्पतिः इंद्रः इंद्रसदृश इत्यर्थः । ५ शिष्यम् । ६ तुरुष्कदेशपर्यन्तं कौबेरीमुत्तरदिशम् । ७ गगानदीपर्यन्तमैन्द्रीं पूर्वाम् । ८ विन्ध्याचलपर्यन्त याम्या दक्षिणाम् । ९ समुद्रपर्यन्तम् ।

तत्र दवं नमस्कृत्य स तत्त्वमविदन्नपि । वन्दिष्यते तमाचार्यं भावशुद्धेन चेतसा ॥ ५६ ॥
स श्रुत्वा तन्मुखात्प्रीत्या विशुद्धां धर्मदेशनाम् । अणुव्रतानि सम्यक्त्वपूर्वकाणि प्रपत्स्यते ॥ ५७ ॥
स प्राप्तबोधो भविता श्रावकाचारपारगः । आस्थानेऽपि स्थितो धर्मगोष्ठ्या स्वं रमयिष्यति ॥ ५८ ॥
अन्नशाकफलादीनां नियमांश्च विशेषतः । आदास्यते प्रत्यहं स प्रायेण ब्रह्मचर्यकृत् ॥ ५९ ॥
सोधारणस्त्रीर्न परं स सुधीर्वर्जयिष्यति । धर्मपत्नीरपि ब्रह्म चरितुं बोधयिष्यति ॥ ६० ॥
मुनेस्तस्योपदेशेन जीवाजीवादितत्त्ववित् । आचार्य इव सोऽन्येषामपि बोधिं प्रदास्यति ॥ ६१ ॥
येऽर्हद्धर्मद्विषः केऽपि पांडुराहद्विजादयः । तेऽपि तस्याज्ञया गर्भश्रावका इव भाविनः ॥ ६२ ॥
अपूजितेषु चैत्येषु गुरुष्वप्रणतेषु च । न भोक्ष्यते स धर्मज्ञः प्रपन्नश्रावकव्रतः ॥ ६३ ॥
अपुत्रमृतपुंसां स द्रविणं न ग्रहीष्यति । विवेकस्य फलं ह्येतदतृप्ता ह्यविवेकिनः ॥ ६४ ॥
पांडुप्रभृतिभिरपि त्यक्ता या मृगया न हि । स स्वयं त्यक्ष्यति जनः सर्वोऽपि च तदाज्ञया ॥ ६५ ॥
हिंसानिषेधके तस्मिन् दूरेऽस्तु मृगयादिकम् । अपि मत्कुटयूकादि नान्त्यजोऽपि हनिष्यति ॥ ६६ ॥
तस्मिन्निषिद्धपापर्द्धावरण्ये मृगजातयः । सदाप्यविघ्नरोमन्था भाविन्यो गोष्ठधेनुवत् ॥ ६७ ॥
जलचरस्थलचरखेचराणां स देहिनाम् । रक्षिष्यति सदा मारिं शासने पाँकशासनः ॥ ६८ ॥
ये चाजन्मापि मांसादास्ते मांसस्य कथामपि । दुःस्वप्नमिव तस्याज्ञावशान्नेष्यंति विस्मृतिम् ॥ ६९ ॥

---

१ आत्मानम् । २ साधारणनारीर्वर्जयिष्यतीति केवल न, परं धर्मपत्नीरपि बोधयिष्यतीत्यन्वयः । ३ पाडुः राजा । ४ चडालोऽपि । ५ निषिद्धा पापर्द्धिर्मृगया येन तस्मिन् । ६ चर्वितचर्वण रोमन्थः । ७ इन्द्रस्तत्तुल्य इति यावत् । ८ मासभक्षकाः ।

तन्मद्यमनवद्यात्मा स सर्वत्र निरोत्स्यति ॥ ७० ॥
दशार्हैर्न परित्यक्तं यत्पुरा श्रावकैरपि । न यथा मद्यभांडानि घटयिष्यति चक्र्यपि[1] ॥ ७१ ॥
स तथा मद्यसन्धानं निरोत्स्यति महीतले । तदाज्ञात्यक्तमद्यानां प्रभविष्यन्ति संपदः ॥ ७२ ॥
मद्यपानां सदा मद्यव्यसनक्षीणसंपदाम् । तस्य स्ववैरिण इव नामाप्युन्मूलयिष्यति ॥ ७३ ॥
नलादिभिरपि क्ष्मापैर्द्यूतं त्यक्तं न यत्पुरा । न भविष्यन्ति मेदिन्यां तस्योदयिनि शासने ॥ ७४ ॥
पारापतपणक्रीडाकुक्कुटायोधनान्यपि । करिष्यति महीमेतां जिनायतनमंडिताम् ॥ ७५ ॥
स प्रायेण प्रतिग्राममपि निःसीमवैभवः । रथयात्रोत्सवं सोऽर्हत्प्रतिमानां करिष्यति ॥ ७६ ॥
प्रति ग्रामं प्रति पुरमासमुद्रं महीतले । अंकयिष्यति मेदिन्यां स संवत्सरमात्मनः ॥ ७७ ॥
दायं[2] दायं द्रविणानि विरचय्यानृणं[3] जगत् । एकदा श्रोष्यति कथाप्रसंगे स गुरोर्मुखात् ॥ ७८ ॥
प्रतिमां पांशुगुप्तां तां कपिलर्षिप्रतिष्ठिताम् । आनेष्यामीति स तदा करिष्यति मनोरथम् ॥ ७९ ॥
पांशुस्थलं खानयित्वा प्रतिमां विश्वपावनीम् । ज्ञात्वा निश्चेष्यते राजा प्रतिमां हस्तगामिनीम् ॥ ८० ॥
तदैव मनउत्साहं निमित्तान्यपराण्यपि । प्रारप्स्यते खानयितुं स्थलं वीतभयस्य तत् ॥ ८१ ॥
ततो गुरुमनुज्ञाप्य नियोज्यायुक्तपूरुषान् । करिष्यति च सांनिध्यं तदा शासनदेवता ॥ ८२ ॥
सत्त्वेन तस्य परमार्हतस्य पृथिवीपतेः । खन्यमानस्थले मंक्षु प्रतिमाविर्भविष्यति ॥ ८३ ॥
राज्ञः कुमारपालस्य तस्य पुण्येन भूयसा । ग्रामाणां शासनं दत्तं तैदप्याविर्भविष्यति[4] ॥ ८४ ॥
तदा तस्यै प्रतिमायै यदुदायनभूभुजा ।

---

१ कुम्भकारोऽपि । २ दत्वा दत्वा । ३ ऋणरहितम् । ४ तच्छासनं शासनलेख इति यावत् ।

नृपायुक्तास्तां प्रतिमां प्रत्नामपि[1] नवामिव । रथमारोपयिष्यन्ति पूजयित्वा यथाविधि ॥ ८५ ॥
पूजाप्रकारेषु पथि जायमानेष्वनेकशः । क्रियमाणेष्वहोरात्रं संगीतेषु निरन्तरम् ॥ ८६ ॥
तालिकारासकेषूच्चैर्भवत्सु ग्रामयोषिताम् । पंचशब्देष्वातोद्येषु वाद्यमानेषु संमदात् ॥ ८७ ॥
पक्षद्वये चामरेषूत्पतत्सु च पतत्सु च । नेष्यन्ति प्रतिमां तां चायुक्ताः पत्तनसीमनि ॥ ८८ ॥
॥ त्रिभिर्विशेषकम् ॥

सान्तःपुरपरीवारश्चतुरंगचमूवृतः । सकलं संघमादाय राजा तामभियास्यति ॥ ८९ ॥
स्वयं रथात्समुत्तार्य गजेन्द्रमधिरोह्य च । प्रवेशयिष्यति पुरे प्रतिमां तां स भूपतिः ॥ ९० ॥
उपस्वभवनं क्रीडाभवने संनिवेश्य ताम् । कुमारपालो विधिवत्त्रिसन्ध्यं पूजयिष्यति ॥ ९१ ॥
प्रतिमायास्तथा तस्या वाचयित्वा स शासनम् । उदायनेन यद्दत्तं तत्प्रमाणीकरिष्यति ॥ ९२ ॥
प्रतिमायाः स्थापनार्थं तस्यास्तत्रैव पार्थिवः । प्रासादं स्फटिकमयममायः[2] कारयिष्यति ॥ ९३ ॥
प्रासादोऽष्टापदस्येव युवराजः स कारितः । जनयिष्यति संभाव्यो विस्मयं जगतोऽपि हि ॥ ९४ ॥
स भूपतिः प्रतिमया तत्र स्थापितया तया । एधिष्यते प्रतापेन ऋद्ध्या निःश्रेयसेन च ॥ ९५ ॥
देवभक्त्या गुरुभक्त्या त्वत्पितुः सदृशोऽभय । कुमारपालो भूपालः स भविष्यति भारते ॥ ९६ ॥
इति श्रुत्वा नमस्कृत्य भगवन्तमथाभयः । उपश्रेणिकमागत्य वक्तुमेवं प्रचक्रमे ॥ ९७ ॥
भवामि तात राजा चेद्यतिर्न स्यामहं तदा । श्रीवीरोऽन्तिमराजर्षिं यदशंसदुदायनम् ॥ ९८ ॥

१ प्राचीनामपि । २ मायारहितः ।

श्रीवीरस्वामिनं प्राप्य प्राप्य त्वत्पुत्रतामपि । नोच्छेत्स्ये भवदुःखं चेन्मत्तः कोऽन्योऽधमस्ततः ॥ ९९ ॥
नाम्नाहमभयस्तात सभयोऽस्मि भवात् पुनः । भुवनाभयदं वीरं तद्ब्रूयामि समादिश ॥ १०० ॥
तदलं मम राज्येनाभिमानसुखहेतुना । यतः सन्तोषसाराणि सौख्यान्याहुर्महर्षयः ॥ १०१ ॥
निबन्धादुच्यमानोऽपि न यदा राज्यमग्रहीत् । तदाभयो व्रतायानुजज्ञे राज्ञा प्रमोदतः ॥ १०२ ॥
राज्यं तृणमिव त्यक्त्वा संतोषसुखसद्म सः । दीक्षां चरमतीर्थेशवीरपादान्तिकेऽग्रहीत् ॥ १०३ ॥
आत्तव्रते सत्यभयेऽनुज्ञाप्य श्रेणिकं नृपम् । श्रीमहावीरपादान्ते नन्दापि व्रतमग्रहीत् ॥ १०४ ॥
परिव्रजन्त्या त्वभयं नन्दया कुण्डलद्वयम् । क्षौमद्वयं च तद्दिव्यं दत्तं हल्लविहल्लयोः ॥ १०५ ॥
भव्यानां प्रतिबोधाय ततश्च भगवानपि । सुरासुरैः सेव्यमानो विजहार वसुन्धराम् ॥ १०६ ॥
विविधाभिग्रहपूर्वं पालयित्वा चिरं व्रतम् । मृत्वा सर्वार्थसिद्धेऽभूदभयः प्रवरः सुरः ॥ १०७ ॥
तदा श्रीवीरपादाब्जमूले प्रव्रजितेऽभये । इति संचिन्तयामास शुद्धधीर्मगधाधिपः ॥ १०८ ॥
अभयो हि कुमारेषु समस्तगुणभूरभूत् । व्रतमादाय सुकृती स तु स्वार्थमसाधयत् ॥ १०९ ॥
कुमारे कुत्रचिद्दोष्मत्यायुष्मति वपुष्मति । राज्यमारोपयिष्यामि क्रमो ह्येष महीभुजाम् ॥ ११० ॥
सगुणो निर्गुणो वापि पुत्रोऽर्हः पितृसंपदाम् । सगुणः स्याद्यदि तदा पुण्यं हि पितुरुज्ज्वलम् ॥ १११ ॥
विनाभयकुमारेण मनोविश्रामधाम मे । कूणिको गुणवानेष राज्यमर्हति नापरः ॥ ११२ ॥
निश्चित्य कूणिकं राज्ये सोऽदाद्धल्लविहल्लयोः । हारमष्टादशचक्रं गजं सेचनकं च तम् ॥ ११३ ॥
अत्रान्तरे कुमारोऽपि मंत्रयामास कूणिकः । कालादिभिः स्वसदृशैर्दशभिर्भ्रातृभिः सह ॥ ११४ ॥

जरन्नपि पितास्माकं राज्यस्य न हि तृप्यति । पुत्रे हि कवचहरे राज्ञोऽधिकुरुते व्रतम् ॥ ११५ ॥
वरं वरीयान्[1] जयः श्रियमौज्झद्युवापि यः । न तु तातो विषयान्धः स्वां जरां यो न पश्यति ॥ ११६ ॥
तदद्य पितरं बध्ध्वा राज्यं स्वसमयोचितम् । गृह्णीमो नापवादोऽत्र विवेकविकलो हि सः ॥ ११७ ॥
कृत्वैकादशधा राज्यं भ्रातरो भुंज्महे वयम् । पिता तु बद्धस्तदनुजीवत्वब्दशतान्यपि ॥ ११८ ॥
इति ते दुर्धियः सर्वे विश्वस्तं पितरं निजम् । बबन्धुर्दुरपत्यं हि गृहजातो विषद्रुमः ॥ ११९ ॥
शुकवत्पञ्जरेऽक्षैप्सीत् कूणिकः श्रेणिकं ततः । विशेषोऽयं पुनर्भक्तपाने अपि ददौ न हि ॥ १२० ॥
पूर्वाह्णे चापराह्णे च कूणिकः पूर्ववैरतः । पितुः कशाघातशतं पापोऽदादनुवासरम् ॥ १२१ ॥
अधिसेहे श्रेणिकस्तां दुर्दशां दैवढौकिताम् । दन्तावलः समर्थोऽपि वारीबद्धः[2] करोतु किम् ॥ १२२ ॥
निकषा श्रेणिकं गन्तुं कूणिकोऽदान्न कस्यचित् । केवलं मातृदाक्षिण्याच्चेलणां न ह्यवारयत् ॥ १२३ ॥
चेलणापि प्रतिदिनं सुरया शतधौतया[3] । सद्यःस्नातेवार्द्रकेशीभूयोपश्रेणिकं ययौ ॥ १२४ ॥
कुल्माषपिंडिकां चैकां केशान्तः पुष्पदामवत् । प्रक्षिप्य चेलणानैषीत् पतिभक्ता तदन्तिके ॥ १२५ ॥
पत्ये कुल्माषपिंडीं तां प्रछन्नां चेलणा ददौ । प्राप्य तामपि दुःप्रापां स मेने दिव्यभोज्यवत् ॥ १२६ ॥
चकार श्रेणिकः प्राणयात्रां पिंडिकया तया । बुभुक्षालक्षणो रोगो विनान्नं खलु मृत्यवे ॥ १२७ ॥
शतधौतसुराबिन्दून् केशपाशाच्च चेलणा । अपातयत् पतिभक्ता सह नेत्राश्रुबिन्दुभिः ॥ १२८ ॥
श्रेणिकोऽपि सुराबिन्दून् पततः पिबति स्म तान् । चातको मेघमुक्तांबुबिन्दूनिव पिपासितः ॥ १२९ ॥

१ अतिशयेन श्रेष्ठः । २ गजबंधनरज्जुबद्धः । ३ शतवार धौतया ।

बिन्दुमात्रपीतयापि श्रेणिकः सुरया तया । न विवेद कशाघातांस्तृषया नाप्यपीड्यत ॥ १३० ॥
इत्थं च श्रेणिकं बद्ध्वा कुर्वतो राज्यमुत्कटम् । कूणिकस्य पद्मावत्यां पत्न्यां सूनुरजायत ॥ १३१ ॥
वर्धापिकास्तदायाताः कूणिको दासचेटिकाः । वस्त्राभरणसंछन्नाश्चक्रे कल्पलतोपमाः ॥ १३२ ॥
स्वयं चान्तःपुरे गत्वा पाणिभ्यां पुत्रमाददे । आभात्तत्पाणिपद्मस्थः स पोतो हंसपोतवत् ॥ १३३ ॥
कूणिकस्तं सुतं पश्यन्नयनाम्भोजभास्करम् । उन्मुद्रपरमानन्दः श्लोकमेवं तदापठत् ॥ १३४ ॥
अंगादंगात्संभवसि हृदयादभिजायसे । आत्मैव पुत्र जातोऽसि तज्जीव शरदां शतम् ॥ १३५ ॥
भूयो भूयः पठन्नेवं विशश्राम न कूणिकः । तच्छ्लोकच्छद्मना हर्षं हृद्यमान्तं वमन्निव ॥ १३६ ॥
कुमारभृत्यां[1] दक्षाभिर्वृद्धस्त्रीभिरथार्भकः । अमोच्यैरिष्ट[2]शय्यायामादाय नृपतेः करात् ॥ १३७ ॥
चक्रे च नृपतिः सूनोर्जातकर्ममहोत्सवम् । याचकेभ्यो द्विजादिभ्यो दददानं यथारुचि ॥ १३८ ॥
उदायीति ददौ नाम तस्य सूनोश्च कूणिकः । उत्सवेनातिमहता सुदिनी[3]कुर्वता दिनम् ॥ १३९ ॥
अथोदायिकुमारोऽपि स्वर्ण[4]च्छायो दिने दिने । वृद्धिं जगामोपवने शाखीवारक्षकैर्वृतः ॥ १४० ॥
तेन कट्यधिरूढेन कुमारेण निरन्तरम् । दधौ सशालभञ्जीकस्तंभशोभां महीपतिः ॥ १४१ ॥
उल्लापयन् कुमारं तं लक्षमन्मनया गिरा । राजापि वक्तुमज्ञस्य शिशोः श्रियमशिश्रियत् ॥ १४२ ॥
आसने शयने याने भोजनेऽपि तमर्भकम् । न मुमोच कराद्राजा मंगल्यामिव मुद्रिकाम् ॥ १४३ ॥
आसाञ्चक्रेऽन्यदा भोक्तुं राजा श्रेणिकनन्दनः । वामोरुमस्तके न्यस्योदायिनं पुत्रवत्सलः ॥ १४४ ॥

---

१ कुमारपालने । २ सूतिकागृहशय्यायाम् । ३ अशोभन दिन सुदिन कुर्वतेति भिः । ४ स्वर्णकान्तिः ।

अर्धभुक्ते कूणिके च मूत्रयामास सोऽर्भकः । पपात सर्पिर्धारेव[1] मूत्रधारा च भोजने ॥ १४५ ॥
सूनोर्मा वेगभंगो भूदिति श्रेणिकसूनृपः । न जानु चालयामास पुत्रवात्सल्यमीदृशम् ॥ १४६ ॥
मूत्रप्लावितमन्नं च स्वयमुत्सार्य पाणिना । तथैव बुभुजे पुत्रप्रेम्णैतदपि शर्मणे[2] ॥ १४७ ॥
पप्रच्छ चेलणां तत्रोपविष्टामथ कूणिकः । मातरेवं सुतः प्रेयान्भूत्कस्यचिदस्ति वा ॥ १४८ ॥
चेलणावोचदाः पाप नृखेट[3]कुलपांसन । न जानासि यथाभूस्त्वं पितुरत्यन्तवल्लभः ॥ १४९ ॥
दुर्दोहदेन ज्ञातोऽसि पितुर्वैरी तदा मया । स्त्रीणामापन्न[4]सत्त्वानां यथागर्भं हि दोहदाः ॥ १५० ॥
गर्भस्थितमपि ज्ञात्वा त्वामरे पितृवैरिणम् । गर्भशातन[5] मारंभि मया पतिशिवेच्छया ॥ १५१ ॥
तथापि न विलीनोऽसि तैस्तैः शर्दौषधैरपि[6] । किं तु प्रत्युतपुष्टोऽसि सर्वं पथ्यं बलीयसाम् ॥ १५२ ॥
तव पित्रा च मे तादृगप्यपूरि मनोरथः । कदा द्रक्ष्याम्यहं पुत्रवक्त्रमित्याशया भृशम् ॥ १५३ ॥
पितुर्वैरीति निश्चित्य त्वं जातोऽपि मयोज्झितः । आनीतोऽसि पुनः पित्रा यत्नात् स्वमिव जीवितम् ॥ १५४
तदा कुक्कुटिकापिच्छविद्धिका च तवांगुलिः । कृमिपूयाकुला[7]त्यंतमभूदरतिदायिनी ॥ १५५ ॥
त्वत्पिताधान्मुखे क्षिप्तां तादृशीमपि तेऽङ्गुलिम् । तावदेव सुखं तेऽभूद्यावद्वक्त्रांतरंगुली ॥ १५६ ॥
एवं येनासि पित्रा त्वं रे दुर्ललित लालितः । कृते प्रतिकृतं तस्याकारि काराप्रवेशनम् ॥ १५७ ॥
कूणिकोऽप्यब्रवीन्मह्यं तातः किं गुडमोदकान् । प्रैषीद्धल्लविहल्लाभ्यां पुनः किं खंडमोदकान् ॥ १५८ ॥

---

१ घृतधारा । २ सुखाय । ३ नुः खेटो मृगया यस्य सः राक्षस इति यावत्तस्य कुले पासनाधम । ४ गर्भिणीनाम् । ५ गर्भपातः । ६ पातस्यौषधैः । ७ कृमिभिर्दुर्गन्धाकुला ।

चेलणाख्यत्पितृद्वेषीत्यनिष्टस्त्वं ममात्मजः । मयैव दापितास्तुभ्यं तन्मूढ गुरुमोदकाः ॥ १५९ ॥
कूणिकः स्माह धिग्धिङ्मामविमृश्य विधायिनम् । राज्यं न्यासार्पितमिवार्पयिष्यामि पुनः पितुः ॥१६०॥
इत्यर्धभुक्तेऽप्याचम्य धात्र्याः पुत्रं समर्प्य च । उदस्थात्कूणिकस्तातसमीपं गन्तुमुत्सुकः ॥ १६१ ॥
पितृपादेषु निगडान् भंक्ष्यामीति विचिन्तयन् । लोहदंडं गृहीत्वा सोऽभिश्रेणिकमधावत ॥ १६२ ॥
उपश्रेणिकमादिष्टा यामिकाः पूर्वसंस्तुताः[1] । दृष्ट्वा कूणिकमायान्तमिति व्याजहुराकुलाः ॥ १६३ ॥
साक्षाद्दंडधर[2] इव लोहदंडधरः पुरः । द्रुतमायाति ते सूनुर्न विद्मः किं करिष्यति ॥ १६४ ॥
श्रेणिकश्चिन्तयामास जिघांसुर्[3]नूनमेष माम् । अन्यदागात् कशाहस्तो दंडहस्तोऽधुनैति तु ॥ १६५ ॥
न वेद्मि मां कुमारेण[4] मारयिष्यति केनचित् । तस्मादनागतेऽप्यस्मिन्मरणं शरणं मम ॥ १६६ ॥
इति तालुपुटविषं जिह्वाग्रे श्रेणिको ददौ । प्रस्थानस्था इवाग्रेऽपि तत्प्राणाश्च द्रुतं ययुः ॥ १६७ ॥
आगाच्च कूणिको यावत् परासुं तावदग्रतः । ददर्श पितरं वक्ष आघ्नानः पूच्चकार च ॥ १६८ ॥
विललाप च हा तातपादाः कर्मभिरीदृशैः । अद्वितीयीक एवैष पापोऽहमभवं भुवि ॥ १६९ ॥
क्षमयिष्याम्यहं तातपादानिति मनोरथः । यन्मे नापूरि तत्पापतमोऽहमधुना पुनः ॥ १७० ॥
आस्तां प्रसादवचनं तिरस्कारवचोऽपि हि । त्वदीयं नाहमश्रौषमभूद्दुर्दैवमन्तरा ॥ १७१ ॥
भृगुपातेन शस्त्रेण वह्निना पयसापि वा । तदात्मानं निगृह्णामि युक्तं मत्कर्मणो ह्यदः ॥ १७२ ॥
इति शोकामय[5]ग्रस्तो मुमूर्षुरपि कूणिकः । मंत्रिभिर्बोधितोऽकार्षीच्छ्रेणिकस्यांगसंस्कृतिम् ॥ १७३ ॥

---

१ पूर्वपरिचिताः । २ यमः । ३ हन्तुमिच्छुः । ४ कुत्सितेन मारेण मारणेन । ५ शोक एवामयो व्याधिस्तेन ग्रस्तः ।

शोकेन भूयसा राजयक्ष्मणेव[1] दिने दिने । क्षीयमाणं नृपं प्रेक्ष्य मंत्रिणोऽचिन्तयन्निदः ॥ १७४ ॥
नूनं विपत्स्यते शोकाद्राजा राज्यं च नंक्ष्यति । पितृभक्त्यपदेशेन तद्व्यासंगोऽस्य सूत्र्यताम् ॥ १७५ ॥
इति जीर्णे ताम्रपत्रेऽक्षराणि लिलिखुः स्वयम् । पिंडादि दत्तं पुत्रेण मृतोऽपि लभते पिता ॥ १७६ ॥
अवाचयंश्च राज्ञोऽग्रे राजापि हि पितुः स्वयम् । तद्भक्तितोऽदात् पिंडादि पिंडदानं तदाद्यभूत् ॥१७७॥
भुंक्ते पिता विपन्नोऽपि मद्दत्तमिति मूढधीः । राजा शोकं शनैरौज्झज्ज्वरीव रसविक्रियाम् ॥ १७८ ॥
पितुः शय्यासनादीनि पश्यन्तं तु पुनः पुनः । सिंहावलोकनन्यायाच्छोकः कूणिकमभ्यगात् ॥ १७९ ॥
गडूचीस्तंबवच्छोके प्रोन्मीलति मुहुर्मुहुः । राजा राजगृहे स्थातुमभूशमनीश्वरः ॥ १८० ॥
करिष्ये पुरमन्यत्रेत्यादिदेश विशांपतिः । शस्तभूशोधनायाथ वास्तुविद्याविशारदान् ॥ १८१ ॥
ते च वास्तुविदः शस्तां पश्यन्तः सर्वतो भुवम् । प्रदेशेऽद्राक्षुरेकत्र महान्तं चंपकद्रुमम् ॥ १८२ ॥
ऋजुश्च नायमुद्याने दृश्यते नेह सारणिः । नायमावाल[2]वलयी तथाप्यस्याद्भुता लिपिः[3] ॥ १८३ ॥
अहो बहुलशाखत्वमहो पत्रलताद्भुता । अहो कुसुमसंपत्तिरहो कुसुमसौरभम् ॥ १८४ ॥
अहो छायैकातपत्र्यमातपत्राभिभावुकम् । अहो विश्रामयोग्यत्वमहो सर्वं किमप्यदः ॥ १८५ ॥
निसर्गरमणीयोऽयं यथा श्रीधाम चंपकः । तथात्र नगरमपि भविष्यति न संशयः ॥ १८६ ॥
चंपकेन श्रियः सत्यंकारेणैवोपशोभितम् । स्थानं पुरीनिवेशार्हं ते तथाख्यन्महीभुजे ॥ १८७ ॥
चंपकस्याभिधानेन चंपेति नगरीं नृपः । वेगादकारयत् सिद्धिर्वचसा हि महीभुजाम् ॥ १८८ ॥

१ राजयक्ष्मा क्षयरोगः । २ आवालात् वलयी आलवालयुक्तः । ३ लिपिः उद्भेदप्रकारविशेषः ।

ततश्च पुर्यां चंपायां गत्वा सबलवाहनः । महीमिमां श्रेणिकसूर्भ्रातृभिः सहितोऽन्वशात् ॥ १८९ ॥
अथ सेचनकारूढौ दिव्यकुंडलमंडितौ । दिव्यहारांशुकधरौ भूगतौ स्वर्गिणाविव ॥ १९० ॥
अत्यद्भुतश्रियौ हल्लविहल्लौ निजदेवरौ । दृष्ट्वा पद्मावती दध्यौ स्वस्य स्त्रीत्वस्य सन्निभम् ॥ १९१ ॥
हारकुंडलवासोभिर्दिव्यैः सेचनकेन च । विना हि मन्यते राज्यं नेत्रहीनमिवाननम् ॥ १९२ ॥
ततो हल्लविहल्लाभ्यां तान्याहर्तुं कृताग्रहा । बभाण कूणिकं राज्ञी कूणिकोऽप्येवमभ्यधात् ॥ १९३ ॥
पितृदत्तं वस्त्वनयोर्नाहर्तुं युज्यते मम । विशेषेण प्रसादार्हाविमौ ताते दिवं गते ॥ १९४ ॥
तस्याश्चात्याग्रहाद्राजा मेने हारादियाचनम् । स्त्रीग्रहः खलु मत्कोटग्रहादपि विशिष्यते ॥ १९५ ॥
अन्यस्मिंश्च दिने हल्लविहल्लौ पृथिवीपतिः । ययाचे त्यक्तसौभ्रात्रस्तद्धारादिचतुष्टयम् ॥ १९६ ॥
प्रमाणमादेश इति प्रतिपद्य गृहं गतौ । आमंत्रयेतां तावित्थं बुद्धिमन्तावुभावपि ॥ १९७ ॥
न शोभनोऽस्याभिप्रायः किमनेन प्रयोजनम् । प्रयावोऽन्यत्र कुत्रापि श्रियः सर्वत्र दोष्मताम् ॥१९८॥
इति निश्चित्य तौ सान्तःपुरौ सेचनकद्विपम् । हारादीन्यप्युपादाय वैशाल्यां निशि जग्मतुः ॥ १९९ ॥
मातामहश्चेटकस्तौ परिरभ्य समागतौ । स्नेहेन प्रतिपत्त्या च ददर्श युवराजवत् ॥ २०० ॥
वैशाल्यां च गतौ ज्ञात्वा तौ प्रतारितधूर्तवत् । हस्तविन्यस्तचिबुकश्चिन्तयामास कूणिकः ॥ २०१ ॥
न मे हस्त्यादिरत्नानि न च तौ भ्रातरावपि । जातोऽहमुभयभ्रष्टः स्त्रीप्रधानतया खलु ॥ २०२ ॥
भवतु व्यसने प्राप्तेऽमुष्मिंस्तौ नानयामि चेत् । पराभवसहिष्णोर्मे वणिजश्च किमन्तरम् ॥ २०३ ॥

---

१ मत्कोट "मंकोडा" इति ख्यातः कीटविशेष. ।

अनुशिष्य ततो दूतं वैशाल्यामुपचेटकम् । प्रैषीच्छात्रोर्मार्गणाय रत्नान्यादाय जग्मुषोः ॥ २०४ ॥
दूतोऽपि पुर्यां वैशाल्यां गत्वा चेटकपर्षदि । प्रणम्य चेटकं स्थाने चासित्वोचे ससौष्ठवः ॥ २०५ ॥
इह नंष्ट्वा समायातौ रत्नैः सह गजादिभिः । कुमारौ हल्लविहल्लौ कूणिकस्य समर्पय ॥ २०६ ॥
अनर्पयन्निमौ राज्यभ्रंशमासादयिष्यसि । कीलिकार्थे देवकुलं न भ्रंशयितुमर्हसि ॥ २०७ ॥
चेटकोऽवोचदन्योऽपि नार्प्येत शरणागतः । दौहित्रौ किं पुनरिमौ विश्वस्तौ पुत्रवत्प्रियौ ॥ २०८ ॥
दूतोऽब्रवीच्छरण्यस्त्वं न ह्यर्पयसि चेदिमौ । तद्रत्नान्यनयोर्हृत्वा राजन्मत्स्वामिनेऽर्पय ॥ २०९ ॥
चेटकः स्माह धर्मोऽयं समानो राजरंकयोः । अन्यस्य वित्तं न ह्यन्यो दातुमीशीत जातुचित् ॥ २१० ॥
न प्रसह्य न वा साम्नानयोर्गृह्णामि किंचन । धर्मपात्रं हि दौहित्रौ दानार्हौ मे विशेषतः ॥ २११ ॥
दूतोऽप्यागत्य चंपायां तां गिरं चेटकोदिताम् । आख्यत् स्वस्वामिनः क्रोधवह्निवात्यामनाकुलः ॥ २१२ ॥
कूणिकोऽपि हि तत्कालं जयभंभामवीवदत् । सिंहा इव पराक्षेपं न सहन्ते महौजसः ॥ २१३ ॥
सैन्यान्यनन्यसामान्यतेजसस्तस्य भूपतेः । सद्यः सर्वाभिसारेण सज्जीभूयावतस्थिरे ॥ २१४ ॥
कालादयः कुमाराश्च दशापि हि महाबलाः । पुरो बभूवुः संनह्य सर्वसन्नहनेन ते ॥ २१५ ॥
सहस्राणि त्रीणि गजास्तावन्तो वाजिनोऽपि हि । तावन्तश्च रथाः कोट्यस्तिस्रोऽपि च पदातयः ॥ २१६ ॥
तेषां दशानां प्रत्येकं कुमाराणामिदं बलम् । एतावत्कूणिकस्यापि प्रभुत्वं त्वतिरिच्यते ॥ २१७ ॥ युग्मम् ॥
सैन्येनैतावता गच्छंश्चंपेशश्चेटकं प्रति । तिरयामास धराणिं तराणिं[1] च रजोभरैः ॥ २१८ ॥

---

१ सूर्यम् ।

चेटकोऽप्यमितैः सैन्यैः कूणिकायाभ्यषेणयत् । राजभिर्बद्धमुकुटैरष्टादशभिरावृतः ॥ २१९ ॥
द्विपास्त्रीणि सहस्राणि तावन्तश्च तुरंगमाः । तावन्तश्च रथास्तिस्रः कोटयश्च पदातयः ॥ २२० ॥
अष्टादशानां प्रत्येकं राज्ञां बलमदोऽभवत् । तत्तुल्यसंख्यं नृपतेश्चेटकस्याप्यभूद्बलम् ॥ २२१ ॥
स्वदेशसीम्नि गत्वास्थाच्चेटकः सेनया तया । दुर्भेदं सागरव्यूहं रचयामास चोच्चकैः ॥ २२२ ॥
चंपाधिपोऽपि तत्रागाच्चम्वा प्रागुक्तसंख्यया । चक्रे च गरुडव्यूहमभेद्यं परसेनया ॥ २२३ ॥
रणतूराणि घोराणि सैन्ययोरुभयोरपि । रोदः कुक्षिंभरिध्वानान्यताड्यन्त सहस्रशः ॥ २२४ ॥
कीर्तिस्तंभैरिवोत्तब्धैः खेटी[2]धवलितैः खरैः । संशप्तकाश्च[3] संचेरुर्द्वयोरपि हि सैन्ययोः ॥ २२५ ॥
कूणिकस्य बले कालः कुमारो बलनायकः । आदावपि प्रववृते योद्धुं चेटकसेनया ॥ २२६ ॥
युयुधे सादिना सादी निषादी च निषादिना । रथी च रथिना पत्तिः पत्तिना च बलद्वये ॥ २२७ ॥
स्तंबेरमैस्तुरंगैश्च कुंतघातनिपातितैः । अजायत तदा शैलगंडशैलवतीव भूः ॥ २२८ ॥
रथैर्भग्नैर्हतैर्वीरैः समरे रुधिरापगाः । सान्तरीपा इव सांभोमानुषा इव चावभुः ॥ २२९ ॥
स्फुरद्भिरसिभिर्वीरकुञ्जराणां रणाजिरे । असिपत्रवनमिव प्रादुर्भूतमदृश्यत ॥ २३० ॥
असिच्छिन्नैरुच्छलद्भिर्वीराणां पाणिपंकजैः । कौणपाः पूरयामासुरवतंसकुतूहलम् ॥ २३१ ॥
स्वान् रुंडानपि युद्धायादिशन्त इव हुंकृतैः । पेतुर्भटानां मूर्धानः खड्गधाराभिराहताः ॥ २३२ ॥

१ सेनया । २ खेटी धूलिविशेष. । ३ सम्यक् शस्त्रमंगीकारो येषां ते युद्धकृतनिश्चया सैनिकाः । ४ अश्ववारेण । ५ गजवाहनः । ६ गजैः । ७ भग्नै रथैः द्वीपसहिता इव । ८ हतैर्वीरैः जलमनुष्यसहिता इव । ९ राक्षसाः । १० मस्तकरहितानि शरीराणि ।

इत्थं च सागरव्यूहं कालः पोत इवांबुधिम् । अवगाह्य ययौ पारमिव चेटकसन्निधिम् ॥ २३३ ॥
कालं कालमिवाकालेऽप्यायान्तं प्रेक्ष्य चेटकः । चिन्तयामास केनापि नैष वज्रमिवास्खलि ॥ २३४ ॥
अभ्यापतन्तं तदिमं रण[1]सागरमन्दरम् । क्षणादपि निगृह्णामि दैवतेन पतत्रिणा[2] ॥ २३५ ॥
इति दिव्येषुणा वैरिप्राणसर्वस्वदस्युना । प्रहृत्य चेटकः कालं प्रापयामास पञ्चताम्[3] ॥ २३६ ॥
तदा चास्तमुपेयाय भास्वान्[4] कालकुमारवत् । शुचेव चंपेशबलं तमसा जग्रसे जगत् ॥ २३७ ॥
युद्धं विसृज्य चंपेशबलं जाग्रदवास्थित । निद्रा ह्यभक्तभार्याणामिव वैरवतां कुतः ॥ २३८ ॥
चेटकस्य पुनः सैन्ये वीरा वीरजयन्तिकाम् । कुर्वन्तो जयवादित्रवादनेनात्यगुर्निशाम् ॥ २३९ ॥
चंपानाथेनाभिषिक्तं सेनानीत्वेऽपरेऽहनि । महाकालं कालमिव मारयामास चेटकः ॥ २४० ॥
अष्टौ सेनापतीनन्यानपि श्रेणिकनन्दनान् । एकैकमह्न्येकैकस्मिन् पूर्ववच्चेटकोऽवधीत् ॥ २४१ ॥
भ्रातृष्वात्मसमानेषु कालादिषु दशस्वपि । चेटकेन हतेष्वेवं चंपापतिरचिन्तयत् ॥ २४२ ॥
देवतायाः प्रसादेन जेतैकेनापि पत्रिणा । न ह्यार्यचेटको जय्यो मर्त्यैः कोटिमितैरपि ॥ २४३ ॥
प्रभावं चेटकस्यामुं मया हा धिगजानता । मयैव निधनं नीता देवाभा भ्रातरो दश ॥ २४४ ॥
बभूव या गतिस्तेषां भविष्यति ममापि सा । युज्यते नापसर्तुं च दृष्टभ्रातृवधस्य मे ॥ २४५ ॥
तद्देवतां समाराध्य तत्प्रभावाज्जयाम्यरिम् । दिव्यप्रभावो दिव्येन प्रभावेण हि बाध्यते ॥ २४६ ॥
उपायमिति निश्चित्य कृत्वा च हृदि देवताम् । तस्थावष्टमभक्तेन राजा श्रेणिकनन्दनः ॥ २४७ ॥

१ रणसागरे मन्दराचलम् । २ बाणेन । ३ मृत्युम् । ४ सूर्यः । ५ मृत्युम् ।

पूर्वजन्मसंगतेन नुन्नौ[1] तत्तपसापि च । शक्रश्च चमरेन्द्रश्च तत्कालं तमुपेयतुः ॥ २४८ ॥
ऊचाते तो च देवेन्द्रासुरेन्द्रौ नोः किमिच्छसि । सोऽप्यूचे यदि तुष्टौ स्थश्चेटकस्तन्निहन्यताम् ॥ २४९ ॥
शक्रो भूयोऽप्यभ्रापिष्टापरं किमपि याच्यताम् । साधर्मिकश्चेटको मे तं निहन्मि न जातुचित् ॥ २५० ॥
तथापि देहरक्षां ते करिष्यामि महीपते । यथा न जीयसे तेन सोऽब्रवीदेवमस्त्विति ॥ २५१ ॥
चमरेन्द्रोऽप्यथ महाशिलाकंटकमाहवम् । अन्यं च रथमुशलं जैत्रं कर्तुममन्यत ॥ २५२ ॥
आद्ये[2] शिलासन्निभः स्यात् पतितः कर्करोऽपि हि । कंटकोऽपि च जायेत महाशस्त्राधिकः खलु ॥ २५३ ॥
द्वितीये रथमुशले भ्राम्यती भ्रमिकं विना । परितः पिष्यते ताभ्यां वैरिसैन्यं रणोत्थितम् ॥ २५४ ॥
सुरेन्द्रश्चासुरेन्द्रश्च नरेन्द्रश्चापि कूणिकः । ततस्त्रयो युयुधिरे सह चेटकसेनया ॥ २५५ ॥
पौत्रोऽथ नागरथिनो द्वादशव्रतपालकः । सम्यग्दृष्टिः षष्ठभोजी सदा भवविरक्तधीः ॥ २५६ ॥
राजाभियोगतः षष्ठभक्तान्तेऽपि कृताष्टमः । श्रीचेटकक्षितीशेन स्वयमत्यर्थमार्थितः ॥ २५७ ॥
संग्रामे रथमुशले दुःसहे तादृशेऽपि हि । प्राविशद्वरुणो नाम सेनानीः सत्यसंगरः[3] ॥ २५८ ॥
॥ त्रिभिर्विशेषकम् ॥

स चंपापतिसेनान्यं रणहेतोः समाक्षिपन् । प्रससार महासारो रथेनासह्यरंहसा ॥ २५९ ॥

---

१ प्रेरितौ । २ प्रथमे महाशिलाकंटकाख्य आहवे किं स्यात्तदाह—शत्रुसैन्ये स्वस्य पतितः कर्करोऽपि शिलासदृशः स्यात्, तथा च शत्रुसैन्ये पतितः कटकोपि महाशस्त्रादप्यधिकः स्यादित्यन्वयः । ३ सत्यप्रतिज्ञः ।

तौ संमुखीभूतरथौ ढुढौकाते रणेच्छया । वैरायमाणौ भूमिष्ठभानुस्वर्भानुभीषणौ ॥ २६० ॥
चंपापतेश्चमूनाथो वरुणं रणमार्गणम् । प्रहर प्रहरेत्युच्चैर्व्याजहार पुरःस्थितम् ॥ २६१ ॥
वरुणः स्माह हे दोष्मन् श्रावकस्यास्ति मे व्रतम् । अनिघ्नते न प्रहारं करवै वैरिणेऽपि हि ॥ २६२ ॥
साधु साधु महासत्त्वेत्युक्त्वा चंपेशसैन्यपः । मुमोच बाणं वरुणो विविधे तेन मर्मणि ॥ २६३ ॥
ततः कूणिकसेनान्यं वरुणोऽरुणलोचनः । एकेनैव प्रहारेण निनाय यमसद्मनि ॥ २६४ ॥
गाढप्रहारविधुरो निःसृत्य वरुणो रणात् । तृणसंस्तरमासूत्र्य निपद्येदमचिन्तयत् ॥ २६५ ॥
सर्वात्मना शरीरेण स्वामिकार्यमनुष्ठितम् । इदानीमन्तकालो मे स्वार्थस्यावसरः खलु ॥ २६६ ॥
अर्हद्भट्टारकाः सर्वे सिद्धाः सर्वे च साधवः । केवल्युपज्ञो धर्मश्च भूयासुः शरणं मम ॥ २६७ ॥
क्षमयामि सर्वाञ्जीवान् सर्वे क्षाम्यन्तु ते मयि । मैत्री मे सर्वभूतेषु वैरं मम न केनचित् ॥ २६८ ॥
मामकीनं न किमपि न वाहमपि कस्यचित् । ममकारमकार्षं यं तमपि व्युत्सृजाम्यहम् ॥ २६९ ॥
कानि कानि न मूढोऽहं पापस्थानान्यसेविषि । तन्मिथ्या दुष्कृतं मेऽस्तु गतरागस्य संप्रति ॥ २७० ॥
देवत्वनृत्वतिर्यक्त्वनारकत्वेषु यन्मया । कृतं दुष्कर्म तद्गर्हे श्रीवीरोऽर्हन् गतिर्मम ॥ २७१ ॥
एवमाराधनां कृत्वा प्रत्याचख्यौ चतुर्विधम् । आहारमथ दध्यौ च नमस्कारं समाहितः ॥ २७२ ॥
तदा च वरुणस्यैकः सुहृन्मिथ्यादृगाहवात् । बहिर्भूत्वोपवरुणमागत्यैवमवोचत ॥ २७३ ॥
वयस्य तव सौहार्दक्रीतोऽहमपि संप्रति । त्वदासेवितमध्वानं प्रपन्नोऽस्म्यविदन्नपि ॥ २७४ ॥

१ संमुखीभूतौ रथौ ययोस्तौ । २ भूस्थितौ रविराहू इव भीषणौ । ३ रणयाचकम् ।

॥ २७५ ॥
नमस्कारपरावर्ती धर्मध्यानपरायणः । समाधिमरणं प्राप्य सौधर्मे वरुणो ययौ ॥ २७६ ॥
तद्विमानेऽरुणाभाख्ये चतुःपल्योपमप्रमम् । पूरयित्वायुरुत्पद्य विदेहेषु स सेत्स्यति ॥ २७७ ॥
अज्ञानसेवितेनापि वरुणस्य तु वर्त्मना । विपद्य तत्सुहृद्भूयो मनुष्यः सुकुलेऽभवत् ॥ २७८ ॥
विदेहेषु मनुष्यत्वं पुनरासाद्य सत्कुले । मुक्तिमार्गं समाराध्य स मोक्षपदमाप्स्यति ॥ २७९ ॥
हते च वरुणेऽभूवंश्चेटकस्य चमूभटाः । युद्धाय द्विगुणोत्साहाः कांडस्पृष्टवराहवत् ॥ २८० ॥
गणराजसनाथैस्तैश्चेटकस्य चमूभटैः । अकुट्टि कूणिकचमूर्दशभिरधरं रुषा ॥ २८१ ॥
कुट्यमानं बलं दृष्ट्वा स्वकीयमथ कूणिकः । लोष्टाहतः सिंह इव क्रोधोद्धतमधावत ॥ २८२ ॥
सरसीव रणे क्रीडन् कूणिको वीरकुञ्जरः । दिशो दिशि परबलं पद्मखण्डमिवाक्षिपत् ॥ २८३ ॥
कूणिकं दुर्जयं ज्ञात्वा चेटकोऽथात्यमर्षणः । तं दिव्यं मार्गणं शौर्यधनो धनुषि सन्दधे ॥ २८४ ॥
इतश्च वज्रकवचं कूणिकस्य पुरो हरिः । व्यधत्त चमरेन्द्रस्तु पृष्ठे संन्नाहमायसम्[3] ॥ २८५ ॥
चापमाकर्णमाकृष्य वैशालीपतिनाप्यथ । स मुक्तः सायको वज्रवर्मणा स्खलितोऽन्तरा ॥ २८६ ॥
अमोघस्यापि बाणस्य तस्य मोघत्वदर्शनात् । चमूभटाश्चेटकस्य पुण्यक्षयममंसत ॥ २८७ ॥
द्वितीयं नामुचद्बाणं सत्यसन्धस्तु चेटकः । अपसृत्य द्वितीयस्मिन् दिने तद्वदयुध्यत ॥ २८८ ॥
तथैव मोघबाणोऽभूद्द्वितीयेऽप्यहि चेटकः । एवं दिने दिने युद्धमति घोरमभूत्तयोः ॥ २८९ ॥
लक्षाशीत्याधिका कोटिर्भटानां पक्षयोर्द्वयोः । विपेदे या सोदपादि तिर्यक्षु नरकेषु च ॥ २९० ॥

१ काण्डो दण्डः । २ गणराजा बद्धमुकुटराजा अष्टादश तत्सहितैः । ३ कवचम् । ४ सत्यप्रतिज्ञः ।

नंष्ट्वा स्वस्वपुरं यात्सु गणराजेषु चेटकः । प्रणश्य प्राविशत् पुर्यां कूणिकोऽपि रुरोध ताम् ॥ २९० ॥
तदा सेचनकारूढौ चंपेशस्याखिलं बलम् । वीरौ हल्लविहल्लौ तौ रात्रावघ्निबभूवतुः ॥ २९१ ॥
न प्रहर्तुं नवा धर्तुं स हस्ती स्वप्रहस्तिवत् । केनाप्यशाकि चंपेशशिबिरे [1]सौप्तिकागतः ॥ २९२ ॥
मारयित्वा मारयित्वा निशि हल्लविहल्लयोः । क्षेमेण गच्छतोर्मंत्रिमंडलीं स्माह कूणिकः ॥ २९३ ॥
आभ्यां विद्रुतमस्माकं प्रायेण सकलं बलम् । तद्ब्रूत क इहोपायो जये हल्लविहल्लयोः ॥ २९४ ॥
मंत्रिणोऽप्यूचिरे तौ हि जेतुं शक्यौ न केनचित् । अधिरूढौ हि यावत्तं हस्तिनं नरहस्तिनौ ॥ २९५ ॥
तस्मात्तस्यैव करिणो वधाय प्रयतामहे । खादिरांगारसंपूर्णा कार्यतां पथि खातिका ॥ २९६ ॥
छादयित्वा च [2]वारीव दुर्लक्ष्या सा करिष्यते । तस्यां सेचनको वेगादभिधावन् पतिष्यति ॥ २९७ ॥
चंपेशोऽकारयदथ खादिरांगारपूरिताम् । खातिकामुपरिच्छन्नां तदागमनवर्त्मनि ॥ २९८ ॥
अथ हल्लविहल्लावप्यवस्कन्दकृते निशि । निरीयतुः सेचनकाधिरूढौ जितकाशिनौ ॥ २९९ ॥
अंगारखातिकोपान्तमेत्य सेचनकोऽपि हि । तां विभंगेन विज्ञाय तस्थौ यातममानयन् ॥ ३०० ॥
ततो हल्लविहल्लाभ्यामितिनिर्भर्त्सितः करी । पशुरस्यकृतज्ञोऽसि कातरो यदभू रणात् ॥ ३०१ ॥
विदेशगमनं बन्धुत्यागश्च त्वत्कृते कृतः । अस्मिन्दुर्व्यसने क्षिप्तस्त्वत्कृते चार्यचेटकः ॥ ३०२ ॥
वरं श्वा पोषितः श्रेयान् भक्तः स्वामिनि यः सदा । न तु त्वं प्राणवाह्याभ्यामोऽस्मत्कार्यमुपेक्षसे ॥३०३॥
इति निर्भर्त्सितो हस्ती कुमारौ निजपृष्ठतः । वेगादुत्तारयामास भक्तमन्यो बलादपि ॥ ३०४ ॥

१ सौप्तिके रात्रियुद्ध आगतः । २ वारी गजबन्धनगर्ता सेव ।

तच्छ्रुत्वा मंत्रिणः प्रोचुस्तवैव पुरि विद्यते । वेश्या मागधिका देव न विद्मः कूलवालुकम् ॥ ३२० ॥
तदैव मुक्त्वा सैन्यार्धं वैशालीरोधहेतवे । सैन्यार्धेन ययौ चंपां चंपापतिरिलापतिः ॥ ३२१ ॥
पण्यांगनां मागधिकां मगधाधिपनन्दनः । आह्वास्त गतमात्रोऽपि त्वरितं वरमंत्रिवत् ॥ ३२२ ॥
आदिदेश च भद्रे त्वं धीमती त्वं कलावती । त्वया चानेकपुंसां धीरांजन्माप्युपजीविता ॥ ३२३ ॥
सफलीकुरु मत्कार्ये तद्वैशिककलां निजाम् । रमयित्वा पतित्वेन श्रमणं कूलवालुकम् ॥ ३२४ ॥
करोम्येवमिति च सा प्रपेदाना मनस्विनी । चंपानाथेन सच्चक्रे वस्त्रालंकरणादिना ॥ ३२५ ॥
विसृष्टा च गृहं गत्वा विमृश्य च धियां निधिः । तदैव मूर्त्ता मायेव सा मायाश्राविकाभवत् ॥ ३२६ ॥
सा गर्भश्राविकाप्राया ग्रहिधर्मं यथाविधि । अपि द्वादशधा लोके दर्शयामास सत्यवत् ॥ ३२७ ॥
चैत्यपूजादिनिरतां धर्मश्रवणतत्पराम् । ऋज्वाशयाश्च विविदुराचार्याः श्राविकेति ताम् ॥ ३२८ ॥
सान्यदापृच्छदाचार्यान् कः साधुः कूलवालुकः । तद्भावमविदन्तश्च कथयन्ति स्म तेऽप्यदः ॥ ३२९ ॥
धर्मज्ञे पंचधाचारनिरतो मुनिपुंगवः । एकोऽस्ति तस्य च क्षुल्ल एकः कापिरिवास्थिरः ॥ ३३० ॥
सामाचारीपरिभ्रष्टो वारणास्मारणादिभिः । नोद्यमानो याति रोषं स तु क्षुल्लोऽतिदुर्नयः ॥ ३३१ ॥
गुरुस्तु तस्य क्षुल्लस्य दुःश्रवामपि सादरः । आचारशिक्षां प्रददौ यदुक्तमिदमागमे ॥ ३३२ ॥
"परो रुष्यतु वा मा वा विषवत्प्रतिभातु वा । भाषितव्या हिता भाषा स्वपक्षगुणकारिणी ॥ ३३३ ॥"
न कर्कशां न मधुरां गुरोः शिक्षाममंस्त सः । लघुकर्मणि शिष्ये हि प्रभवन्ति गुरोर्गिरः ॥ ३३४ ॥

१ जन्मपर्यन्तम् । २ वेश्यासंबन्धिनीं कलाम् ।

वन्दमानाथ चैत्यानि तीर्थयात्राछलेन सा । तमुद्देशमुपेयाय यत्रर्षिः कूलवालकः ॥ ३५० ॥
वन्दित्वा तं मुनिवरं सा मायाश्राविकावदत् । उज्जयन्तादितीर्थानि वन्दयेऽहं मुने त्वया ॥ ३५१ ॥
कायोत्सर्गं मुनिर्मुक्त्वा धर्मलाभाशिषं ददौ । तीर्थान्यवन्दताप्राक्षीच्चागतासि कुतः शुभे ॥ ३५२ ॥
साख्यन्महर्षे चंपाया आगां तीर्थानि वन्दितुम् । तीर्थेभ्यः परमं तीर्थमिह यूयं च वन्दिताः ॥ ३५३ ॥
तदस्मदीयं पाथेयं भिक्षादोषविवर्जितम् । आदाय पारणं कृत्वा महर्षेऽनुगृहाण माम् ॥ ३५४ ॥
भक्तिभावतया तस्या मुनिरार्द्रमनाः स तु । जगाम भिक्षामादातुं तत्सार्थेऽनर्थसद्मनि ॥ ३५५ ॥
ददिरे च स्वयं तस्मै कूटश्राविकया तया । पुरा संयोजितद्रव्या मोदका मोदमानया ॥ ३५६ ॥
अभूत्प्राशितमात्रैस्तैर्मोदकैः सोऽतिसारकी । रसवीर्यविपाको हि द्रव्याणां जातु नान्यथा ॥ ३५७ ॥
अतिसारेण स ग्लानो महर्षिरभवत्तथा । संवरीतुं क्षीणबलो यथांगान्यपि नाशकत् ॥ ३५८ ॥
तं च मागधिका प्रोचे समयस्मृतवैशिका । कृतपारणकोऽसि त्वं मदनुग्रहकाम्यया ॥ ३५९ ॥
स्वामिन्मदीयपाथेयप्राशनादप्यनन्तरम् । प्राप्तोऽसि दुर्दशामेवं धिग्मां पापतरंगिणीम् ॥ ३६० ॥
तत्त्वामेकाकिनं मुक्त्वा प्राप्तमेतावतीं दशाम् । न गन्तुमुत्सहेते मे पादौ निगडिताविव ॥ ३६१ ॥
इत्युक्त्वा सा स्थिता तत्रोपसर्प च क्षणे क्षणे । उद्वर्तयितुमंगानि प्रदातुं भेषजानि च ॥ ३६२ ॥
उद्वर्तनादिकं तस्य तथा मागधिका व्यधात् । यथा तं कारयामास सर्वांगस्पर्शमात्मनः ॥ ३६३ ॥
उल्लाघः[2] स शनैश्चक्रे तया शुश्रूषमाणया । चंपकेनांशुकमिव[3] तद्भक्त्या चाध्यवास्यत ॥ ३६४ ॥

१ प्रीतया तया । २ नीरोगः । ३ चंपकपुष्पेण वस्त्रं यथाधिवास्यते तथा ।

तं स्तूपं भंक्तुमारेभे धूर्तधीवञ्चितो जनः । सुखप्रतार्यः प्रायेण सर्वोऽपि व्यसनार्दितः ॥ ३८० ॥
भंक्तुमारब्धमात्रेऽपि स्तूपे मागधिकापतिः । गत्वापसारयामास द्विक्रोशीमथ कूणिकम् ॥ ३८१ ॥
उत्पन्नप्रत्ययो लोकस्तं स्तूपं कूपभेकधीः । कूर्मन्यासशिलां यावन्निर्मूलमुदमूलयत् ॥ ३८२ ॥
बभञ्ज द्वादशाब्दान्ते[1] वैशालीं कूणिकस्ततः । स्तूपस्यैव प्रभावोऽभूत् पुरा हि दुरतिक्रमः ॥ ३८३ ॥
विरराम तदा चंपावैशालीनाथयो रणः । एतस्यामवसर्पिण्यामीदृशो न कदाप्यभूत् ॥ ३८४ ॥
भाणयामास वैशालीपतिं चंपापतिस्तदा । आर्य चेटक पूज्योऽसि किं करोमि तव प्रियम् ॥ ३८५ ॥
चेटकोऽपि विषण्णात्मा कूणिकं प्रत्यभाणयत् । जयोत्सवोत्सुकोऽपि त्वं विलंब्य प्रविशेः पुरीम् ॥३८६॥
दूतेन चेटकवचस्याख्याते कूणिकोऽपि हि । किं याचितमिति ह्रीणस्तथैव प्रत्यपद्यत ॥ ३८७ ॥
इतश्च सत्यकिर्नाम सुज्येष्ठासुर्नभश्चरः । दौहित्रश्चेटकस्यागाच्चिन्तयामास चेति सः ॥ ३८८ ॥
मातामहप्रजामेतां लुंट्यमानामरातिभिः । कथं द्रक्ष्यामि तदिमां नयाम्यन्यत्र कुत्रचित् ॥ ३८९ ॥
इति तन्नगरीलोकं सर्वमुत्पाट्य विद्यया । निनाय नीलवत्यद्रौ लालयन् पुष्पदामवत् ॥ ३९० ॥
अथ मृत्युश्रियमिव बद्ध्वा[2]यःपुत्रिकां गले । चेटकोऽनशनं कृत्वाविक्षदस्ताघ[3]वारिणि ॥ ३९१ ॥
स मज्जन् धरणेन्द्रेण समीक्ष्य भवने निजे । निन्ये साधर्मिक इति मृत्युर्नात्रुटि[4]तायुषाम् ॥ ३९२ ॥

---

१ द्वादशवर्षान्ते । २ लोहपुत्रिकाम् । ३ न विद्यते स्ताघो यस्यैतादृशे जले । ४ अत्रुटितमायुर्येषां तेषां मृत्युर्न भवति ।

नत्वा नाथं तथास्थानमुपविश्याथ कूणिकः । पप्रच्छ लब्धावसरः शिरस्यारचिताञ्जलिः ॥ ४०८ ॥
आजन्माप्यपरित्यक्तकामभोगा भवन्ति ये । कां नाम ते गतिं यान्ति चक्रिणः परमेश्वर ॥ ४०९ ॥
स्वाम्याख्यात्ते हि गच्छन्ति सप्तमीं नरकावनिम् । पप्रच्छ कूणिको भूयो भाविनी मम का गतिः ॥४१०॥
आचख्यौ भगवान् षष्ठीं नरकोर्वीं गमिष्यसि । कूणिकः स्माह किमहं न हि यास्यामि सप्तमीम् ॥४११॥
भगवानप्युवाचैवं चक्रवर्त्येव न ह्यसि । सति धर्मिणि धर्मा हि चिन्त्यंते श्रेणिकात्मज ॥ ४१२ ॥
अपृच्छत् कूणिकः किं न चक्र्यहं परमेश्वर । ममापि चक्रितुल्यास्ति चतुरंगा वरूथिनी[1] ॥ ४१३ ॥
स्वाम्यूचे तव रत्नानि चक्रादीनि न सन्ति भोः । विनैकेनापि रत्नेन चक्रभृन्नाम दुर्घटम् ॥ ४१४ ॥
तच्छ्रुत्वोत्थाय चंपेशो महाहंकारपर्वतः । एकेन्द्रियाणि लोहानि महारत्नान्यकारयत् ॥ ४१५ ॥
पद्मावतीं स स्त्रीरत्नं रत्नानीभादिकान्यपि । सोऽल्पधीः कल्पयामास मनोरथकदर्थितः ॥ ४१६ ॥
साधयन् भरतक्षेत्रं कूणिकोऽसह्यविक्रमः । क्रमेण वैताढ्यगुहां तमिस्रामासदद्बलैः ॥ ४१७ ॥
अनात्मज्ञः स उन्मत्त इव दुर्दैवदूषितः । गुहाद्वारकपाटानि दंडेन त्रिरताडयत् ॥ ४१८ ॥
कृतमालामरः प्रोचे तद्गुहाद्वाररक्षकः । मुमूर्षुः कोऽयमाहन्ति गुहाद्वारमनात्मवित् ॥ ४१९ ॥
कूणिकोऽप्यवदत् किं मां जिगीषुं वेत्सि नागतम् । अशोकचन्द्रनामाहमुत्पन्नश्चक्रवर्त्यहो ॥ ४२० ॥
कृतमालामरः स्माह चक्रिणो द्वादशाभवन् । अप्रार्थितप्रार्थको[2]ऽसि बुध्यस्व स्वस्ति तेऽस्तु भोः॥४२१॥
कूणिकोऽपि बभाणैवमहं चक्री त्रयोदशः । उत्पन्नः कृतपुण्योऽस्मि पुण्यैः किं नाम दुर्लभम् ॥ ४२२ ॥

१ सेना । २ मृत्युप्रार्थकः ।

पराक्रमं न मे वेत्सि कृतमाल गुहामिमाम् । कुरुष्व विततद्वारामन्यथा न भवस्यहो ॥ ४२३ ॥
आधिदैविकदोषात्तमिवासंबद्धभाषिणम् । कूणिकं कृतमालो द्राग्रोषादकृत भस्मसात् ॥ ४२४ ॥
अशोकचन्द्रो राजैवं विपद्य नरकावनिम् । षष्ठीमियाय वचनं ह्यर्हतां जातु नान्यथा ॥ ४२५ ॥
[1]आलेख्यशेषतां प्राप्ते कूणिके तु तदात्मजम् । सर्वे प्रधानपुरुषा राज्ये न्यधुरुदायिनम् ॥ ४२६ ॥
उदाय्यपि प्रजां न्याय्यवर्त्मना पर्यपालयत् । अखंडशासनः पृथ्व्यां प्रथयन् जैनशासनम् ॥ ४२७ ॥
तस्य स्थानस्थितस्यापि प्रतापसवितुर्द्विषः । तेजोऽसहाः प्रविविशुर्घूकवद्गिरिगह्वरे ॥ ४२८ ॥
धर्मदानयुद्धभेदैस्तस्य वीरत्वमद्भुतम् । निदर्शनतया जज्ञे [2]भूतसद्भाविभूभुजाम् ॥ ४२९ ॥
कदापि तस्य नोत्पेदे भयं स्वपरचक्रजम् । विज्ञाय स पुनर्नित्यं श्रावकव्रतखंडनात् ॥ ४३० ॥
चतुः[3]पर्व्यां चतुर्थादितपसा शुद्धिमुद्वहन् । सामायिकस्थस्तस्थौ स स्वस्थः पौषधसद्मनि ॥ ४३१ ॥
अर्हन्देवो गुरुः साधुरिति तस्य दिवानिशम् । मंत्राक्षरमिव ध्येयं हृदयान्नुत्ततार न ॥ ४३२ ॥
अखंडिताज्ञस्त्रिखंडां दयावानपि सर्वदा । शशास जगतीमेतामुदाय्युदयभाग्नृपः ॥ ४३३ ॥
श्रीवीरस्वामिनो धर्मदेशनाममृतोपमाम् । आचम्याचम्य स सुधीरात्मानं पर्यपावयत् ॥ ४३४ ॥
एवमा केवलज्ञानोत्पत्तेर्विहरतो महीम् । बभूवेति परीवारः स्वामिनश्चरमार्हतः ॥ ४३५ ॥
समजायन्त साधूनां सहस्राणि चतुर्दश । षट्त्रिंशत्तु सहस्राणि साध्वीनां शान्तचेतसाम् ॥ ४३६ ॥

---

१ आलेख्यमेव शेषो यस्य तस्य भावस्तत्ता तां मृत्युमिति यावत् । २ भूतवर्तमानभविष्यद्राजाना मध्ये । ३ चतुर्णामष्टमीचतुर्दशीपूर्णिमामावास्याना पर्वणां समूहस्तस्यां ।

चतुर्दशपूर्वभृतां श्रमणानां शतत्रयम् । त्रयोदशशत्यवधिज्ञानिनां सप्तशत्यथ ॥ ४३७ ॥
वैक्रियलब्ध्यनुत्तरगतिकेवलिनां पुनः । मनोविदां पंचशती वादिनां तु चतुःशती ॥ ४३८ ॥
श्रावकाणां तु लक्षैकैकोनषष्टिसहस्रयुक् । श्राविकाणां तु त्रिलक्षी साष्टादशसहस्रिका ॥ ४३९ ॥

यातेषु गौतमसुधर्ममुनीन्द्रवर्जं मोक्षश्रियं गणधरेषु नवस्वथोच्चैः ।
स्वामी सुरासुरनरेश्वरसेव्यमानपादो जगाम भगवान्नगरीमपापाम् ॥ ४४० ॥

॥ इत्याचार्यश्रीहेमचन्द्रसूरिविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि भाविकुमारपालदेवचरिता-भयप्रव्रज्याकूणिकचरितोदायिराज्यश्रीमहावीरकेवलिविहारवर्णनो नाम द्वादशः सर्गः ।

---

इति स्तुत्वा सुनासीरे[1] स्थितेऽपापापुरीपतिः । हस्तिपालनृपोऽप्येवं वीरस्वामिनमस्तवीत् ॥ १३ ॥
न परं नाम मृद्वेव[2] कठोरमपि किंचन । विशेषज्ञाय विज्ञप्यं स्वामिने स्वान्तशुद्धये ॥ १४ ॥
न पक्षिपशुसिंहादिवाहनासीनविग्रहः । न नेत्रवक्त्रगात्रादिविकारविकृताकृतिः ॥ १५ ॥
न शूलचापचक्रादिशस्त्रांककरपल्लवः । नांगनाकमनीयांगपरिष्वंगपरायणः ॥ १६ ॥
न गर्हणीयचरितप्रकंपितमहाजनः[3] । न प्रकोपप्रसादादिविडंबितनरामरः ॥ १७ ॥
न जगज्जननस्थेम[4]विनाशविहितादरः । न लास्यहास्यगीतादिविप्लवोपप्लुतस्थितिः ॥ १८ ॥
तदेवं सर्वदेवेभ्यः सर्वथा त्वं विलक्षणः । देवत्वेन प्रतिष्ठाप्यः कथं नाम परीक्षकैः ॥ १९ ॥
अनुश्रोतः[5]सरत्पर्णतृणकाष्ठादि युक्तिमत् । प्रतिश्रोतः श्रयद्वस्तु कया युक्त्या प्रतीयताम् ॥ २० ॥
अथवालं मन्दबुद्धिपरीक्षकपरीक्षणैः । ममापि कृतमेतेन वैयात्येन[6] जगत्प्रभो ॥ २१ ॥
यदेव सर्वसंसारिजन्तुरूपविलक्षणम् । परीक्षन्तां कृतधियस्तदेव तव लक्षणम् ॥ २२ ॥
क्रोधलोभभयाक्रान्तं जगदस्माद्विलक्षणः । न गोचरो मृदुधियां वीतराग कथंचन ॥ २३ ॥
एवं स्तुत्वा हस्तिपाले विरतेऽर्हन्नपश्चिमः[7] । अपश्चिमामित्यकरोद्भगवान् धर्मदेशनाम् ॥ २४ ॥
पुमर्था इह चत्वारः कामार्थौ तत्र जन्मिनाम् । अर्थभूतौ नामधेयादनर्थौ परमार्थतः ॥ २५ ॥
अर्थस्तु मोक्ष एवैको धर्मस्तस्य च कारणम् । संयमादिर्दशविधः संसाराम्भोधितारणः ॥ २६ ॥

---

१ इन्द्रे । २ विशेषज्ञाय स्वामिने मृदुवाक्येनैव विज्ञपनीयमिति न, परं कठोरमपि विज्ञपयामि । ३ निन्द्यचरितेन प्रकंपिता महान्तो जना येन सः । ४ स्थेमा स्थितिः । ५ अनुश्रोतः सरद्गच्छद्यत्पर्णतृणकाष्ठादि तत्तु युक्तिमदस्ति । ६ निर्लज्जत्वेन । ७ चरमः ।

अनन्तदुःखः संसारो मोक्षोऽनन्तसुखः पुनः । तयोस्त्यागपरिप्राप्तिहेतुर्धर्मं विना न हि ॥ २७ ॥
मार्गं श्रितो यथा दूरं क्रमात् पंगुरपि व्रजेत् । धर्मस्थो घनकर्मापि तथा मोक्षमवाप्नुयात् ॥ २८ ॥
एवं च देशनां कृत्वा विरते त्रिजगद्गुरौ । मंडलेशः पुण्यपालः प्रभुं नत्वा व्यजिज्ञपत् ॥ २९ ॥
स्वामिन् स्वप्ना मयाद्याष्टौ दृष्टास्तत्र गजः कपिः । क्षीरद्रुः काकसिंहाब्जबीजकुंभा इमे क्रमात् ॥ ३० ॥
तदाख्याहि फलं तेषां भीतोऽस्मि भगवन्नहम् । इति पृष्टो जगन्नाथो व्याचकारेति तत्फलम् ॥ ३१ ॥
विवेकवन्तो भूत्वापि हस्तितुल्या अतः परम् । वत्स्यन्ति श्रावका लुब्धाः क्षणिकर्द्धिसुखे गृहे ॥ ३२ ॥
न दौस्थ्ये परचक्रे वा प्रव्रजिष्यन्त्युपस्थिते । आत्तामपि परिव्रज्यां त्यक्ष्यन्ति च कुसंगतः ॥ ३३ ॥
विरलाः पालयिष्यन्ति कुसंगेऽपि व्रतं खलु । इदं गजस्वप्नफलं कपिस्वप्नफलं त्वदः ॥ ३४ ॥
प्रायः कपिसमा लोलपरिणामाल्पसत्त्वकाः । आचार्यमुख्या गच्छस्थाः प्रमादं गामिनो व्रते ॥ ३५ ॥
ते विपर्यासयिष्यन्ति धर्मस्था नितरामपि । भाविनो विरला एव धर्मोद्योगपराः पुनः ॥ ३६ ॥
धर्मश्लथेषु ये शिक्षां प्रदास्यन्त्यप्रमादिनः । ते तैरुपहसिष्यन्ते ग्राम्यैर्ग्रामस्थपौरवत् ॥ ३७ ॥
इत्थं प्रवचनावज्ञातः परं हि भविष्यति । प्लवंगमस्वप्नफलमिदं जानीहि पार्थिव ॥ ३८ ॥
क्षीरद्रुतुल्याः सुक्षेत्रे दातारः शासनार्चकाः । श्रावकास्ते तु रोत्स्यन्ते लिंगिभिर्वंचनापरैः ॥ ३९ ॥
तेषां च प्रतिभास्यन्ति सिंहसत्त्वभृतोऽपि हि । महर्षयः सारमेया इवासारमतिस्पृशाम् ॥ ४० ॥
आदास्यन्ते सुविहितविहारक्षेत्रपद्धतिम् । लिंगिनो बब्बूलसमाः क्षीरद्रुफलमीदृशम् ॥ ४१ ॥
धृष्टस्वभावा मुनयः प्रायो धर्मार्थिनोऽपि हि । रंस्यन्ते न हि गच्छेषु दीर्घिकांभःस्विव ध्वांक्षाः ॥ ४२ ॥

ततोऽन्यगच्छिकैः सूरिप्रमुखैर्वंचनापरैः । मृगतृष्णानिभैः सार्धं चलिष्यन्ति जडाशयाः ॥ ४३ ॥
न युक्तमेभिर्निर्गमनमिति तत्रोपदेशकान् । बाधिष्यन्ते नितान्तं ते काकस्वप्नफलं ह्यदः ॥ ४४ ॥
सिंहतुल्यं जिनमतं जातिस्मृत्याद्यनूज्झितम् । विपत्स्यतेऽस्मिन् भरतवने धर्मज्ञवर्जिते ॥ ४५ ॥
न कुतीर्थिकतिर्यंचोऽभिभविष्यन्ति जातु तत् । स्वोत्पन्नाः कृमिवत्किं तु लिंगिनोऽशुद्धबुद्धयः ॥ ४६ ॥
लिंगिनोऽपि प्राक्प्रभावात् श्वापदाभैः कुतीर्थिकैः । न जात्वभिभविष्यन्ते सिंहस्वप्नफलं ह्यदः ॥ ४७ ॥
अब्जाकरेष्वंबुजानि सुगन्धीनीव देहिनः । धार्मिका न भविष्यन्ति संजाताः सुकुलेष्वपि ॥ ४८ ॥
अपि धर्मपरा भूत्वा भविष्यन्ति कुसंगतः । ग्रामावकरकोत्पन्नगर्दभाब्जवदन्यथा ॥ ४९ ॥
कुदेशे कुकुले जाता धर्मस्था अपि भाविनः । हीना इत्यनुपादेयाः पद्मस्वप्नफलं ह्यदः ॥ ५० ॥
यथा फलायाबीजानि बीजबुध्ध्योखरे वपेत् । तथा वप्स्यन्त्यकल्पानि कुपात्रे कल्पबुद्धितः ॥ ५१ ॥
यद्वा घुणाक्षरन्यायाद्यथा कोऽपि कृषीवलः । अबीजान्तर्गतं बीजं वपेत् क्षेत्रे निराशयः ॥ ५२ ॥
अकल्पान्तर्गतं कल्पमज्ञानाः श्रावकास्तथा । पात्रे दानं करिष्यन्ति बीजस्वप्नफलं ह्यदः ॥ ५३ ॥
क्षमादिगुणपद्मांकाः सुचरित्रांबुपूरिताः । रहःस्था भाविनः कुंभा इव स्तोका महर्षयः ॥ ५४ ॥
श्लथाचारचरित्राश्च कलशा मलिना इव । यत्र तत्र भविष्यन्ति बहवो लिंगिनः पुनः ॥ ५५ ॥
समत्सराः करिष्यन्ति कलहं ते महर्षिभिः । उभयेषामपि तेषां साम्यं लोके भविष्यति ॥ ५६ ॥
गीतार्था लिंगिनश्च स्युः साम्येन व्यवहारिणः । जनेन ग्रहिलेनेवाग्रहिलग्रहिलो नृपः ॥ ५७ ॥

१ अग्रहिलोऽपि ग्रहिल इव ग्रहग्रस्त इव ।

तथाहि पृथिवीपुर्यां पूर्णो नाम महीपतिः । सुबुद्धिस्तस्य चामात्यो निधानं बुद्धिसंपदः ॥ ५८ ॥
कालं तेनागमिष्यन्तं पृष्टोऽन्येद्युः सुबुद्धिना । लोकदेवोऽभिधानेन नैमित्तिकवरोऽवदत् ॥ ५९ ॥
मासादनन्तरं मेघो वर्षिता तज्जलं पुनः । यः पास्यति स सर्वोऽपि ग्रहग्रस्तो भविष्यति ॥ ६० ॥
कियत्यपि गते काले सुवृष्टिश्च भविष्यति । पुनः सज्जा भविष्यन्ति तत्पयःपानतो जनाः ॥ ६१ ॥
राज्ञे मंत्री तदाचख्यौ राजाप्यानकताडनात् । आख्यापयज्जने वारिसंग्रहार्थमथादिशत् ॥ ६२ ॥
सर्वोऽपि हि तथा चक्रे ववर्षोक्तेऽह्नि चांबुदः । कियत्यपि गते काले संगृहीतांबु निष्ठितम् ॥ ६३ ॥
अक्षीणसंग्रहांभस्कौ राजामात्यौ तु तौ विना । नवांबु लोकाः सामन्तप्रमुखाश्च पपुस्ततः ॥ ६४ ॥
तत्पानाद्ग्रहिलाः सर्वे ननृतुर्जहसुर्जगुः । स्वैरं चिचेष्टिरेऽन्यत्र विना तौ राजमंत्रिणौ ॥ ६५ ॥
राजामात्यौ विसदृशौ सामन्ताद्या निरीक्ष्य ते । मंत्रयाञ्चक्रिरे नूनं ग्रहिलौ राजमंत्रिणौ ॥ ६६ ॥
अस्मद्विलक्षणाचाराविमकावपसार्य तत् । अपरौ स्थापयिष्यामः स्वोचितौ राजमंत्रिणौ ॥ ६७ ॥
मंत्री ज्ञात्वेति तन्मंत्रं नृपायाख्यन्नृपोऽवदत् । आत्मरक्षा कथं कार्या तेभ्यो वृन्दं हि राजवत् ॥ ६८ ॥
मंत्र्यूचे ग्रहिलीभूय स्थातव्यं ग्रहिलैः सह । त्राणोपायो न कोऽप्यन्य इदं हि समयोचितम् ॥ ६९ ॥
कृत्रिमं ग्रहिलीभूय ततस्तौ राजमंत्रिणौ । तेषां मध्ये ववृताते रक्षन्तौ निजसंपदम् ॥ ७० ॥
ततः सुसमये जाते शुभवृष्टौ नवोदके । पीते सर्वेऽभवन् स्वस्था मूलप्रकृतिधारिणः ॥ ७१ ॥
एवं च दुःषमाकाले गीतार्था लिंगिभिः सह । सदृशीभूय वत्स्यंति भाविस्वसमयेक्षवः ॥ ७२ ॥

---

१ भाविन कालम् । २ क्षीणम् ।

इति श्रुत्वा स्वप्नफलं पुण्यपालो महामनाः । प्रबुद्धः प्राव्रजत्तत्र क्रमान्मोक्षमियाय च ॥ ७३ ॥
भगवन्तं प्रणम्याथ गणभृद्गौतमोऽभ्यधात् । तृतीयारकपर्यन्ते भगवान्नृषभोऽभवत् ॥ ७४ ॥
त्रयोविंशतिरर्हन्तस्तुरीयारेऽजितादयः । अभवन्नवसर्पिण्यां यावद्यूयं जगद्गुरो ॥ ७५ ॥
अतः परं पंचमारे दुःषमानामनि प्रभो । यद्भविष्यति तद्ब्रूहि प्रसीद परमेश्वर ॥ ७६ ॥
स्वाम्याख्यन्मम निर्वाणादतीतैर्वत्सरैस्त्रिभिः । सार्धाष्टमाससहितैः पंचमारः प्रवेक्ष्यति ॥ ७७ ॥
मन्निर्वाणाद्गतेष्वब्दशतेष्वेकोनविंशतौ । चतुर्दशाब्द्यां च म्लेच्छकुले चैत्राष्टमीदिने ॥ ७८ ॥
विष्टौ भावी नृपः कल्की स रुद्रोऽथ चतुर्मुखः । नामत्रयेण विख्यातः पाटलीपुत्रपत्तने ॥ ७९ ॥
तदा च मथुरापुर्यामकस्माद्रामकृष्णयोः । निपतिष्यत्यायतनं वाताहतजरद्द्रुवत् ॥ ८० ॥
क्रोधमानमायालोभाः सदा काष्ठे घुणा इव । नैसर्गिका भविष्यन्ति तस्मिन् क्रूरतराशये ॥ ८१ ॥
चौरराजविरोधो राड्भयं गन्धरसक्षयः । दुर्भिक्षमीत्यवृष्टी च भविष्यन्ति तदा खलु ॥ ८२ ॥
कुमारोऽष्टादशाब्दानि तावन्त्येव च डामरी । ततः परं प्रचंडात्मा राजा कल्की भविष्यति ॥ ८३ ॥
नगरे पर्यटंस्तत्र पंच स्तूपान्निरीक्ष्य सः । परिप्रक्ष्यति पार्श्वस्थान् केनैते कारिता इति ॥ ८४ ॥
कथयिष्यन्ति तेऽप्येवं पुरासीद्विश्वविश्रुतः । नन्दो नाम क्षितिपतिर्धनैर्धनदसन्निभः ॥ ८५ ॥
हिरण्यमस्ति स्तूपेषु तेनेह निहितं बहु । नादातुं तत्क्षमः कोपि बभूव पृथिवीपतिः ॥ ८६ ॥
कल्किराजस्तदाकर्ण्य भूरिलोभो निसर्गतः । खानयिष्यति तान् स्तूपान् हिरण्यं च ग्रहीष्यति ॥ ८७ ॥

१ हस्तिपालः । २ जरद्दुर्जीर्णवृक्षः । ३ ईतिश्चावृष्टिश्च तथा । ४ महामारी ।

सर्वतोऽपि पुरं तस्य सोऽर्थार्थी खानयिष्यति । अखिलांश्च महीपालांस्तृणवद्गणयिष्यति ॥ ८८ ॥
कल्किना खान्यमानायास्तदा च स्वपुरावनेः । नाम्ना लवणदेवी गौरुत्थास्यति शिलामयी ॥ ८९ ॥
चतुष्पथेऽवस्थिता सा भिक्षार्थमटतो मुनीन् । तत्प्रातिहार्याच्छृंगाग्रभागेणाघट्टयिष्यति ॥ ९० ॥
स्थविराश्च वदिष्यन्ति भाविनं सूचयत्यसौ । जलोपसर्गमत्यन्तं तत् क्वापि व्रजतान्यतः ॥ ९१ ॥
श्रुत्वा तत्केऽपि यास्यन्ति विहारेण महर्षयः । अन्ये तु भक्तवस्त्रादिलुब्धा वक्ष्यन्त्यदः खलु ॥ ९२ ॥
कालात्कर्मवशाद्भावि शुभं वा यदि वाशुभम् । कस्तन्निषेधयितुमलंभूष्णुर्जिष्णुरपि[1] स्वयम् ॥ ९३ ॥
ततः पाखण्डिनः सर्वान् कल्की याचिष्यते करम् । तं च तस्मै प्रदास्यन्ति ते सारम्भपरिग्रहाः ॥ ९४ ॥
अन्यैः पाखण्डिभिर्दत्तः करो यूयं न दत्थ किम् । इति ब्रुवाणो लुब्धात्मा स साधूनपि रोत्स्यते ॥ ९५ ॥
साधवस्तं वदिष्यन्ति राजन् वयमकिंचनाः । भिक्षाभुजो धर्मलाभं विना किं दद्महे तव ॥ ९६ ॥
पुराणेषूक्तमस्त्येवं ब्रह्मनिष्ठांस्तपोधनान् । रक्षंस्तत्पुण्यषष्ठांशभाग्भवेदवनीपतिः ॥ ९७ ॥
अस्माद्दुष्कर्मणस्तस्माद्विरमावनिशासन । व्यवसायोऽशुभायायं पुरे राष्ट्रे च सर्वथा ॥ ९८ ॥
एवं मुनिवचः श्रुत्वा कल्की कोपिष्यति ध्रुवम् । भ्रूकुटिः करालास्यः कृतान्त इव भीषणः ॥ ९९ ॥
किमरे मर्तुकामोऽसि मर्त्याधम मुनीनपि । याचसेऽर्थं वक्ष्यतीति ततस्तं पुरदेवता ॥ १०० ॥
देवतावचसा तेन सिंहनादेन दन्तिवत् । भीतः कल्की नतिपूर्वं तान् साधून् क्षमयिष्यति ॥ १०१ ॥
भविष्यन्ति च भूयांसस्तदोत्पाता भयंकराः । अन्वहं कल्किराजस्य नगरक्षयसूचकाः ॥ १०२ ॥

---

१ जयनशीलः ।

अहोरात्रान् सप्तदश वर्षिष्यत्यथ वारिदः । गंगाप्रवाहश्चोद्धृत्य तत्पुरं प्लावयिष्यति ॥ १०३ ॥
तत्राचार्यः प्रातिपदः कोऽपि संघजनोऽपि च । पूर्वोक्तः कोऽपि कल्की च स्थास्यन्ति स्थलमूर्धनि ॥१०४॥
गंगाप्रवाहपयसा परितोऽपि प्रसारिणा । यास्यन्ति निधनं सद्यो बहवः पुरवासिनः ॥ १०५ ॥
जलोपसर्गे विरते नन्दद्रव्येण तेन तु । कल्किराजः पुनरपि करिष्यति नवं पुरम् ॥ १०६ ॥
भविष्यन्त्यायतनानि विहरिष्यन्ति साधवः । वर्षिष्यति च कालेऽब्दः सस्यनिष्पत्तिकारणम् ॥ १०७ ॥
द्रम्मेण कुंभमानेऽपि सस्यं न क्रेष्यते जनः । पंचाशदब्दीमेवं च सुभिक्षं भावि कल्किनि ॥ १०८ ॥
आसन्नमृत्युर्भूयोऽपि कल्की पाखंडिनोऽखिलान् । त्याजयिष्यति लिंगानि व्युपद्रोष्यति चोच्चकैः ॥१०९॥
ससंघं च प्रातिपदं न्यस्य गोवाटके तदा । याचिष्यते स भिक्षायाः षष्ठं भागं दुराशयः ॥ ११० ॥
संघः शक्राराधनाय कायोत्सर्गं करिष्यति । शासनदेव्यो वक्ष्यन्ति कल्किन् क्षेमाय न ह्यदः ॥ १११ ॥
संघस्य कायोत्सर्गानुभावेन चलितासनः । वृद्धद्विजवपुर्भूत्वा शक्रस्तत्रागमिष्यति ॥ ११२ ॥
महासिंहासनासीनं कल्किनं पर्षदि स्थितम् । शक्रो वक्ष्यति किं न्वेते निरुद्धाः साधवस्त्वया ॥ ११३ ॥
कल्की भाषिष्यते शक्रं मत्पुरे निवसन्त्यमी । न मे करं तु यच्छन्ति भिक्षाषष्ठांशमप्यहो ॥ ११४ ॥
पाखंडाः करदाः सर्वे ममाभूवन्नमी न तु । दुर्गवीव बलाद्दोग्धुं निरुद्धास्तेन वाटके ॥ ११५ ॥
तं जल्पिष्यति शक्रोऽपि नैतेषामस्ति किंचन । भिक्षांशमपि दास्यन्ति न कस्यापि कदाप्यमी ॥ ११६ ॥
भिक्षुभ्यो याचमानस्त्वं भिक्षांशं लज्जसे न किम् । तन्मुंचामूनन्यथा ते भाव्यनर्थो महान् खलु ॥ ११७

---

१ दुष्टा गौरिव ।

कुप्यन्निति गिरा कल्की वदिष्यत्यररे भटाः । कंठे धृत्वा द्विजममुमपसारयत द्रुतम् ॥ ११८ ॥
इत्युक्ते कल्किनं कल्कपर्वतं पाकशासनः । चपेटाताडनात् सद्यो भस्मराशीकरिष्यति ॥ ११९ ॥
षडशीतिं वत्सराणामायुः संपूर्य कल्किराट् । नारको नरकावन्यां दुरन्तायां भविष्यति ॥ १२० ॥
अनुशिष्यार्हतं धर्मं दत्ताख्यं कल्किनः सुतम् । राज्ये निवेश्य वन्दित्वा संघं शक्रो गमिष्यति ॥ १२१ ॥
पितुः पापफलं घोरं शक्रशिक्षां च संस्मरन् । दत्तः करिष्यति महीमर्हच्चैत्यविभूषिताम् ॥ १२२ ॥
पंचमारकपर्यन्तं यावदेवमतः परम् । प्रवृत्तिर्जिनधर्मस्य भविष्यति निरन्तरा ॥ १२३ ॥
इदं हि भरतक्षेत्रं ग्रामाकरपुराकुलम् । धनधान्याचित[1]मर्हत्कालेऽभूत्स्वर्गसन्निभम् ॥ १२४ ॥
ग्रामा नगरवत्स्वर्गसमानि नगराणि च । कुटुंबिनो नृपसमा नृपा वैश्रवणोपमाः ॥ १२५ ॥
आचार्याश्चन्द्रमस्तुल्याः पितरो देवतासमाः । श्वश्रूश्च जननीतुल्याः श्वशुराः पितृसन्निभाः ॥ १२६ ॥
सत्यशौचपरो धर्माधर्मज्ञो विनयप्रियः । गुरुदेवार्चकः स्वस्त्रीसंतुष्टश्च तदा जनः ॥ १२७ ॥
अर्घति स्म च विज्ञानं विद्या शीलं कुलं तथा । परचक्रे[2]तिदस्युभ्योऽभून्न भीर्न करो नवः ॥ १२८ ॥
अर्हद्भक्ताश्च राजानोऽ[3]वगीताश्च कुतीर्थिकाः । बभूवुरुपसर्गादीन्याश्चर्याणि दशापि च ॥ १२९ ॥
अतः परं दुःषमायां कषायैर्लुप्तधर्मधीः । भावी लोकोऽ[4]मर्यादोऽत्युदकक्षेत्रभूरिव ॥ १३० ॥
यथा यथा यास्यति च कालो लोकस्तथा तथा । कुतीर्थिमोहितमतिर्भाव्यहिंसादिवर्जितः ॥ १३१ ॥
ग्रामाः श्मशानवत्प्रेतलोकवन्नगराणि च । कुटुंबिनश्चेट[5]समा यमदंडसमा नृपाः ॥ १३२ ॥

---

१ धनधान्यैर्व्याप्तम् । २ ईतिरुपद्रवः । ३ निन्दिताः । ४ मर्यादारहितः । ५ दाससमाः ।

लुब्धा नृपतयो भृत्यान् ग्रहीष्यति धनं निजान्। तद्भृत्याश्च जनमिति मात्स्यो न्यायः प्रवर्त्स्यति ॥१३३॥
येऽन्त्यास्ते भाविनो मध्ये ये मध्यास्तेऽन्तिमाः क्रमात्। देशाश्च दोलायिष्यन्ते नावोऽसितपटा इव ॥१३४॥
चौर्याच्चौराः पीडयिष्यंत्युर्वीं भूपाः करेण तु। श्रेण्यो भूतग्रहप्राया लंचालुब्धा नियोगिनः ॥ १३५ ॥
भावी विरोधी स्वजने जनः स्वार्थैकतत्परः। परार्थविमुखः सत्यलज्जादाक्षिण्यवर्जितः ॥ १३६ ॥
गुरूनाराधयिष्यन्ति शिष्याः शिष्येषु तेऽपि हि। श्रुतज्ञानोपदेशं न प्रदास्यन्ति कथंचन ॥ १३७ ॥
एवं गुरुकुलवासः क्रमादपगमिष्यति। मन्दा धीर्भाविनी धर्मे बहुसत्त्वाकुला च भूः ॥ १३८ ॥
न साक्षाद्भाविनो देवा विमंस्यन्ते सुताः पितॄन्। सर्पीभूताः स्नुषाः श्वश्र्वः कालरात्रिसमाः पुनः ॥१३९॥
दृग्विकारैः स्मितैर्जल्पैर्विलासैरपरैरपि। वेश्यामनुकरिष्यन्ति त्यक्तलज्जाः कुलस्त्रियः ॥ १४० ॥
श्रावकश्राविकाहानिश्चतुर्धाधर्मसंक्षयः। साधूनामथ साध्वीनां पर्वस्वप्यनिमंत्रणम् ॥ १४१ ॥
कूटतुला कूटमानं शाठ्यं धर्मेऽपि भावि च। सन्तो दुःस्थीभविष्यन्ति सुस्थाः स्थास्यन्ति दुर्जनाः॥१४२॥
मणिमंत्रौषधीतंत्रविज्ञानानां धनायुषाम्। फलपुष्परसानां च रूपस्य वपुरुन्नतेः॥ १४३ ॥
धर्माणां शुभभावानां चान्येषां पंचमे ह्यरे। हानिर्भविष्यति ततोऽप्यरे षष्ठेऽधिकं खलु ॥ १४४ ॥
क्रमादेवं क्षीयमाणपुण्ये काले प्रसर्पति। धर्मे धीर्भाविनी यस्य सफलं तस्य जीवितम् ॥ १४५ ॥
आचार्यो दुःप्रसहाख्यः फल्गुश्रीरिति साध्व्यपि। श्रावको नागिलो नाम सत्यश्रीश्राविका पुनः॥१४६॥
विमलवाहन इति राजमंत्री सुमुखाभिधः। अपश्चिमा भाविनोऽमी दुःषमायां हि भारते ॥ १४७ ॥

---

१ एकव्यापारवन्तः। २ अधिकारिणः।

रत्निद्वयप्रमाणांगा विंशत्यब्दायुषश्च ते । तपो दुष्प्रसहादीनां चतुर्णां षष्ठमुत्तमम् ॥ १४८ ॥
दशवैकालिकभृद्घः स चतुर्दशपूर्ववित् । प्रबोधयिष्यति संघं तीर्थं दुष्प्रसहावधि ॥ १४९ ॥
ततोऽर्वाग्वर्त्स्यति धर्मो धर्मो नास्तीति यः पुनः । वदिष्यति स संघेन कर्तव्यः संघतो बहिः ॥ १५० ॥
द्वादशाब्दीं गृहे नीत्वाष्टाब्दीं दुष्प्रसहो व्रते । पर्यन्तेऽष्टमभक्तेन सौधर्मं कल्पमेष्यति ॥ १५१ ॥
पूर्वाह्णेऽथ चारित्रस्य समुच्छेदो भविष्यति । मध्याह्ने राजधर्मस्यापराह्णे जातवेदसः ॥ १५२ ॥
इत्थं च दुःषमा वर्षसहस्राण्येकविंशतिः । एकान्तदुःषमाकालोऽप्येवंमानो भविष्यति ॥ १५३ ॥
धर्मतत्त्वे प्रणष्टेऽथ हाहाभूतो भविष्यति । पशुवन्मातृपुत्रादिव्यवस्थावर्जितो जनः ॥ १५४ ॥
परुषाः पांशुभूयांसोऽनिष्टा वास्यन्ति वायवः । दिशश्च धूमायिष्यन्ति भीषणाश्च दिवानिशम् ॥ १५५ ॥
इन्दुः स्रक्ष्यत्यतिशीतं तप्स्यत्यत्युष्णमर्यमा । अतिशीतोष्णाभिहतो लोकः क्लेशमवाप्स्यति ॥ १५६ ॥
तदा च विरसा मेघाः क्षारमेघाम्लमेघकाः । विषाग्न्यशनिमेघाश्च वर्षिष्यन्त्यात्मसन्निभम् ॥ १५७ ॥
येन भावी कासः श्वासः शूलं कुष्ठं जलोदरम् । ज्वरः शिरोऽर्तिरन्येऽपि मनुष्याणां महामयाः ॥१५८॥
दुःखं स्थास्यन्ति तिर्यञ्चो जलस्थलखचारिणः । भावी क्षेत्रवनारामलतातरुतृणक्षयः ॥ १५९ ॥
वैताढ्यऋषभकूटगंगासिन्धूर्विमुच्य च । समीभविष्यत्यखिलं गिरिगर्तापगादिकम् ॥ १६० ॥
अंगारमर्मराभा भूर्भस्मरूपा भविष्यति । कदाचिद्धूलिबहुला कदाचित्सान्द्रकर्दमा ॥ १६१ ॥
रत्निमानपुरुषांगा दुर्वर्णा निष्ठुरोक्तयः । रोगार्ताः क्रोधना रूक्षघाटाश्चिपिटनासिकाः ॥ १६२ ॥

---

१ अग्नेः । २ हाहाकारः । ३ विषमेघो विष वर्षिष्यति अग्निमेघोऽग्निमित्याद्यात्मसन्निभम् ।

निर्लज्जा वस्त्ररहिता भविष्यन्ति नराः स्त्रियः । आयुर्विंशतिरब्दानि नृणां स्त्रीणां तु षोडश ॥ १६३ ॥
गर्भं वक्ष्यति षड्वर्षा स्त्री दुःखप्रसवा तदा । स्थविरा षोडशाब्दा च भूयिष्ठसुतनप्तृका ॥ १६४ ॥
भाविनो बिलवासाश्च गिरौ वैताढ्यनामनि । द्वासप्ततिर्नद्युभयतटभूषु बिलानि तु ॥ १६५ ॥
कूले कूले कूलिनीनां बिलानि नव तत्र च । तिर्यञ्चस्तु भविष्यन्ति बीजमात्रतयैव हि ॥ १६६ ॥
पललाहारनिरता नृशंसा निर्विवेककाः । तदानीं च भविष्यन्ति मनुष्याद्या अशेषतः ॥ १६७ ॥
तदा रथपथमात्रं गंगासिन्धुनदीजलम् । प्रवक्ष्यति चलन्मत्स्यकच्छपादिभिरोचितम् ॥ १६८ ॥
तत्रेत्य निशि मत्स्यादीन् कृष्ट्वा मोक्ष्यन्ति च स्थले । दिवा सूर्यत्विषा पक्वान् खादिष्यन्ति निशान्तरे १६९
एवं सदापि भोक्ष्यन्ते यदृच्छ्यादि तदा न हि । न पुष्पं न फलं नान्नं न च शय्यासनादिकम् ॥ १७० ॥
भरतैरवतेष्वेवं दशस्वपि हि दुःषमा । तथातिदुःषमाप्येकविंशत्यब्दसहस्रिका ॥ १७१ ॥
अरौ याववसर्पिण्यामन्त्योपान्त्यावुभौ च तौ । उत्सर्पिण्यां स्वकीयानुभावावाद्यद्वितीयकौ ॥ १७२ ॥
उत्सर्पिण्यां दुःषमदुःषमान्तसमयेऽम्बुदाः । भाविनः पञ्च सप्ताहवर्षिणस्ते पृथक् पृथक् ॥ १७३ ॥
तत्राद्यः पुष्करो नाम महीं निर्वापयिष्यति । द्वितीयः क्षीरमेघाख्यो धान्यान्युत्पादयिष्यति ॥ १७४ ॥
तृतीयो घृतमेघाख्यः स्नेहं संजनयिष्यति । तुर्यस्त्वमृतमेघाख्य ओषध्यादि करिष्यति ॥ १७५ ॥
पृथ्व्यादीनां रसं कर्ता रसमेघश्च पंचमः । पंचत्रिंशद्दिनीं वृष्टिर्भाविनी सौम्यदुर्दिना ॥ १७६ ॥
द्रुमौषधिलतावल्लीहरितादि निरीक्ष्य च । बिलेभ्यो निःसरिष्यन्ति मुदिता बिलवासिनः ॥ १७७ ॥

---

१ मासभक्षणनिरताः । २ व्यासम् । ३ अवसर्पिण्या योऽन्तिमोऽतिदुःषमाकालः स उत्सर्पिण्यामाद्य इत्यादि । ४ सप्तदिनपर्यन्तम् ।

अर्हन् सत्यकिजीवश्चैकादशः सुव्रताभिधः । द्वादशोऽर्हन्नममाख्यो जीवः कृष्णस्य शार्ङ्गिणः ॥ १९४ ॥
बलदेवस्य जीवोऽर्हन्निष्कषायस्त्रयोदशः । जिनेन्द्रो रोहिणीजीवो निष्पुलाकश्चतुर्दशः ॥ १९५ ॥
निर्ममः सुलसाजीवो जिनः पंचदशः पुनः । षोडशो रेवतीजीवश्चित्रगुप्तोऽभिधानतः ॥ १९६ ॥
गवालिजीवः समाधिर्नाम्ना सप्तदशो जिनः । जीवस्तु गार्गलेरष्टादशोऽर्हन् संवराभिधः ॥ १९७ ॥
द्वीपायनजीवस्त्वेकोनविंशोऽर्हन् यशोधरः । विजयो विंशतितमः कर्णजीवो जिनेश्वरः ॥ १९८ ॥
एकविंशो जिनो मल्लो यः पुरा नारदोऽभवत् । अंबडस्य पुनर्जीवो द्वाविंशो देवतीर्थकृत् ॥ १९९ ॥
त्रयोविंशोऽनन्तवीर्यो जीवो द्वारमदस्य तु । स्वातिजीवश्चतुर्विंशो भद्रकृन्नाम तीर्थकृत् ॥ २०० ॥
दीर्घदन्तो गूढदन्तः शुद्धदन्तस्तृतीयकः । तथा श्रीचन्द्रः श्रीभूतिः श्रीसोमः पद्म इत्यपि ॥ २०१ ॥
महापद्मोदशमाख्यस्तथा विमल इत्यपि । विमलवाहनोऽरिष्टो भाविनोऽमी च चक्रिणः ॥ २०२ ॥
॥ युग्मम् ॥
नन्दिश्च नन्दिमित्रश्च तथा सुन्दरबाहुकः । महाबाहुरतिबलो महाबलबलावपि ॥ २०३ ॥
द्विपृष्ठश्च त्रिपृष्ठश्च नवामी अर्धचक्रिणः । चटत्प्रकर्षा[1] रामाश्च तत्र प्रथमतो बलः ॥ २०४ ॥
जयन्तोऽथाजितो धर्मः सुप्रभश्च सुदर्शनः । आनन्दो नन्दनः पद्मस्तथा संकर्षणोऽन्तिमः ॥ २०५ ॥
प्रत्यर्धचक्रिणश्चैते तिलको लोहजंघकः । वज्रजंघः केसरी च बलिः प्रह्लाद इत्यपि ॥ २०६ ॥
तथापराजितो भीमः सुग्रीवो नवमः पुनः । इत्युत्सर्पिण्यां त्रिषष्टिः शलाकापुरुषा अमी ॥ २०७ ॥

---

१ चटन् उत्तरोत्तरमधिकः प्रकर्षो येषा ते वर्धमानोत्कर्षा इत्यर्थः ।

शक्रोऽथ धैर्यमालंब्य नन्दनादिवनाहृतैः । गोशीर्षचन्दनैन्धोभिरेकान्तेऽरचयच्चिताम् ॥ २५० ॥
क्षीरोदसागराम्भोभिर्वपुरस्नपयत् प्रभोः । विलिलेप च दिव्येनांगरागेण स्वयं हरिः ॥ २५१ ॥
आमोच्य वाससी दिव्ये शक्रः स्वामिवपुः स्वयम् । उदध्रे नयनाम्भोभिर्भूयोऽपि स्नपयन्निव ॥ २५२ ॥
विमानवरकल्पायां[1] शिबिकायां प्रभोर्वपुः । शक्रो न्यधादृश्यमानः साश्रुदृग्भिः सुरासुरैः ॥ २५३ ॥
स्वामिशासनवन्मूर्ध्ना तां स्वामिशिबिकामथ । कथंचिद्रुद्धशोकः सन्नुद्दधार पुरन्दरः ॥ २५४ ॥
ववृषुस्तत्र पुष्पाणि दिव्यानि त्रिदिवौकसः । व्याहरन्तो जय जयेत्युच्चकैर्वन्दिवृन्दवत् ॥ २५५ ॥
सुराः स्वनयनाम्भोजपयोभिः पुनरक्तया[2] । गन्धांबुवृष्ट्या परितः सिषिचुर्वसुधातलम् ॥ २५६ ॥
जगुस्तारं च गन्धर्वा गैन्धर्वा[3] इव चामराः । स्मारं स्मारं[4] स्वामिगुणानुद्गृणन्तो मुहुर्मुहुः ॥ २५७ ॥
मृदंगपणवादीनि वाद्यानि शतशो दृढम् । द्युसदस्ताडयामासुर्निजोरःस्थलवच्छुचा[5] ॥ २५८ ॥
स्वामिनः शिबिकाग्रे च ननृतुः सुरयोषितः । स्खलच्चारीक्रमाः[6] शोकान्नर्तक्योऽभिनवा इव ॥ २५९ ॥
दिव्यैर्दुकूलैर्हाराद्यैर्भूषणैः पुष्पदामभिः । आनर्चुः शिबिकां भर्तुश्चतुर्विधदिवौकसः ॥ २६० ॥
श्रावकाः श्राविकाश्चापि भक्तिशोकसमाकुलाः । विदधू रासकगीतं रुदितं च सहैव हि ॥ २६१ ॥
तदा साधुषु साध्वीषु चात्यन्तं विदधे पदम् । शोकः कोकनदेष्व[7]र्कात्यये[8] निद्रेव भूयसी ॥ २६२ ॥
ततश्चितायां निदधे स्वामिनोऽङ्गं पुरन्दरः । विदीर्यमाणहृदय इवात्तः शोकशंकुना ॥ २६३ ॥

---

१ श्रेष्ठविमानतुल्यायाम् । २ व्याप्तया । ३ कोकिला इव । ४ स्मृत्वा स्मृत्वा । ५ शोकेन स्वकीयोरस्थलमिव । ६ स्खलन्तौ चार्यागमनविशेषेण क्रमौ पादौ यासा ता अत एवाभिनवा नर्तक्य इव । ७ कमलेषु । ८ सूर्यस्यात्ययोऽस्तंगमनं तस्मिन् ।

# अथ प्रशस्तिः ॥

शिष्यो जंबुमहामुनेः प्रभव इत्यासीदमुष्यापि च श्रीशय्यंभव इत्यमुष्य च यशोभद्राभिधानो मुनिः ।
संभूतो मुनिभद्रबाहुरिति च द्वौ तस्य शिष्योत्तमौ संभूतस्य च पादपद्ममधुलिट् श्रीस्थूलभद्राह्वयः ॥१॥
वंशक्रमागतचतुर्दशपूर्वरत्नकोशस्य तस्य दशपूर्वधरो महर्षिः ।
नाम्ना महागिरिरिति स्थिरतागिरीन्द्रो[1] ज्येष्ठोऽन्तिषत्समजनिष्ट विशिष्टलब्धिः ॥ २ ॥
शिष्योऽन्यो[2] दशपूर्वभृन्मुनिवृषो[3] नाम्ना सुहस्तीत्यभूद्यत्पादांबुजसेवनात्समुदितप्राज्यप्रबोधर्द्धिकः ।
चक्रे संप्रतिपार्थिवः प्रतिपुरग्रामाकरं भारतेऽस्मिन्नर्द्धे जिनचैत्यमंकितमिलापृष्ठं समन्तादपि ॥ ३ ॥
अजनि सुस्थितसुप्रतिबुद्ध इत्यभिधयार्यसुहस्तिमहामुनेः ।
शमधने दशपूर्वधरोऽन्तिषद्भवमहातरुभञ्जनकुञ्जरः ॥ ४ ॥
महर्षिसंसेवितपादसन्निधेः प्रचारभागाल्लवणोदसागरम् ।
महान् गणः कोटिक इत्यभूत्ततो गंगाप्रवाहो हिमवद्गिरेरिव ॥ ५ ॥
तस्मिन् गणे कतिपयेष्वपि यातवत्सु साधूत्तमेषु चरमो दशपूर्वधारी ।
उद्दामतुंबवनपत्तनवज्रखानिवज्रं महामुनिरजायत वज्रसूरिः ॥ ६ ॥

---

१ स्थिरतायां गिरीन्द्रः । २ शिष्यः । ३ मुनिश्रेष्ठः ।

# जाहेरखबर.



श्री त्रिषष्टि शलाका पुरुष चरित्रनो आखो ग्रंथ मूळ छ भागमां अने भाषांतर पांच भागमां अमारा तरफथी प्रसिद्ध थयेल छे. ते एवो उत्तम ग्रंथ छे के जैननी दरेक जाहेर लाइब्रेरीमां तेमज खानगी लाइब्रेरीमां पोताना आत्मिक देहना भूषण अर्थे राखवानी खास आवश्यकता छे. उक्त मूळ ग्रंथने छपाववामां मुर्शिदाबादनिवासी रायबहादुर बाबुसाहेब बुद्धसिंहजी तथा मुंबइनिवासी मर्हुम शेठ वीरचंद दीपचंद जे. पी., सी. आइ. इ. नी मदद मळवाथी ते ग्रंथ ( मूळ ) जैननी जाहेर लाइब्रेरीओने, पुस्तकभंडारोने तेमज मुनिमहाराजोने भेट तरीके मोकलवामां आवे छे. वेचाता मंगावनारने माटे किंमत नीचे प्रमाणे राखवामां आवी छे.

| | | | |
|---|---|---|---|
| त्रिषष्टि शलाका पुरुष चरित्र मूळ | | पर्व १ लुं. ( आदीश्वर चरित्र). | रु. १—०—० |
| सदर | ,, | पर्व २ जुं. ( अजितनाथ चरित्र ). | रु. ०—१२—० |
| सदर | ,, | पर्व ३—४—५—६ ( श्री संभवनाथजीथी मुनिसुव्रत स्वामी सुधीनां चरित्रो ). | रु. १—१२—० |
| सदर | ,, | पर्व ७ मुं ( जैनरामायण विगेरे) | रु. १—०—० |

सदर पर्व ८–९ मुं ( पर्व ८ मा श्रीनेमिनाथजी, कृष्ण, बलभद्र, जरासंधनां
चरित्रो, पर्व ९ मां ब्रह्मदत्तचक्रवर्ती तथा श्रीपार्श्वनाथजीनां चरित्रो) रु. १—८—०

सदर मूळ पर्व १० मुं (महावीरस्वामी विगेरेनां चरित्रो) रु. १—८—०

एकंदर दशे पर्व ( मूळ ) मंगावनारने रु. सातथी मळी शकशे.

---

| | | |
|---|---|---|
| त्रिषष्टि शलाका पुरुष चरित्र भाषांतर | पर्व १–२ जुं. ( बीजी आवृत्ति ) | रु. २—४—० |
| सदर ” | पर्व ३–४–५–६ ठुं ( बीजी आवृत्ति ) | रु. २—४—० |
| सदर ” | पर्व ७ मुं ( बीजी आवृत्ति ) | रु. १—४—० |
| सदर ” | पर्व ८–९ मुं. | रु. १—१२—० |
| सदर ” | पर्व १० मुं. | रु. १—८—० |

सदर ” एकंदर दशे पर्वनुं भाषांतर मंगावनारने आठ रुपीआथी मळी शकशे.

श्री जैनधर्म प्रसारक सभाना सभासदोने पोणी किंमते ( रु. ६–१२–० थी) मळी शकशे.

पोस्टेज जुदुं समजवुं.

**श्री जैनधर्म प्रसारक सभा.**

भावनगर.

तदा च कार्तिकदर्शनिशायाः पश्चिमे क्षणे । स्वांतिऋक्षे[1] वर्तमाने कृतपष्ठो जगद्गुरुः ॥ २२२ ॥
कल्याणफलपाकानि पंचपंचाशतं तथा । तावन्त्यघविपाकानि जगावध्ययनानि तु ॥ २२३ ॥ युग्मम् ॥
षट्त्रिंशतमप्रश्नव्याकरणान्यभिधाय[2] च । प्रधानं नामाध्ययनं जगद्गुरुरभावयत् ॥ २२४ ॥
स्वामिनो मोक्षसमयं विज्ञायासनकंपतः । सुरासुरेन्द्रास्तत्रेयुः सर्वेऽपि सपरिच्छदाः ॥ २२५ ॥
सहस्राक्षोऽश्रुपूर्णाक्षः प्रणम्याथ जगद्गुरुम् । विरचय्यांजलिं मूर्ध्नि ससंभ्रममदोऽवदत् ॥ २२६ ॥
गर्भे जन्मनि दीक्षायां केवले च तव प्रभो । हस्तोत्तरर्क्षमधुना तूजन्ता भस्मकग्रहः ॥ २२७ ॥
विपद्यमानस्य जन्मऋक्षं क्रामन् स दुर्ग्रहः । वाधिष्यते ते सन्तानं सहस्रे शरदामुभे ॥ २२८ ॥
प्रतिपालय तन्नाथ तस्य[3] संक्रमणक्षणम् । स यथा त्वत्प्रभावेण विफलो भवति ग्रहः ॥ २२९ ॥
कुस्वप्नाः कुशकुनानि दुर्ग्रहा यान्ति शस्तताम् । अन्येषामपि सर्वेषां हृदि त्वां धारयन्ति ये ॥ २३० ॥
किं पुनर्यत्र साक्षात्त्वं स्वामिन् समवतिष्ठसे । प्रसीद तत् क्षणं तिष्ठ दुर्ग्रहोपशमोऽस्तु तत् ॥ २३१ ॥
स्वाम्यथोचे न कोऽप्यायुः शक्र सन्धातुमीश्वरः । विदन्नपि वदस्येवं किं तीर्थप्रेममोहितः ॥ २३२ ॥
प्रवर्तनाद्दुःषमायास्तीर्थबाधा भविष्यति । भवितव्यतानुसाराद्भस्मकस्योदयोऽप्यभूत् ॥ २३३ ॥
वज्रिणं वोधयित्वैवं सार्धषण्मासवर्जिताम् । त्रिंशदब्दीं केवलित्वे परिपाल्य जगद्गुरुः ॥ २३४ ॥
पर्यंकासननिषण्णो योगे कायस्य[4] वादरे । स्थितो वाङ्मनसयोगावरौत्सीदथ वादरौ ॥ २३५ ॥

---

१ स्वातिनक्षत्रे । २ प्रश्नरहित यथा स्यात्तथा व्याक्रियन्त इति तथा । ३ दुर्ग्रहस्य । ४ कायस्य वादरे योगे वादरकाययोगे इति यावत, स्थितः सन् वादरौ वाङ्मनसयोगावरौत्सीदित्यन्वयः ।

सूक्ष्मं च वपुषो योगमास्थाय परमेश्वरः । रुरोध बादरं काययोगं योगविचक्षणः ॥ २३६ ॥
तौ च सूक्ष्मौ वाङ्मनसयोगावप्यरुणत्प्रभुः । इति सूक्ष्मक्रियं शुक्लध्यानं चक्रे तृतीयकम् ॥ २३७ ॥
अपि सूक्ष्मं तनूयोगं विनिरुध्य जगद्गुरुः । समुच्छिन्नक्रियं शुक्लध्यानं तुर्यं दधावथ ॥ २३८ ॥
पंचह्रस्वाक्षरोच्चारमितकालेन तेन तु । ध्यानेन तुर्येण तुर्यपुमर्थाव्यभिचारिणा ॥ २३९ ॥
एरंडबीजवद्बन्धाभावादूर्ध्वगतिः प्रभुः । यथा स्वभावऋजुना मोक्षमेकमुपाययौ ॥ २४० ॥
नारकाणामपि तदा क्षणमेकमभूत् सुखम् । न ये सुखलवस्यापि कदाचिदपि भाजनम् ॥ २४१ ॥
वत्सरोऽभूत्तदा चैन्द्रो मासस्तु प्रीतिवर्धनः । नन्दिवर्धनकः पक्षोऽग्निवेशो नाम वासरः ॥ २४२ ॥
सोऽन्येन नाम्नोपशमो देवानन्दा तु सा निशा । नैर्ऋतीत्यन्यनाम्ना तु लवोऽर्च्य इति संज्ञया ॥ २४३ ॥
प्राणः शुक्लाभिधानश्च स्तोकः शुद्धाभिधानकः । सर्वार्थसिद्धो मुहूर्तो नागाख्यं करणं पुनः ॥ २४४ ॥
तदानीं च समुत्पन्ना नाम्ना कुंथुरनुद्धरा । अस्पंदा सा न दृग्ग्राह्या स्पन्दमाना तु दृश्यते ॥ २४५ ॥
संयमोऽतः परं भावी दुष्पाल इति चिन्तया । तां दृष्ट्वा साधवः साध्व्यो बहवोऽनशनं व्यधुः ॥२४६॥
निर्वाणे स्वामिनि ज्ञानदीपके द्रव्यदीपकान् । तदानीं रचयामासुः सर्वेऽपि पृथिवीभुजः ॥ २४७ ॥
तदाप्रभृति लोकेऽपि पर्व दीपोत्सवाभिधम् । सर्वतो दीपकरणात्तस्यां रात्रौ प्रवर्तते ॥ २४८ ॥
जगद्गुरोर्वपुर्नत्वा बाष्पायितदृशः सुराः । अदूरे तस्थुरथ ते शोचन्तः स्वमनाथकम् ॥ २४९ ॥

---

१ समुच्छिन्ना क्रिया यस्मिंस्तत् । २ तुर्यश्चतुर्थः पुमर्थो मोक्षः । ३ चन्द्रनामा संवत्सरः । ४ स वासरोऽन्येन नाम्ना उपशम उपशमनामा । ५ सूक्ष्मजन्तुविशेषः कुंथुः । ६ उद्धर्तुमशक्या ।

यद्वादितोऽपि भ्रान्तोऽहं यद्रागं रागवर्जिते । ममत्वं निर्ममे चास्मिन् कृतवानीदृशो प्रभौ ॥ २७८ ॥
रागद्वेषप्रभृतयः किं चामी भवहेतवः । हेतुना तेन च त्यक्तास्तेनापि परमेष्ठिना ॥ २७९ ॥
ईदृशे निर्ममे नाथे ममत्वेन ममाप्यलम् । ममत्वं सममत्वेऽपि मुनीनां न हि युज्यते ॥ २८० ॥
एवं शुक्लध्यानपरः क्षपकश्रेणिभाक् क्षणात् । घातिकर्मक्षयात्प्राप केवलं गौतमो मुनिः ॥ २८१ ॥
तत्र द्वादशवत्सरीं क्षितितले भव्यान् प्रबोध्योच्चकैः स्वामीवामलकेवलर्द्धिरमरैरभ्यर्चितो गौतमः ।
गत्वा राजगृहे पुरे कृतभवोपग्राहिकर्मा प्रभुर्भूत्वा मासमुपोषितः पदमगादक्षीणशर्मास्पदम् ॥ २८२ ॥
मुक्ते[1] तत्र च पंचमो गणधरो लब्ध्वा सुधर्मप्रभुर्ज्ञानं पंचममन्वशाच्चिरतरं धर्मं जनान् क्ष्मातले ।
प्राप्तो राजगृहाभिधाननगरे निःशेषमप्यन्यदा जंबूस्वामिमुनेरधीनमनघं संघं निजं निर्ममे ॥ २८३ ॥
तस्मिन्नेव पुरे सुधर्मगणभृत्क्षीणाष्टकर्मा क्रमात्तुर्यध्यानधरोऽपुनर्भवमगादद्वैतसौख्यं पदम् ।
पश्चादन्तिमकेवली क्षितितले श्रीवीरमार्गाग्रणीर्धर्मं भव्यजनान् प्रबोध्य सुचिरं जंबूप्रभुश्चान्यदा ॥२८४॥
त्रैलोक्येऽपि हि सात्विकेष्वनवधेः प्राग्जन्ममोक्षावधि श्रीमद्वीरजिनेश्वरस्य चरितं को वक्तुमीशोऽखिलम् ।
अस्ताघस्य तथापि हि प्रवचनांभोधेर्गृहीत्वा लवं किंचित्कीर्तितमीदृशं ननु मया स्वान्योपकारेच्छया ॥२८५॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये दशमे पर्वणि श्रीमहावीरनिर्वाण-
गमननवर्णनो नाम त्रयोदशः सर्गः ॥

---

१ तत्र गौतमे मुक्ते सति ।

कृत्वा स्थानकवृत्तिशान्तिचरिते प्राप्तः प्रसिद्धिं परां सूरिर्भूरितपःप्रभावक्सतिः श्रीदेवचन्द्रोऽभवत् ॥१४॥
आचार्यो हेमचन्द्रोऽभूत्तत्पादांबुजषट्पदः । तत्प्रसादादधिगतज्ञानसंपन्महोदयः ॥ १५ ॥
जिष्णुश्चेदिदशार्णमालवमहाराष्ट्रापरान्तंकुरून् सिन्धूनन्यतमांश्च दुर्गविषयान् दोर्वीर्यशक्त्या हरिः ।
चौलुक्यः परमार्हतो विनयवान् श्रीमूलराजान्वयी तं नत्वेति कुमारपालपृथिवीपालोऽब्रवीदेकदा ॥१६॥
पापर्द्धिद्यूतमद्यप्रभृति किमपि यन्नारकायुर्निमित्तं तत्सर्वं निर्निमित्तोपकृतिकृतधियां प्राप्य युष्माकमाज्ञाम् ।
स्वामिन्नुर्व्यां निषिद्धं धनमसुतमृतस्याथ मुक्तं तथार्हच्चैत्यैरुत्तंसिता भूरभवमिति समः संप्रतेः संप्रतीह ॥१७
पूर्वं पूर्वजसिद्धराजनृपतेर्भक्तिस्पृशो याञ्चया सांगं व्याकरणं सुवृत्तिसुगमं चक्रुर्भवन्तः पुरा ।
मद्धेतोरथ योगशास्त्रममलं लोकाय च द्याश्रयच्छन्दोऽलंकृतिनामसंग्रहमुखान्यन्यानि शास्त्राण्यपि ॥१८॥

लोकोपकारकरणे स्वयमेव यूयं सज्जाः स्थ यद्यपि तथाप्यहमर्थयेऽदः ।
मादृग्जनस्य परिबोधकृते शलाकापुंसां प्रकाशयति वृत्तमपि त्रिषष्टेः ॥ १९ ॥
तस्योपरोधादिति हेमचन्द्राचार्यः शलाकापुरुषेतिवृत्तम् ।
धर्मोपदेशैकफलप्रधानं न्यवीविशच्चारुगिरां प्रपंचे ॥ २० ॥

जंबूद्वीपारविन्दे कनकगिरिरसावश्नुते कर्णिकात्वं
यावद्यावच्च धत्ते जलनिधिरवनेरन्तरीयत्वमुच्चैः ।
यावद्व्योमाध्वपान्थौ तरणिशशधरौ भ्राम्यतस्तावदेतत्काव्यं
नाम्ना शलाकापुरुषचरितमित्यस्तु जैनं धरित्र्याम् ॥ २१ ॥

इति श्रीत्रिषष्टिशलाकापुरुषचरित्रे

दशमं पर्व

समाप्तम्